SARASVATĪBHAVANA-STUDIES

[ Vol. 30 ]

# NIPĀTĀRTHANIRṆAYA

By

DR. HARISH CHANDRA MANI TRI.

Publication officer

Sampurnanand Sanskrit University

Varanasi



VARANASI

1990

Research Publication Supervisor—
**Director, Research Institute,**
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi-221 002.

[This thesis has been approved for the "*Vidyāvāridhi*" (P-H. D.) degree of Sampurnanand Sanskrit University and has been published out of generous grant from "*University Grants Commission*" New Delhi]

●

Published by—
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi—221 002.

●

Available at—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi—221 002.

●

First Edition—1000 copies
Price—Rs. 60.00

●

Printed at—
**Tara Printing Works**
Kamaccha, Varanasi

सरस्वतीभवन-अध्ययनमाला

[ ३० ]

# निपातार्थनिर्णयः

प्रणेता सम्पादकश्च

डॉ० हरिश्चन्द्रमणित्रिपाठी

प्रकाशनाधिकारी,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी



वाराणस्याम्

२०४६ तमे वैक्रमाब्दे १९११ तमे शकाब्दे १९९० तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः —
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी-२२१ ००२

[ अनुसन्धानप्रबन्धोऽयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन "विद्यावारिधिः" (पी-एच० डी०) इत्युपाध्यर्थं स्वीकृतः, विश्वविद्यालय-अनुदान-आयोगतो लब्धेनार्थिकसाहाय्येन प्रकाशितश्च ]

●

प्रकाशकः —
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी-२२१००२.

●

प्राप्तिस्थानम्—
विक्रय-विभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी—२२१ ००२.

●

प्रथमं संस्करणम्—१००० प्रतिरूपाणि
मूल्यम्—६० = ०० रूप्यकाणि

●

मुद्रकः—
तारा प्रिंटिंग वर्क्स,
कमच्छा, वाराणसी

# प्ररोचना

निपाताः खलु प्रातिपदिकविशेषाः। एते प्रातिपदिकवत् स्वतन्त्रमर्थं न वहन्ति, प्रत्ययवत् परावलम्बित्वमपि न भजन्ते। उभयोर्मध्य एषां स्थितिः। अंशत इमे वाचकाः, अंशतश्च द्योतकाः। अत एवैषामर्थनिर्धारणे महती विप्रतिपत्तिर्दृश्यते। सन्दर्भसापेक्षत्वमेवैषामर्थशाखाप्रशाखात्वं भजते। तासां शाखाप्रशाखानां प्रसङ्गपूर्वकं विवृतिरेव प्रस्तूयमानस्य **'निपातार्थनिर्णयः'** इत्याख्यस्य ग्रन्थस्य प्रयोजनम्। उपसर्गाणां विशेषेणात्र न केवलमर्थाः स्फोरिताः, तेषां सहचारिणो धातवोऽपि सङ्गृहीताः। अनेनास्य ग्रन्थस्य महिमोपचीयते।

प्रथमेऽध्याये निपातानामैतिहासिको विकासक्रमः प्रदर्शितः। द्वितीयेऽध्याये उपसर्ग-निपाताव्ययानां परस्परं समावेशो व्यावर्तनञ्चोभयं पर्यालोचितम्। तृतीयेऽध्याये निपातानां द्योतकत्व-वाचकत्वविषये व्याकरणशास्त्रसिद्धान्ताः सुनिपुणं विमृष्टाः। चतुर्थेऽध्याये उपसर्गाणां तेषामर्थानाञ्च निर्धारणं कृतम्। पञ्चमेऽध्याये अकारादिक्रमेण निपातानामर्थनिर्धारणं प्रयोगपूर्वकं सम्पन्नम्। एवं सामग्र्येणैष ग्रन्थः संस्कृताध्येतॄणां कृते महानुपकारक इति ग्रन्थप्रणेतारं **डॉ० हरिश्चन्द्रमणित्रिपाठिनं** शुभाशीर्वचोभिः संवर्धयामीति दिक्।

वाराणस्याम्,
**हरिप्रबोधिन्येकादश्याम्,**
२०४७ वैक्रमाब्दे
(.३०।१०।१९९० )

**विद्यानिवासमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

# संस्तवः

डॉ० हरिश्चन्द्रमणित्रिपाठिना प्रणीतो 'निपातार्थनिर्णयः' इत्यभिधानो ग्रन्थो मया सस्नेहं दृष्टिविषयतां नीतः। सत्यमेव ग्रन्थकृता भाषाविज्ञानस्य व्याकरणशास्त्रेण सह सामरस्यं वर्तत इति प्रतिपादयता भाषाविज्ञानशास्त्रेऽपि स्वीयप्रातिभाधिकारः सोसूच्यते। आधुनिके युगे भाषाविज्ञानमपि शास्त्रपदवीमाटीकमानमद्यतनप्राच्य-पाश्चात्त्यविद्वत्समाजे महतीं प्रतिष्ठामादधानं राराजीति। भाषाविज्ञानं नाम भाषानुशासनं व्यवस्थिताव्यवस्थितनियमविशेषात्मकम्। तच्च वस्तुतो व्याकरण-शास्त्रेणैव (पाणिनीयेन) प्रपूर्यते। यथा कश्चन दुग्धपूर्णो घटोऽगाधे गङ्गादिजले प्रक्षिप्येत, तदीयं दुग्धं तदैव सुरक्षितं स्यात्, यदा घटस्य मुखं वस्त्रेणाच्छादितम्, दृढरज्ज्वादिना वेष्टितं च भवेत्। तथैव भाषाऽपि व्याकरणबन्धनेन यदि सुबद्धा स्यात्, तदा लोके चिरस्थायिनी स्यात्, अन्यथा तदीयमस्तित्वं नैव सम्भवेत्।

अतश्च व्याकरणशास्त्रविदो भाषाशास्त्रमपि जानीयुरिति नितरामावश्यकमिति सहृदयानां व्युत्पत्तिमतां विदुषां सिद्धान्तः। भाषाविज्ञानस्य बीजवपनं प्रातिशाख्येषु, गृह्यसूत्रेषु, महर्षियास्कनिर्मिते निरुक्ताभिधे ग्रन्थे, महामुनिपाणिनिप्रणीताष्टाध्याय्याम्, महाभाष्ये च बहुशः कृतमस्ति। नहीदमपूर्वं शास्त्रम्, अपि तूप्तबीजकमेव। अन्वेषणे विहिते सति अङ्कुरितं भूत्वा बहुशाखवृक्षात्मना पल्लवितं पुष्पितं फलितं च भवितु-मर्हति। मन्येऽधुनातनैर्विद्वद्भिर्विशेषतः पश्चिमदेशीयैरेतद्विषये सोत्साहं प्रयतमानै-र्भाषाविज्ञानबीजस्याङ्कुरितावस्था नूनं सम्पादिता। बहव आधुनिका विद्वांस एवमाक्षिपन्ति यत् सन्ति बहवः शब्दाः, येषां साधने व्याकरणं न क्षमते, इति।

अत्रोच्यते—ईदृशाक्षेपा नितान्तं भ्रममूलका एव। सन्ति चैतादृशा व्याकरण-शास्त्रीया नियमाः, यैः परःसहस्रं तादृशाः शब्दाः साधयितुं शक्यन्ते। यथा—**'पृषोदरा-दीनि यथोपदिष्टम्'** (अष्टा० ६।३।१०९), **'उणादयो बहुलम्'** (अष्टा० ३।३।१), **'सह सुपा'** (अष्टा० २।१।४) **'मयूरव्यंसकादयश्च'** (अष्टा० २।१।७२) इत्यादयः। यतो हि शब्द-नित्यत्ववादिनां शाब्दिकाचार्याणां मते शब्दानां निष्पत्तिर्व्याकरणेन न विधीयते; अपि तु तेषां साधुत्वं ज्ञाप्यते। अतश्च शिष्टैर्यादृशशब्दस्य रूपमुच्चारितं भवति, व्याकरणेन तस्य साधुत्वमात्रं बोध्यते। एवं चापशब्दानामसाधुत्वं सुतरां ज्ञातं भवति। अष्टाध्याय्या अपि प्रयोजनमेवं सत्युक्तं भगवता पतञ्जलिना—**'शिष्टपरिज्ञानार्था अष्टाध्यायी'** इति। शिष्टानां लक्षणं तत्रैव भाष्ये उक्तमस्ति। वाक्यपदीये ब्रह्मकाण्डेऽपि—**'शब्दतत्त्वविदः शिष्टाः शब्दार्थेषु व्यवस्थिताः'** इत्युक्तमस्ति।

एवञ्च, शिष्टद्वारा **'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः, स्वर्गे लोके च कामधुग् भवति'** इत्यपि पर्यालोचनीयम्। व्याकरणानुमोदितसंस्कृतसाहित्यं द्वारीकृत्यैव— 'सगर-सागर-पृथ्वी-अहल्या-मान्धाता-नारीकवच-सहस्राक्ष-गोत्रभिद् - परीक्षित्-विपाशा-शतद्रु-जरासन्ध-श्रोत्रिय-हयग्रीव - कार्तिकेय - वृन्दारण्य-वाजसनेय - तैत्तिरीय-भरद्वाज-शान्तनु-शकुन्तला-वैश्रवण-रावण - क्रौञ्चरन्ध्र-पार्वती-क्षत्रिय-प्रभृतिशब्दरत्नानि विविध-देशकालसम्बन्धीनि भूगोलेतिहासविषयकाणि विविधतथ्यानि प्रकाशयितुं सामर्थ्यमा-वहन्ति। फलतोऽनुभूयतेऽस्माभिः—

**यथा यथा हि पुरुषो व्याकृतिमवगाहते।**
**तथा तथा हि भाषाया विज्ञानं सम्प्रकाशते॥** इति।

एवञ्च भाषाविज्ञानस्याजस्रं स्रोतो व्याकरणपर्वतात् प्रवहति, तस्याज्ञानमेव भाषाविकासे प्रतिबन्धकं निभाल्यताम्। तस्यापसारणेनैव भाषाविज्ञानस्य धारा तथैव मनोहरा दर्शनीया च स्यात्, यथा सुरधुन्या भगवत्या गङ्गायाः।

अस्तु, नामास्य भाषाविज्ञानस्य निखिलो बीजराशिः प्राचुर्य्येण पाणिनीये व्याकरणे प्राप्तुं शक्यते। यथा च प्रागेवोक्तमिदानीम्—**'पृषोदरादीनि यथोपदिष्टम्'** इति। तत्रोपदिश्यते भगवता भाष्यकृता—

**भवेद् वर्णागमाद्धंसः सिंहो वर्णविपर्ययात्।**
**गूढोत्मा वर्णविकृतेर्वर्णनाशात् पृषोदरम्॥** इति।

पृषोदरादिगणपठितानि शब्दरूपाणि शिष्टैर्यथोच्चार्यन्ते, तथैव तानि साधुत्वं भजन्ति। यथा पृषदुदरं-पृषोदरम्, तकारलोपोऽत्र द्रष्टव्यः। वारिवाहको बलाहकः, पूर्वपदस्य 'ब' आदेशः, उत्तरपदादेश्च लत्वम्। जीवनस्य मूतः, जीमूतः, वनशब्दस्यात्र लोपः। शवानां शयनं श्मशानम्, शवस्य श्मादेशः, शयनस्य शानादेशः। ऊर्ध्वं खमस्य ऊलूखलम्, ऊर्ध्वशब्दस्पोलू-आदेशः, खशब्दस्य खलादेशः। **'दिक्शब्देभ्य-स्तीरस्य तारभावो वा'** (वा० १४८५) दक्षिणतारम्, दक्षिणतीरम्। ब्रुवन्तोऽस्यां सीदन्ति वृसी, ब्रुवच्छब्दस्य वृ-आदेशः, सदेरधिकरणे डट्। आकृतिगणोऽयम्। एवं मयूराश्वत्थकपित्थप्रभृतिशब्दा बोध्याः।

**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥**

शिष्टानां व्यवहारेण वर्णागमादयः कल्पनीयाः। अत्र वर्णागमः, वर्णविपर्ययः, वर्णविकृतिः, वर्णनाशः, इत्येते चत्वारः प्रकाराः पृषोदरादेराकृतिगणत्वादनवधिक-शब्देषु प्रवृत्तिमर्हन्ति।

एवमेव सूत्रान्तरेभ्योऽनिष्पन्नाः कृदन्तशब्दाः **'उणादयो बहुलम्'** इति समष्ट्या साधयितुं शक्यन्ते। तत्र प्रकृति-प्रत्ययनियमपरिहाराय बहुलग्रहणम्। बहूनर्थान् लाति, आदत्ते, इति बहुलम्। उक्तं च—

**क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्यदेव।**
**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥**

**बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम्।**
**कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु॥**

**नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्।**
**यन्न विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम्॥**

**संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।**
**कार्याद् विद्यादनूबन्धमेतच्छास्त्रमुणादिषु॥ इति।**

व्याख्यातं च भगवता पतञ्जलिना—'डित्थ-डवित्थादिशब्देषु धातुरूपाणि प्रत्ययाश्च यथासम्भवमूह्याः'[1] इत्यादि। अनया दिशा भाषाविज्ञानबीजानि द्रष्टव्यानि।

प्रियेण **डॉ० हरिश्चन्द्रमणित्रिपाठिना**ऽस्मिन् ग्रन्थे भाषाशास्त्रविषयिणी या चर्चा कृताऽस्ति, तत्सम्बन्धे यानि चोदाहरणानि समुपस्थापितानि, तत्पर्यालोचनेन वयं सुदृढं प्रतीमः, यत्तदीयमध्ययनमेतद्विषयेऽपि, तदीयोऽनितरसाधारणोऽधिकारोऽप्यत्र वर्तते। आधुनिकभाषाशास्त्रविदामनुरोधेन तदीयसमादरदृष्ट्या च 'भारोपीयभाषायाः' कथञ्चित् क्वचित् क्वचिदुपन्यासमुद्रया परोक्षं समर्थनं कृतमनेन।

अस्तु, निपातानां संख्याविषयेऽर्थविषये च इयत्ताया अत्यन्ताभावं दर्शयता डॉ० त्रिपाठिनाऽस्य ग्रन्थस्य प्रथमाध्याये प्रमाणानां निरूपणे व्याख्याने च साधु प्रयतितम्। तथा हि—

**इयन्त इति संख्यानं निपातानां न विद्यते।**
**प्रयोजनवशा ह्येते निपात्यन्ते पदे पदे॥ इति।**

बृहद्देवताग्रन्थे शौनकाचार्यवचनमिदमुद्धृतम्। एवमेव निपातानां विषये संस्कृतभाषाऽर्णवस्य मन्थनाद् बहूनि सिद्धान्तरत्नानि निःसरन्ति। बहुत्र संस्कृत-वाङ्मये सिद्धान्तोऽयं सिद्धान्तितो वर्तते यत् **'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्ति'** इति। अयमाशयः—उपसर्गप्रतिरूपकाः, विभक्तिप्रतिरूपकाः, स्वर-प्रतिरूपकाश्च निपाता भवन्ति। तत्राद्यानामुदाहरणानि अवस्तात्, परस्तात्, परितः, अभितः, अभिकः, इत्यादीनि। एतेषां प्रकृतय उपसर्गा एव, ते च प्रत्ययवन्तः सञ्जाताः।

---

१. म० भा० ३।३।१।

द्वितीयानां विभक्तिप्रतिरूपकाणामुदाहरणानि—अहम्, शुभम्, चिरेण, चिरात्, प्रायेण, आरात्, स्थाने, अस्ति, नास्ति, विद्यते, असि, अस्मि, स्यात्, इत्यादीनि। विभक्तिपदं सुप्तिङुभयपरम्।

स्वरप्रतिरूपकाणामुदाहरणानि—अ, आ, इ, ई, उ, ऊ, ए, ऐ, ओ, औ—इत्यादीनि। एतानि सम्बोधन-विस्मय-वितर्काद्यसत्त्वार्थवचनानि। विहितसन्धिकार्या निपाताः स्वतन्त्रा एव निपातत्वेन गण्यन्ते। यथा इह + उ = इहो, आ + उ = ओ, न + इत् = नेत्, सा + उ = सो, कत् + चन = कच्चन इत्यादीनि।

एवं च निपातयोर्निपातानां वा संश्लेषेण या नूतनाऽऽकृतिरुदेति, तस्या निपाताभिख्या स्वाभाविक्येव, यतो हि सवर्गीयः स संश्लेषः। विवर्गीयस्य सन्धेः क्वचिद्धातुसंज्ञाऽपि दृश्यते। यथा—संग्राम युद्धे। सम् + ग्राम = संग्रामयते। वीर विक्रान्तौ, वि + ईर = वीरयते। स्वद आस्वादने। सु + अद् = स्वदते—इत्यादिः।

एवमेव दैन्य-विस्मय-वितर्क-प्रलापादीनामतिशयाभिव्यञ्जका बहवो निपाता मन्त्रश्लोकाद्यन्तर्गततया समुदाहृताः।

द्योतकत्व-वाचकत्वपक्षावाश्रित्य सप्रमाणं बहु व्याख्यातम्। प्रसङ्गोपात्ताः संस्कृतवाङ्मये लब्धप्रसराः केचनानुकरणमूलका अपि निपाता अत्र विमृष्टाः। यथा **'अक्खली'** इति निपातो मण्डूकानामव्यक्तशब्दार्थे। **'अलला'** इति नदीप्रपतनजन्यशब्दानुकरणेऽर्थे। **'किकिरा'** जर्जरीभूतपावकध्वन्यनुकरणे। एवं **'जञ्झना'**, **'मस्मसा'**, **'सीत्'**, **'हिङ्'**, **'फूत्'**—प्रभृतयो निपातास्तादृशा बोध्याः।

कतिपयनिपातघटितनाम्नामुदाहरणमतिशयितं महत्त्वं ग्रन्थगौरवं च प्रकाशयति। यथा 'सना-सनत्' निपाताभ्यां 'सनातनः', 'सनत्कुमारः' इति नामद्वयं साक्षाद् ब्रह्मर्षिवाचकम्, 'सनक-सनन्दन' इत्यस्मिन् नामद्वयेऽपि सनशब्द आदेशात्मना साक्षाद्वा निपातपदबोध्यतां भजत एव। अतश्च सनक-सनन्दन-सनातन-सनत्कुमार इत्येते चत्वारो ब्रह्मदेवस्य पुत्रा ब्रह्मर्षिपदभाजो निपातसंज्ञकसना-सनत्-आदिशब्दघटितनामधेयवाच्याः पुराणेषु बहुत्र प्रसिद्धाः स्वनामद्वारा निपातानां बह्वर्थताप्रयुक्तं प्राशस्त्यं वर्धयन्ति। उक्तं च श्रीमद्भागवते—

**तप्तं तपो विविधलोकसिसृक्षया यः।**
**आदौ सनात् स्वतपनः स चतुःसनोऽभूत्**[1]॥ इति।

वामनपुराणेऽपि—

**धर्मस्य भार्या हिंसाख्या तस्यां पुत्रचतुष्टयम्।**
**सम्प्राप्तं मुनिशार्दूल योगशास्त्रविचारकम्॥**

---

१. श्रीमद्भागवतम्—२।७।५।

ज्येष्ठः सनत्कुमारोऽभूद् द्वितीयश्च सनन्दनः ।
तृतीयः सनको नाम चतुर्थश्च सनातनः[1] ॥ इति ।

सनत्कुमारशब्दस्य व्युत्पत्तिं प्रदर्शयन् क्षीरस्वामी कथयति[2] यत् सनत् = नित्यं कुमारस्तेन सनत्कुमार इति नाम्ना प्रख्यातिरभवत् । इत्येवं स्थले स्थले मनोहराणि शिक्षाप्रदानि भूगोलेतिहासतत्त्वप्रकाशकानि भूयांसि मन्त्र-पद्यात्मकानि उदाहरणानि तत्र तत्र दर्शं दर्शं चेतो मे नितरां प्रासीदत् । विषयस्तु अतीवगहनः । एतस्मिन् विषये महामुनिः पाणिनिरपि अर्थानामुदाहरणानां च प्रदर्शने 'नेति नेति' प्रोवाच, तर्हि अन्येषां का कथा ? तथा हि—

पाणिनिश्चाह भगवान् अर्थान् एषां बहूँस्तथा ।
उदाहरणमेतेषां बाहुल्यान्न प्रदर्शितम्[3] ॥ इति ।

तदिदं व्याकरणशास्त्रे कृतभूरिपरिश्रमस्य डॉ० हरिश्चन्द्रमणित्रिपाठिनो विद्यावारिधिरित्युपाधिमण्डितस्य **'निपातार्थनिर्णयः'** इति विषयमधिकृत्यानुसन्धानपूर्णस्य परिशीलनसमेधितस्य प्रबन्धस्य विषये संस्तवं लिखन्नहं यादृशं प्रमोदमनुभवामि, तं प्रकटीकरणे मदीया लेखन्यक्षमा ।

प्रबन्धस्यास्य प्रणयनदिनेषु प्रायः श्रीहरिश्चन्द्रमणिः समये समये संकलितस्य लेखबद्धस्य प्रबन्धस्य सर्वान् भागानादितोऽन्तपर्यन्तं मां श्रावयति स्म । मया च ध्यानपूर्वकं सर्वमंशं श्रावं श्रावं तदैवैतस्यानुसन्धानकार्यं भूरिशः प्राशंसम् ! यदा कदा चाधुनिकभाषाविज्ञान-भाषाशास्त्रानुसारं मदीयं स्वल्पज्ञानाधीनं पक्षमपि तस्मै किलासूचयम् । तदा मया ज्ञातं तदत्रैतादृश्यो बह्व्यः सामग्र्यः सन्ति, यासां विषये व्याकरणशास्त्रस्य च्छात्रः सन्नपि, भाषाविज्ञानाध्ययनाध्यापनकर्मणि संलग्नोऽपि, निपातोपसर्गादिविषये ब्राह्मणारण्यकोपनिषन्निरुक्तादिपठन-पाठनतत्परोऽपि, वैदिकप्रातिशाख्याध्ययने कृतश्रमोऽपि, पाणिनि-कात्यायन-पतञ्जलि-जयादित्य-वामनादिकृतव्याकरणशास्त्रसम्बन्धिग्रन्थविहितपरायणोऽपि **श्रीहरिश्चन्द्रानु**शीलितनिपातसम्बन्धिप्रचुरपक्षाणामनेकेषां विषयाणां सम्बन्धे नितान्तमनभिज्ञोऽहमासम् ।

तदैवाहमन्वभवं यद्यथा पद-पदार्थसूक्ष्मपर्यालोचनदृशा, यथा च विषयपरीक्षण-निरीक्षण-विमर्शनप्रज्ञया, अनुसन्धानानुकूलकृतभूरिपरिश्रमेण चाभिनिवेशेन च श्रीत्रिपाठी प्रबन्धमेनं यतः समालोचनविवेकसंवलितं निरमापयत्, अतो नूनमेवास्मिन् क्षेत्रेऽयं सन्दर्भग्रन्थो विशिष्टोऽपूर्वश्च भवितेति ।

---

१. वामनपुराणम्—५७।३।५; २. अमरकोष —१।१।५१ ।
३. ऋग्वेदानुक्रमणी—३।७।१६ ।

सोऽयं गवेषणातत्त्वपूर्णः प्रबन्धः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयद्वारा प्रकाश्यत इति नूनमेव व्याकरणशास्त्र-भाषाविज्ञानविषये जिज्ञासूनां कृते प्रशंसास्पदं प्रेरणा-समुत्पादकं च भविष्यतीत्याशासे ।

एवंविधानुसन्धानग्रन्थप्रणयनार्थं श्रीहरिश्चन्द्रमणिं शोधकर्तृमणिं संवर्धयितुं भूरिश आशीर्वादान् वदामि, कामये च यदवश्यमेव तस्य समर्था लेखनी भविष्यत्सु दिनेषु एतादृशान् अनुसन्धानपूर्णान् ग्रन्थान् रचयित्वा विदुषामाशीर्वचनभाजनत्व-मुपगमिष्यतीति ।

करुणापतित्रिपाठी
कुलपतिचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
अध्यक्षश्च,
उत्तरप्रदेशीय-संस्कृताकादम्याः

काश्याम्,
वसन्तपञ्चम्याम्,
वि० सं० २०४६

# मङ्गलाभिशंसनम्

वेदोदीरितयागदानादिजनितक्षयातिशययोगिसुखेभ्यो विरज्यन्तो निसर्गतः प्रतिकूलस्वभावं सर्वजनसंवेदनसिद्धं दुःखं जिहासवः, नित्यनिरतिशयानन्दमभीप्सवो लोकाः **"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"** (श्वे० उ० ३ ८) इति श्रुत्या साधनान्तरस्य निराकृततयाऽऽत्मतत्त्वसाक्षात्कारमेव तत्साधनतया निश्चिन्वन्ति। तच्चात्मतत्त्वं **"अयमात्मा ब्रह्म"** (नृ० उ० १।२) इति श्रुत्या ब्रह्मरूपतया प्रतिपादितमस्ति। ब्रह्म च **"सच्चिदानन्दं ब्रह्म"** (नृ० उ० ७।५), **"नित्यं विज्ञानमानन्दं ब्रह्म", "वाग्वै ब्रह्म"** (जै० उ० २।५।१) इत्यादिश्रुतिभिः सद्रूपतया चिद्रूपतया आनन्दरूपतया वाग्रूपतया च संकेतितं वर्तते। एतत्स्वरूपलक्षण-लक्षितस्य नित्यनिरतिशयानन्दरूपस्य शब्दब्रह्मणो मानसप्रत्यक्षमेव महते मङ्गलाय कल्पते। एतच्च शब्दब्रह्म वेदेषु चतूरूपेणोद्गीयमानं विभाति। तथा हि ऋग्वेदे—

**चत्वारि वाक्परिमिता पदानि**
**तानि विदुर्ब्राह्मणा ये मनीषिणः।**
**गुहा त्रीणि निहिता नेङ्गयन्ति**
**तुरीयं वाचो मनुष्या वदन्ति॥** (ऋ० वे० १।१६४।४५)

परा-पश्यन्ती-मध्यमा-वैखरीभेदेन पदानां चातुर्विध्यं व्यवस्थापितम्। तत्र परादिमध्यमान्तानि त्रीणि वाक्तत्त्वानि अन्तर्निविष्टानि सन्ति। वैखरीनामकं तुरीयं वाक्तत्त्वं मनुष्यैर्व्यवह्रियमाणमनुभूयते।

तत्र परादित्रितयस्यान्तर्निवेशः, वैखर्या मुखतः प्रादुर्भावः स्पष्टीकृतो वर्तते वैयाकरणसिद्धान्तलघुमञ्जूषादिग्रन्थेषु—

**परा वाङ्मूलचक्रस्था पश्यन्ती नाभिगा स्मृता।**
**हृदिस्था मध्यमा ज्ञेया वैखरी स्यात्तु कण्ठगा॥**

अयमाशयः—प्राणिनां मूलाधारे पराख्यवाक्तत्त्वमभिव्यज्यते। तदभिव्यञ्जने संस्कृतपवनस्य चलनं कारणं भवति। ज्ञातस्यार्थस्य विवक्षयोत्पन्नेन प्रयत्नेन योग एव मूलाधारस्थपवनसंस्कारः, तदभिव्यक्तं शब्दब्रह्म स्वस्मिन्नेव प्रतिष्ठमानं निष्पन्दं **'परा वाक्'** इत्युच्यते। तदुक्तं श्रीहरिणा—

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः'॥**[1]

---

१. वा० प० १।१।

तदेव नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्तं मनोविषयः **'पश्यन्ती'** इत्युच्यते। एतद्द्वयं सूक्ष्मतम-सूक्ष्मतरमीश्वराधिदैवं योगिनां समाधौ निर्विकल्पक-सविकल्पकज्ञानविषय इत्युच्यते।

तदेव हृदयपर्यन्तमागच्छता तेन वायुना हृदयदेशेऽभिव्यक्तं तत्तदर्थविशेष-तत्तच्छन्दविशेषोल्लेखिन्या बुद्ध्या विषयीकृता हिरण्यगर्भदेवत्या परश्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा **'मध्यमा वाक्'** इत्युच्यते।

सैव चास्यपर्यन्तमागच्छता तेन वायुना कण्ठदेशं गत्वा मूर्धानमाहत्य परावृत्त्य तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या विराडधिदेवत्या **'वैखरी वाक्'** इति संकीर्त्यते। तत्र **'चत्वारि वाक्परिमिता पदानि'** इति ऋङ्मन्त्रस्य भाष्यकृता श्रीमाधवाचार्येण चत्वारि पदानि इत्यनेन परा-पश्यन्ती-मध्यमा-वैखरीरूपाणि दर्शितानि।

महाभाष्यकृता महामुनिना पतञ्जलिना तु नामाख्यातोपसर्गनिपातरूपाणि चत्वारि पदानि व्याख्यातानि। अभियुक्तव्याख्यानादुभयपरकत्वं प्रमाणपदवीमधि-रोहत्येव। अथ च—गुहायां त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते न निमिषन्ती-त्यर्थः, इत्येवं व्याचक्षाणेन भगवता भाष्यकारेण माधवाचार्याभिमतं व्याख्यानं समाद्रियत एव।

अस्तु, वैखर्य्यादिपरकेऽपि व्याख्याने व्यवहारकोटौ समागताया वैखर्य्याः, स्वमात्रव्यवहारविषयाया मध्यमायाश्च मञ्जूषोक्तलक्षणेन ज्ञातस्वरूपाया सखण्डत्वपक्षे भेदा अवश्यं वाच्याः। ते च नामाख्यातोपसर्गनिपाता एव वचनीया भाष्यकारीय-निरुक्तकारीयव्याख्यानानुरोधात्।

अस्तु, नामपदमत्र सुबन्ततदाद्याख्यपदपरम्, आख्यातपदं च तिङन्ततदादि-परम्, उपसर्गपदं प्राद्यभिधायकम्, निपातपदं चाद्यभिधानं भजते। यद्यपि नाम-ग्रहणेनैव उपसर्गनिपातयोः संग्रहो भवितुमर्हति, तथापि ब्राह्मणवसिष्ठन्यायेन पृथगु-पादानम्। वस्तुतस्तु-निपातानां संख्येयत्ता अर्थेयत्ता च न सम्भवति। एतेऽनन्ता अनन्तार्थाश्च प्रयोजनैकगम्याः प्रयोगैकगम्या भवन्ति। क्वचिदर्थप्रवाहस्य संकोचनायैतेषां प्रयोजनम्, क्वचिच्च विकासाय, क्वचिद्दिक्संकेताय, क्वचिच्च कालनियमनाय भवति। उक्तं च बृहद्देवताकृता श्रीशौनकाचार्येण—

**इयन्त इति संख्यानं निपातानां न विद्यते।**
**प्रयोजनवशा ह्येते निपात्यन्ते पदे पदे'॥** इति।

---

१. बृहद्देवता—२।९५।

आचार्यक्षीरस्वामिनाऽपि निपाताव्ययोपसर्गवृत्तिग्रन्थे—

**इयन्त इति संख्यैषामर्थेयत्ता च नास्ति वै।**
**प्रयोजनवशादेत्य निपतन्ति पदे पदे'[1]॥** इत्युक्तम्।

प्रक्रियासर्वस्वकारेण श्रीनारायणभट्टेनोच्यते—

**अनन्ताः खल्वनन्तार्थाः स्वराद्याश्चादयोऽपि च।**
**असत्त्वपरतयैवात्र चादीनां नियता मता[2]॥** इति।

एभिः प्रमाणैर्वक्तुं शक्यते यन्निपाता उपलक्षणतया उपसर्गाश्च नियतसंख्याका नियतार्थाश्च न सन्ति, इति कृत्वा एतेषां पृथगुपादानं कृतमाचार्येण।

महामुनिना पतञ्जलिनाऽपि स्पष्टमुच्यते संख्येयत्ताभावविषये—**'को हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपातानां संख्यामादेष्टुम्'[3]** इति।

यद्यपि नामाख्यातयोरपि संख्येयत्ता नास्ति, अर्थगताऽपि इयत्ता नास्ति, तथापि सुप्प्रत्ययपरतया तिङ्प्रत्ययपरतया च तेषां ज्ञाने सौकर्यमनुभूयते। तेषां परिगणनं त्वसम्भवमेव। निपातोपसर्गास्तु पाणिन्यादिमुनिभिः स्वरादि-चादि-ऊर्यादि-साक्षादादि-प्रादिगणैः कथञ्चित् परिगणयितुं संगृहीताः; परन्तु पूर्णतया साफल्यं नावाप्तमिति कृत्वा क्वचित् क्वचिदाकृतिगणत्वेन निर्देशिताः।

अस्तु, व्याकरणशास्त्ररहस्यविदा विद्यावारिधिमुपाधिं भजमानेनायुष्मताऽस्मत्स्नेहातिशयवता **डॉ० हरिश्चन्द्रमणित्रिपाठिना** निपातविषयिणीमिमामेवोक्तामर्थसंख्याविषयिकामनुपपत्तिं पर्यालोच्य **'निपातार्थनिर्णयः'** इति विषयमाधृत्यायं शोधप्रधानो विषयेण गभीरो भाषया च स्पृहणीयो महनीयो ग्रन्थो महता परिश्रमेण स्वोपज्ञतया च विरचय्य सहृदयानां विदुषां समक्षमुपस्थापितः। मयाऽपि तत्र तत्र विहङ्गमदृष्ट्या अवालोकि।

प्रथमाध्याये—'ऐतिहासिको भाषाशास्त्रीयश्च निपातार्थविकासः', पदानां चातुर्विध्यम्, क्रोध-विषाद-विस्मय-दैन्य-प्रलाप-जिज्ञासा-स्तुति-सम्भ्रम-समादरादीनामतिशयमभिव्यञ्जयतां निपातानामुदाहरणानि मन्त्र-श्लोकप्रदर्शनपुरःसराणि निरूपितानि। तानि दर्शं दर्शं मनोऽन्यत्र गन्तुं नोत्सहते।

**यथा दैन्यातिशयव्यञ्जने—**

**न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो**
**न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथाः।**
**न जाने मुद्रास्ते तदपि च न जाने विलपनं**
**परं जाने मातस्त्वदनुसरणं क्लेशहरणम्[4]॥**

---

१. निपाताव्ययोप०—१।५;
२. प्रक्रियासर्वस्वम्—निपातप्रक० ५।
३. म० भा० २।१।१;
४. दुर्गासप्तशती—देव्यपराधक्षमापनस्तोत्रम्—१।

अत्र पद्ये पठिता 'न', 'नो', 'अहो' निपाता दैन्यातिरेकं व्यञ्जयन्ति, ततश्च भक्तिभावमुद्भावयन्ति ।

**विषादातिशयाभिव्यञ्जने—**

अहो दुःखमहो कृच्छ्रं यत्र वाचः क्षमे तव ।
दुःखमेवंविधं प्राप्तं पुराकृतमिवाशुभम्[1] ॥

अत्र पद्ये 'अहो' इति निपातेन विषादातिरेको व्यज्यते ।

**प्रलापातिरेकव्यञ्जने—**

हा वत्स राम ! जगतां नयनाभिराम !
हा वत्स लक्ष्मण ! सलक्षणसर्वगात्र ! ।
हा साध्वि मैथिलि ! पतिस्थितचित्तवृत्ते !
हा हा गताः किल वनं बत मे तनूजाः[2] ॥

अत्र श्लोके 'हा' इति निपातो महाराजदशरथस्य प्रलापातिरेकं प्रकाशयति ।

**एवमेव स्तुत्यतिशये—**

न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्,
मृदुनि मृगशरीरे तूलराशाविवाग्निः[3] ॥ इत्यादिकम् ।

एवमेवान्यान्यपि मनोहराणि तत्तदुदाहरणानि ग्रन्थे दर्शनीयानि ।

**द्वितीयाध्याये—**सत्त्वगन्ध्यसत्त्वगन्धिभेदेन निपातानां द्वैविध्यं भोजराजसम्मत्या निरूपितम् । तत्र द्रव्य-गुण-क्रिया-जाति-संज्ञा-सम्बन्धिभेदमूलकाः षड्विधा उभयेऽपि निपाता उक्ताः । तत्र सत्त्वपराः—स्वः, शश्वत्, नमः, सायम्, ओम्, अन्तः, इत्यादयः क्रमेणोदाहृताः । एवमेवासत्त्वपरा अपि षोढा भवन्ति । तथा हि—क्रियापेक्षाः, क्रियाद्रव्यापेक्षाः, क्रियाविशेषणभूताः, क्रियाद्रव्यविशेषणभूताः, क्रियाविशिष्टरूपाः, क्रियाद्रव्याविष्टरूपा इति । मिथः, साकम्, अभीक्ष्णम्, अलम्, सपदि, प्रादुः, इत्यादयः । एते लिङ्गसंख्याभ्यामनन्विता भवन्ति । सत्त्वगन्धिनस्तु लिङ्गसंख्याभ्यामन्विता अपि भवन्ति ।

**तृतीयाध्याये—**'निपातानां द्योतकत्वं वाचकत्वं वा' अस्मिन् विषये सप्रमाणं सुबहु विचारितम् । **'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु'** इति कारिकामुद्दिश्याऽपि संयुक्तिकं विमर्शः कृतोऽस्ति ।

**चतुर्थाध्याये—**उपसर्गशब्दस्य व्युत्पत्तिस्तल्लभ्योऽर्थश्च संकेतितः । यास्कपाणिनि-शौनकसम्मत उपसर्गक्रमो निर्दिष्टः । कतिपयोपसर्गाणामर्थविकासो दर्शितः ।

---

१. वाल्मीकिरामायणम्–१।२।१५; २. प्रतिमानाटकम्–२।४; ३. अभिज्ञानशाकुन्तलम्–१।१० ।

**पञ्चमाध्याये**—निपातानामर्थविकासः, उपसर्ग-विभक्ति-स्वरप्रतिरूपका निपाता निरूपिताः। गणपाठेष्वनुक्ता अपि 'अथ', 'अन', 'अन्तिके', 'अन्यतरस्याम्' इत्यादीनामर्था निर्दिष्टाः। अनुकरणप्रतिरूपका अपि 'अक्खली', 'अलला', 'किकिरा', 'जञ्जना', 'फूत्', 'मस्मसा', 'मुट्मुट्', 'सीत्', 'हिङ्' इत्यादीनामर्थाः प्रकाशिताः।

पूर्वमेवोक्तं मया यदत्र रत्नाकरायमाणे ग्रन्थे यत्रैव दृष्टिर्निक्षिप्यते, तत्रैवानन्दातिशयोऽनुभूयते।

अद्यत्वे भाषाविज्ञानाभिधानमेकं नवीनं शास्त्रं विदुषां समाजे प्रतिष्ठातिशयं भजमानं चकास्ति। तत्र शास्त्रे पाणिनीयव्याकरणे कृतश्रमा वैयाकरणाः प्रावीण्यमलभमाना उदासते; किन्तु भगवत्कृपया तत्राऽपि निविष्टबुद्धिना श्रीमता त्रिपाठिना स्वीयप्रतिभायाः सामर्थ्येन विषयस्य परीक्षणं निरीक्षणं विमर्शनं च सुष्ठु विहितम्, तेन नूनमेतद्ग्रन्थरत्नं भाषाविज्ञानविदां कृतेऽपि महते उपकाराय भविष्यति।

तदत्र वेदादिवाङ्मयसागराद् मौक्तिकरत्नानि इव निपातानां स्वरूपाणि अर्थाश्च भूरिपरिश्रमेण समालोड्य श्रीत्रिपाठिना प्रकाशपथं नीता व्याकरणशास्त्रविदुषां कृते नूतनमार्गदर्शनाय भविष्यन्ति, इत्येभिः शुभाशीर्वचोभिः डॉ० त्रिपाठिनं संवर्धयन् भवानीनाथं विश्वनाथं प्रार्थये, यदेतस्मै श्रीत्रिपाठिमहोदयाय तादृशं सामर्थ्यं देयात्, येनादसीय उत्साह एतादृशकार्यसम्पादने सर्वदा सर्वथा च भूयात्।

| | |
|---|---|
| वाराणस्याम्,<br>महाशिवरात्रिपर्वणि,<br>२०४६ वैक्रमाब्दे | मङ्गलाभिशंसी<br>**रामप्रसादत्रिपाठी**<br>सम्मानिताध्यापकः,<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य |

# उपोद्घातः

भारद्वाजकमाख्यातं भार्गवं नाम भाष्यते।
वसिष्ठ उपसर्गस्तु निपातः काश्यपः स्मृतः॥
सर्वं तु सोम्यमाख्यातं नाम वायव्यमिष्यते।
आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः[1]॥

इत्याद्युपासनार्थमुक्तम्। एवं ह्युपासिताः सन्तोऽर्थानभिज्ञस्यापि पुरुषस्य फलप्रदा भवन्तीति।

'निपातार्थनिर्णयः' इति संज्ञयाऽभिषिक्तस्यास्य अनुसन्धानप्रबन्धस्य प्रस्तावना-प्रसङ्गे तावदेतन्निवेदयितुमुत्सहे यत्किलास्य प्रबन्धस्योपादानत्वेन खनिभूतन्तु सम्पूर्ण-संस्कृतवाङ्मयमेव। ऐतिहासिकप्रवाहदृष्ट्या, कालिक्रायामदृष्ट्या च यादृशं वाङ्मयं गैर्वाण्यां संरक्षितम्, न तादृशं प्रत्नं वाङ्मयमुपलभ्यते निखिलेऽस्मिन् जगतीतले। ज्ञानविज्ञानसम्पन्नैरार्यावर्तीयैर्महर्षिभिर्ज्ञानविज्ञानप्रातिशाख्यानां[2] यादृशमुपबृंहणं कृतम्, तदस्य भरतभूवलयस्य कीर्तिं ख्यापयितुमलम्। अतः सर्वप्रथमं प्रस्तावनायां त आख्यात-वृत्ता अनाख्यातवृत्ताश्च महर्षयः प्रणम्यन्ते, येषां तत्त्वचिन्ताभरभरितग्रन्थरत्नानि मयाऽनायासेनोपलब्धानीति। तदनु विविधशास्त्रतलस्पर्शिगवेषणमानसानाम्, छात्रसंप-त्समेधितसारस्वतगुरुकुलानां श्रीमतां गुरुवर्याणां श्रीकालिकाप्रसादशुक्लमहाभागानां चरणयोः प्रणामाञ्जलय उपायनीक्रियन्ते, येषां सततशास्त्रोद्बोधजन्योऽयं प्रबन्धः। अनुसन्धानप्रबन्धेऽस्मिन्नुत्प्रेक्षिताः केचन सिद्धान्ता अत्रोपोद्घाते प्रस्तूयन्ते।

**संस्कृतभाषाया. पदविज्ञानम्—**

गैर्वाण्या रत्नाकरायमाण ऋग्वेदाख्यग्रन्थ[3] एव दृश्यते पदानां चतुर्विधो विकासः—नाम-आख्यात-उपसर्ग-निपातरूपेण। अतोऽनुमीयते यदेतादृशपदविभाग ऋग्वेदादपि प्राक्कालिको भवेदिति, यतो हि चतुर्विध एव पदविभागः प्रायेण सर्वासु प्राचीनभारो-

---

१. वाजसनेयिप्रा० ८।५१–५२-अनन्तभट्टभाष्यम्।

२. प्रातिशाख्यशब्दोऽत्र शाखं शाखं प्रति प्रतिशाखम्, इत्यर्थे प्रयुक्तः, न तु प्रातिशाख्य-ग्रन्थानां कृते।

३. ऋ० सं०—४।५८।३।

पीयार्यभाषासूपलभ्यते[१]। आधुनिकभाषाशास्त्रविदाम्, ऐतिहासिकानाञ्च बहुपुरस्कृतोऽयं सिद्धान्तः, यदासीत् पुरा कदाचिदेतादृशः समयः, यस्मिन् समस्ताऽऽर्यजातिरेकस्मिन्नेव कौटुम्बिकसंस्कारसूत्र एकनीडायिताऽऽसीत्। तस्याश्चिन्तनप्रवाहस्य, भाषागतसौन्दर्य-विधायकतत्त्वस्य, दार्शनिकविश्लेषणबीजस्य, अङ्कविद्याया अन्वेषणस्य च विकासः कस्मिंश्चिदेकस्मिन् भूमिभागे समृद्धिं प्राप। तदनन्तरं सा जातिः पृथक् पृथङ् निकाय-रूपेण क्रमशः समस्तां वसुधां व्याप्नोत्; किन्तु तस्या यानि भाषा-संस्कृति-दर्शन-विज्ञान-मूलकसंश्लेषसूत्राण्यासन्, न तानि तद्वद्विश्लिष्टतां प्राप्तानि, यथा भूमिभागस्य विश्लेषः उपपन्नः। अत एव भाषागतसम्बन्धः संवादश्चाधुनापि येन केन प्रकारेण संरक्षितः संपोषितश्च वर्तते।

संस्कृतभाषीयोऽयं पदविभागोऽतिप्राचीनास्वपि ग्रीक-लैटिन-अवेस्ताप्रभृति-भाषासु[२] निर्विशेषतयोपलभ्यते। एवम् ऋग्वेदीयमन्त्रे चतुर्धा विभक्तो हि पदविभाग आभिर्भारोपीयार्यभाषाभिरनुपदमनुवादितः। तथा हि ऋग्वेदीयो मन्त्रः—

**चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥ इति।**

व्याख्याति स्म च मन्त्रममुं स्कन्दस्वामी—'तदेतद् भेदेनैव हि चत्वारि वाचः परिमितानि पदानि, न पञ्चमम्। गवादीनि नामानि। कुतः? तेषां तत्त्वं सर्वमनुष्यैर्ज्ञायमानत्वात्। आख्यातोपसर्गनिपातास्तु अप्रसिद्धार्थत्वान्नार्थं सर्वे वदन्ति' इति। स्कन्दस्वामिनो भाष्यमिदमानुपूर्व्या संश्लोकयति दुर्गाचार्यः—

**चतुर्विधपदेष्वत्र द्विविधस्यार्थनिर्णयः।**
**क्रियते संशयोत्पत्तौ नोपसर्गनिपातयोः[३]॥ इति।**

आभ्यां स्कन्द-दुर्गव्याख्यानाभ्यामेतन्निष्कृष्यते यद् वैदिककाल एव निपातोपसर्गाः किञ्चित्तिरोहितार्था उपपन्नाः। भाषाशास्त्रस्यायं[४] सिद्धान्त एवास्ति, यत् कस्यचिच्छब्दग्रामस्यार्थतिरोहणं हि नामातिसुविपुलकालव्यवहारसापेक्षम्। न हि फेनबुद्बुदवच्छब्दानामर्था उद्भवन्ति, लीयन्ते च। अतोऽत्रैतन्निर्णेतुं प्रभवामो यद्यद्यासु वैदिकसंहितास्वेव निपातोपसर्गाः किञ्चित् संदिह्यमानार्था उपपन्नास्तर्हि किलैतस्य चतुर्विधपदविभागरूपसिद्धान्तस्य विकासस्ततोऽपि प्राक्कालिको भवेदिति। सा कीदृशी भाषाऽऽसीद् वैदिक्या भाषायाः पूर्वम्, यस्यामस्य विज्ञानसम्मतस्य पदविभागस्य प्ररोहोऽङ्कुरितः, इत्येतन्निश्चाययितुमद्यापि पुराविदः प्रयतन्ते।

---

१. आस्पेक्टस् आफ लैंग्वेज—पृ० १५७-५८; २. लैंग्वेज एण्ड इट्स स्टडी—पृ० ८८।
३. निरुक्तम्—१।१; ४. भाषा, पृ०—१०५।

**निपातपदस्याभिधानिकं निर्वचनम्—**

'निपातः' इति पदं व्याकुर्वाणैः शाब्दिकैर्निर्वचनकारैश्च निरणायि—नि + √पत>∟ = गतौ ⌋> निपातः, इति धातूपसर्गाभ्यां तस्य जन्म। सिद्धान्तितञ्च यास्काचार्येण -'अथ निपाता उच्चावचेष्वर्थे निपतन्तीति'[1] इति। निरुवाच च यास्कवाक्यं महेश्वरः—'उच्चावचेष्वित्यादिना त उच्चावचेषु=अनेकप्रकारेषु प्रतिपाद्येष्वर्थेषु प्रतिपादकत्वेन नि-पतन्ति = वर्तन्त इत्यर्थः' इति।

दुर्गाचार्य्येणाप्युरीकृतं महेश्वरव्याख्यानम्—'उच्चावचाः पदार्था भवन्तीति गार्ग्यः। उच्चाश्चावचाश्च उच्चावचाः = बहुप्रकारा इत्यर्थः। एषामुपसर्गादीनामर्थाः = पदार्था भवन्ति वियुक्तानामपि नामाख्याताभ्यामिति गार्ग्य आचार्यो मन्यत इति शेषः। एकैकोऽप्येषां नामाख्यातवियोगेऽपि अनेकार्थ इत्यभिप्रायः' इति। उच्चा इति शब्दः सायणाचार्येण प्रभूतार्थे,[2] उच्छ्रितार्थे[3] च व्याख्यातः। अत एतन्निष्कृष्टुं शक्यते यन्निपातानामर्था उच्चा = उच्छ्रिता भवन्तीति।

ऋक्प्रातिशाख्येऽपि किलेदमेव प्रतिपादनं पुरस्कृतम्—

**निपातानामर्थवशान्निपातना-**
**दनर्थकानामितरे च सार्थकाः।**
**नेयन्त इत्यस्ति सङ्ख्येह वाङ्मये**
**मिताक्षरे चाप्यमिताक्षरे च ये[4]॥**

उपबृंहितवान् च श्लोकमिमम् उव्वटाचार्यः—'अर्थविषेशे केचन निपाता निपातिताः, तथा केचन निपाताः सार्थकाः, केचन च निरर्थकाः; परमियत्तया ते मिताक्षरे = पद्ये, अमिताक्षरे = गद्ये च संख्यातुं न शक्याः' इति। एभिः सन्दर्भैः प्रथिततरं भवति यन्निपातानां पातस्तु सामूहिको भवति। 'निपतन्ति' इति बहुवचनक्रियया एषां सामूहिकः पातः संसूच्यते। लोकेऽप्येतद्दृश्यते यत् कश्चिद्दुरधिगमार्थसिद्धय एव शक्तीनामेकत्र सामूहिकः पातो भवति। अतो वस्तुसत्तासंसक्तैः पदैरुन्नीतो विपर्यस्तो वाक्यार्थो निपातानामुच्चावचैः पातैः पूर्यते। नारायणभट्टेनापि प्रमीयते तथ्यमिदम्। स वक्ति यदर्थसिषाधयिषया निपातानां सम्भूयागमा भवन्तीति। तथा हि श्लोकः—

१. निरुक्तम्—१।२; २. ऋ० सं०—२।२।१०—सायणभाष्यम्।
३. तत्रैव—२।४०।४; ४. ऋ० प्रा० १२।९—उव्वटभाष्यम्।

**केऽप्येषां द्योतकाः केऽपि वाचकाः केऽप्यनर्थकाः ।**
**आगमा अपि केऽपि स्युः सम्भूयार्थस्य साधकाः[1] ॥**

एवं सम्भूय निपातानामागमैरेतन्निर्गलितं भवति यत् समूहरूपेणैषां वाक्ये प्रपतनान्निपतनाद्वैतेषामाख्या निपात इति प्रसिद्धा । शौनकेनापि प्रमीयते सिद्धान्तोऽयम्—

**इयन्त इति संख्यानं निपातानां न विद्यते ।**
**प्रयोजनवशा ह्येते निपात्यन्ते पदे पदे[2] ॥ इति ।**

प्रमाणैरेभिः संसाध्यते यत् "निपातः" इति संज्ञाऽर्थौपयिकी, न तु शब्द-स्वरूपौपयिकी । डेनिस्टनमहोदयस्यापि किलायमेव पक्षः[3] । एवं तुलाबोधकेनानु-सन्धानेन निश्चाययितुं शक्यते यन्निपातपदस्य निर्वचनानीमानि वैदिकवाङ्मयपुर-स्कृतानि । सम्पूर्णे वैदिकवाङ्मये निपातानां परामर्शोऽर्थौपयिक एवावलोक्यते ।

**पाणिन्युपज्ञं निर्वचनम्—**

महामुनिपाणिनिना तु निपातपदस्याभिधानिकं निर्वचनन्त्वेवं कृतम्—**'चादयोऽसत्त्वे'**[4] इति । मुनेः सूत्रमिदं व्याचक्षाणेनाचार्यपतञ्जलिनोक्तं यत्—'अयं सत्त्वशब्दः—अस्त्येव द्रव्यपदार्थकः । तद्यथा—**सत्त्वमयं** ब्राह्मणः, **सत्त्वमियं** ब्राह्मणीति । अस्ति क्रियापदार्थः—'सद्भावः सत्त्वमिति । कस्येदं ग्रहणम् ? द्रव्य-पदार्थकस्य'[5] इति । महाभाष्यकारमतमूरीकुर्वता कैयटेनाप्युक्तम्—'द्रव्यशब्देनात्र सिद्धरूपं सत्त्वमभिधीयते' इति । सन्दर्भाणामेतेषां पर्यवेक्षणेनैतदायाति यद् द्रव्याश्रयी शब्दः सत्त्ववान् भवति, तदनाश्रयी त्वसत्त्ववानिति । हरदत्तमिश्रस्याप्ययमेवाग्रहः । स उक्तवान् यत्—'इदं तदिति सर्वनामपरामर्शयोग्यं वस्तु द्रव्यमुच्यते' इति । अर्थाद् अयं घटः, इदं गृहम्, अयं गौरित्यादीनि सर्वनामपदैर्बोध्यमानानि वस्तूनि द्रव्यपदेनाभिधीयन्ते ।

सत्त्वपदं व्याख्यातुकामेन भोजराजेनाप्युक्तं यत्—'तदेवमर्थग्रहणसामर्थ्यात् सलिङ्गः, ससंख्यः, सद्रव्यश्च समर्थः पदार्थ उपादीयते' इति । प्रमाणानीमानि प्रख्या-पयन्ति यत् स्थूलसत्तावबोधकाः शब्दाः सत्त्ववचनाः, भावसत्तावबोधकास्त्वसत्त्ववचना इति । इमानि सर्वाणि सत्त्वासत्त्वप्रपञ्चख्यापकानि वचनानि महामुनिपाणिनिसूत्रविजृ-म्भितानि । **'चादयोऽसत्त्वे'** इति लक्षणे 'असत्त्व'पदं सन्निवेशयता महामुनिना पद-विज्ञानस्य महानपकारः कृतः ।

---

१. सरस्वतीकण्ठाभरणम्—१।१।१८-हृदयहारिणीव्याख्या; २. बृहद्देवता—२।९५ ।
३. ग्रीक पार्टिकल्स—पृ० ९१; ४. अष्टाध्यायी—१।४.५७; ५. महाभाष्यम्—१।४।५७ ।

**सूत्रकृन्मते निपातविषयको विमर्शः—**

महामुनिपाणिनिदृष्ट्या निपाताश्चतुर्विधाः सन्ति—

( १ ) विशुद्धा निपाताः,
( २ ) गत्युपसर्गसंज्ञाविशिष्टा निपाताः,
( ३ ) गतिसंज्ञामिश्रिता निपाताः,
( ४ ) कर्मप्रवचनीयसंज्ञायुक्ता निपाताः ।

तत्र विशुद्धा निपाताः **'चादयोऽसत्त्वे'**[1], **'प्रादयः'**[2] इत्याभ्यां सूत्राभ्यां निर्दिष्टाः सन्ति । तथा हि—'असत्त्वेऽर्थे चादयो निपातसंज्ञाः स्युः' इति सूत्रार्थे किमिदमसत्त्वमिति जिज्ञासायामुक्तम्—'सीदन्ति = तिष्ठन्ति जातिगुणक्रिया यस्मिंस्त-त्सत्त्वं द्रव्यम्',[3] न तु सतो भावः सत्त्वमिति, तदा तु—'साध्यमानतया क्रियारूपापन्ना सत्ता' इत्यर्थः स्यात्, तथासति 'असत्त्वे' इति प्रतिषेधोऽनर्थकः स्यात्, चादिषु सत्तावाचिनः शब्दस्याप्रसिद्धया व्यावर्त्यालाभात् । 'पशुर्वै पुरुषः' इत्यत्र पशुशब्दस्य निपातसंज्ञा प्रसज्येत, तस्य तादृशसत्तावाचित्वाभावात् । 'असत्त्वे' इत्यत्र नञर्थः प्रसज्यप्रतिषेधरूपः स्वीकृतो भाष्यकृता । तत्फलञ्च विशेषेण प्राति पूरयति इति विग्रहे विपूर्वकात् प्राधातोः कर्तरि कप्रत्यये सति 'विप्रः' इति प्रयोगस्य साधुत्वमुक्तम् । अन्यथा पर्युदासपक्षे द्रव्यभिन्नेऽर्थे वर्तमानाश्चादय इत्याद्यर्थे नात्र निपातसंज्ञायाः प्रसङ्गः स्यात्, तस्य पूरणक्रियाविशिष्टकर्तृरूपद्रव्यवाचित्वेऽपि केवलाद् द्रव्यादस्य क्रियाद्रव्यसमुदायस्य भिन्नत्वेन द्रव्यभिन्नेऽर्थे वर्तमानत्वात् । ततश्च सुपो लुक् स्यात् । प्रसज्यप्रतिषेधपक्षे तु विशेष्यतया द्रव्येऽर्थे वर्तमानतया निषेधः स्यात् ।

वस्तुतस्तु प्रसज्यप्रतिषेधकल्पे वाक्यमेवासमर्थसमासः क्रियापदाध्याहारादिदोष-बाहुल्यादियमुक्तिरेकदेशिनः। पर्युदासपक्षेऽपि विशेष्यतया 'द्रव्यभिन्नेऽर्थे' इत्याद्यर्थकरणेन उक्तस्थले दोषोद्धारः सुकरः । अस्यां स्थितावपि अत्यन्तनिरर्थकानां निपातसंज्ञा न स्यात्, अतः—'लिङ्गसंख्यान्वयिताऽनवच्छेदकं यद्रूपम्, तद्रूपेतररूपावच्छिन्नविषयक-बोधतात्पर्येण अनुच्चारिताश्चादयो निपाताः स्युः' इत्येवं सूत्रार्थः परिष्करणीयः, ततश्च नैष कुत्राप्यतिव्याप्त्यव्याप्ती । तथा हि—'लिङ्गसंख्यान्वयितावच्छेकं रूपं घटत्वादि, तद्भिन्नं रूपं समुच्चयत्व-विकल्पत्वादि, तद्रूपेतररूपं पुनर्घटत्वादि, तदवच्छिन्नविषयकबोधतात्पर्येणोच्चारिता घटादिशब्दाः, अनुच्चारिता 'च-वा-ह-तु' इत्यादयः समुच्चयादिवाचकाः, पादपूर्तिमात्रे प्रयुक्ता निरर्थकाश्च, ते निपातसंज्ञकाः सञ्जाताः ।

---

१. अष्टा० १।४।५७;  २. तत्रैव—१।४।५८;  ३. महाभा० १।४।५७—प्रदीपः ।

'असत्त्वे' इत्यस्य व्यावर्त्यस्तु द्रव्यवाची पशुशब्दः। सम्यगर्थवाची गणपठितः पशुशब्दस्तु लक्ष्य एव। 'प्रादयः' इति सूत्रस्यापीयमेव स्थितिः। तत्रासत्त्वे इत्यस्य व्यावर्त्यः पक्षिवाचको विशब्दः। विशेषार्थवाचकस्तु लक्ष्य एव। अनयोः सूत्रयोर्विवरणेन निपातानां वाचकतापक्षे पक्षपातः प्रतीयते सूत्रकारस्य।

गत्युपसर्गसंज्ञाविशिष्टा निपाताः संकीर्तिताः सन्ति—**'उपसर्गाः क्रियायोगे'**,[1] **'गतिश्च'**[2]—इत्याभ्यां सूत्राभ्याम्। तथा हि—'क्रियया सह योगे सति निपातसंज्ञापूर्वकमेतत्संज्ञाद्वयमाभ्यां विधीयते। क्रियया सह योगे द्योत्यद्योतकभावो वाच्यवाचकभावो वा। संज्ञात्रितयसमावेशस्य फलं तु 'प्रति प्रणयति' इत्यत्र 'प्र' इत्यस्योपसर्गत्वान्नयतेर्नकारस्य णत्वम्, गतित्वात् 'गतिर्गतौ'[3] इति प्रतीत्यस्य निघातः, निपातत्वादुदात्तः स्वरश्च सिद्ध्यति। ईदृशनिपातानां द्योतकतापक्षो वाचकतापक्षो वाऽभ्युपेयते।

गतिसंज्ञायुक्ता निपाताः **'ऊर्यादिच्विडाचश्च'**[4] इत्यादिसूत्रैर्निरूपिताः। ऊर्यादयः प्राग् निपाताः सन्तः क्रियायोगे गतिसंज्ञका भवन्ति। 'ऊरी', 'उररी' इमौ स्वीकारवाचकौ। एवं भूषणेऽर्थे शक्तोऽलमिति निपातः क्रियायोगे गतिसंज्ञको[5] भवति। एवमेव अदरानादरयोः सदसच्छब्दौ[6], अपरिग्रहेऽन्तरशब्दः[7], श्रद्धातिशये 'कणेमनसि[8]' इतीमौ शब्दौ, च्व्यर्थे साक्षात्प्रभृतयः क्रियायोगे[9] प्राप्य गतिसंज्ञां लभन्ते। तत्फलन्तु **'कुगतिप्रादयः[10]'** इति नित्यसमासः। निपातसंज्ञाफलं तु 'ऊरी करोति' इत्यादावाद्युदात्तसिद्धिः। एते ऊर्यादयो निपाताः स्वीकाराद्यर्थस्य वाचकाः, क्रियाविशेषस्य च द्योतकाः सन्ति।

चतुर्थकोटौ कर्मप्रवचनीयत्वविशिष्टा निपाताः संकेतिताः सन्ति **'अनुर्लक्षणे'** प्रभृतिसूत्रैः। कर्मक्रियां प्रोक्तवन्त इति कर्मप्रवचनीयाः, अर्थात् क्रियामुक्त्वेदानीं क्रियानिरूपितसम्बन्धं द्योतयन्तीति[11]। यथा—'अनुर्लक्षणे[12]' इति सूत्रेणानोः निपातसंज्ञाकर्मप्रवचनीयसंज्ञा विधीयते—लक्ष्य-लक्षणभावे सम्बन्धे द्योत्ये सति। यथा 'वनमनु अशनिर्गतः' इत्यत्र वनं लक्षणम्, अशनिगमनं लक्ष्यम्। द्वयोर्लक्ष्य-लक्षणभावसम्बन्धस्य द्योतकोऽनुः कर्मप्रवचनीयसंज्ञां लब्धवान्। अत्र कर्मप्रवचनीयसंज्ञाफलं द्वितीयाविभक्तिसिद्धिः, निपातत्वफलन्तु स्वरसिद्धिः।

---

१. अष्टा० १।४।५९; २. तत्रैव—१।६४।०; ३. तत्रैव—१।४।६२।
४. तत्रैव—१।४।६१; ५. तत्रैव—१।४।६४; ६. तत्रैव—१।४।६३।
७. तत्रैव—१।४।६५; ८. तत्रैव—१।४।६६; ९. तत्रैव—१।४।७४।
१०. तत्रैव—२।२।१८; ११. म०भा० १।४।८३; १२. अष्टा० १।४।८४।

एवं 'उपोऽधिके च[१]', 'हीने[२]', 'अतिरतिक्रमणे च[३]', 'सुः पूजायाम्[४]', इत्यादिभिः सूत्रैः कर्मप्रवचनीयसंज्ञा विधीयते। तत्र न्यूनाधिकभावसम्बन्धः, पूज्य-पूजकभावादिसम्बन्धश्च द्योत्यत्वेन ग्राह्यः।

एवमेव 'अवेः प्रहसने[५]', 'वेः पादविहरणे[६]', 'आङ् उद्गमने[७]' इत्यादिषु सूत्रेषु गत्युपसर्गत्वविशिष्टं निपातत्वमध्यादीनामस्ति। तत्र द्योतकतावाचकताऽन्यतरपक्ष आश्रयणीयः।

**निपातानां द्योतकत्वं वाचकत्वं वा—**

निपातानां क्रियाविशेषस्य द्योतकत्वं स्वीकर्तव्यं वाचकत्वं वा ? इति जिज्ञासाया-मुच्यते—निपातार्थविषये तत्तन्मतपर्यालोचनेन त्रयः पक्षाः सम्भवन्ति।

**तत्र प्रथमः पक्षः**—अनुभवतीत्यादौ 'अनुभव'रूपोऽर्थो न धातोः, 'भवति' इत्यत्रापि तत्प्रतीत्यापत्तेः, नोपसर्गस्य 'अनुगच्छति' इत्यादावपि तद्बोधप्रसङ्गात्। नापि विशिष्टस्य, शक्ततावच्छेदकांशे गौरवापातात्। अत उपसर्गो द्योतकः, धातुरेव तद्वाचकः। अत एव च 'अनुभव', 'साक्षात्कारादि'रूपफलवाचकत्वेन कर्मणि लकारोऽपि उपपद्यते। द्योतकत्वं चात्र तात्पर्यग्राहकत्वमेव। उक्तं च हरिणा—

**क्वचित्सम्भविनो भेदाः केवलैरभिदर्शिताः।**
**उपसर्गेण सम्बन्धे व्यज्यन्ते प्रपरादिना[८]** ॥ इति।

**द्वितीयः पक्षः**— उपसर्गा नहि केवलं द्योतका एव; अपितु वाचका अपि। तथा हि—'तिष्ठति' इत्यादौ स्थाधातोर्गतिनिवृत्तिवाचकत्वमस्ति। 'प्रतिष्ठते' इत्यादौ प्रोपसर्गेण गतिवाचकत्वं व्यवस्थाप्यते। उक्तं च भर्तृहरिणा—"स वाचको विशेषाणां संभवाद् द्योतकोऽपि वा[९]" इति।

न च वाचकतापक्षे स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वादि-व्यवस्था न स्यादिति वाच्यम्, स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्व-रूपसकर्मकत्वव्यवस्थापनेनेष्टसिद्धेः[१०]।

**तृतीयः पक्षः**—उपसर्गविशिष्टस्य च धातोर्वाचकत्वम्। उक्तं च हरिणा—"शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते", "सम्भूय धातूपसर्गावर्थमाहतुः" इति शक्तिमात्रमुपसर्गः कुरुते, इतिकृत्वा अर्थाभिधाने सहकारिण उपसर्गा इति[११]। अस्मिन्

---

१. अष्टा० १।४।८७; २. तत्रैव—१।४।८६; ३. तत्रैव—१।४।९५।
४. तत्रैव—१।४।९४; ५. तत्रैव—१।३।३३; ६. तत्रैव—१।३।४१।
७. तत्रैव—१।३।४०; ८. वा०प०—२।१८७; ९. तत्रैव—२।१८८—पुण्यराजः।
१०. वै० भू० सा०, निपातार्थनिर्णयः; ११. वा० प० २।१८९—पुण्यराजः।

पक्षेऽडाद्यागमविषये द्विर्वचनादिविषये चोपसर्गस्य पृथक्कृतिः कर्तव्या भविष्यति। एषु पक्षेषु कतमः पक्ष औचित्यमावहतीति विचारणायामुच्यते—द्योतकतावादस्योद्भवो निरुक्तसमय एवाभूत्। तस्य पल्लवनं महाभाष्ये समजायत। तदनु प्रायः समेऽप्याचार्या द्योतकतावादमेव समर्थितवन्तः।

**'अव्ययं विभक्ति०'** इति सूत्रस्थं भाष्यं व्याचक्षाणेन कैयटेन[1] 'सुमद्रा' इत्यत्र सुशब्दस्य समृद्धिद्योतकता स्पष्टमुक्ता। "स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा" इत्युक्त्या भर्तृहरिणा यद्यपि पक्षद्वयमविशेषेणोच्यते, भूषणकृताऽपि स एव पक्षोऽनुस्रियते; तथापि 'क्वचित् सम्भविनो भेदाः' इत्याद्युपसंहारस्यालोचनया द्योतकतापक्ष एवावसीयते। अस्मिन् द्योतकतापक्षेऽनुमानमपि प्रमाणमुपन्यस्यते— 'प्रादयो द्योतकाः, उपसर्गत्वात्, यश्च न द्योतकः, स तु नोपसर्गः, यथा घटादिशब्दः। ननु प्रादयो द्योतकाः, निपातत्वादिति निपातत्वेन हेतुना प्रादीनां द्योतकत्वं साध्यतामिति चेत्, तन्न सम्भवति, उपसर्गत्वस्य तत्रोपाधित्वात्। तथा हि—उपसर्गत्वे द्योतकत्वरूपसाध्यव्यापकत्वमस्ति, निपातत्वरूपसाधनस्य चाव्यापकत्वमस्ति। निपातत्वं हि वाचकचादिष्वपि वर्तते, तत्रोपसर्गत्वं नास्ति, इति निपातत्वरूपसाधनस्याव्यापकत्वं बोध्यमुपसर्गत्वे। यद्यपि चेष्टादिष्वपि संकेतितार्थद्योतकत्वमस्ति, तत्र चोपसर्गत्वं नास्ति, इतिकृत्वा साध्यव्यापकत्वं तत्र न सम्भवति; तथापि निपातत्वरूपसाधनाऽवच्छिन्नद्योतकत्वस्योपसर्गे सत्त्वेन निपातत्वसमानाधिकरणद्योतकरूपसाध्यव्यापकत्वेन साधनाऽवच्छिन्नसाध्यव्यापकत्वादिघटितोपाधिलक्षणस्य समन्वयस्तत्र भवत्येव'।

अथवा प्रकर्षादिः प्रादिवाच्यः, प्राद्यन्वयव्यतिरेकानुविधायिशाब्दधीविषयत्वात्। प्रादिसत्त्वे तत्प्रतीत्या तदसत्त्वे च तदप्रतीतेः। यथा घटादिरूपोऽर्थो घटादिशब्दान्वयव्यतिरेकानुविधायी, इति घटादिशब्दवाच्यः, इत्यनुमानमपि अत्र योजयितुं शक्यते।

नन्वत्रापि 'अनन्यलभ्यो हि शब्दार्थः' इत्यनन्यलभ्यत्वमुपाधिः स्यादिति चेत्, तन्न साधुतरम्, तस्य वाच्यत्वरूपसाध्यव्यापकत्वेऽपि उक्तसाधनाव्यापकत्वस्य दुर्वचत्वात्। अतश्च 'प्रजपति' इत्यादौ जपादिर्धातुवाच्यः, प्रकर्षादिः प्रादिवाच्यः, इत्येवं वाचकतापक्षः प्राप्तः।

न च नामार्थधात्वर्थयोः साक्षाद् भेदेनान्वयस्याव्युत्पन्नतया प्रकर्षस्य स्वरूपसम्बन्धेन जपाद्यर्थेऽन्वयो न सम्भवतीति वाच्यम्, उक्तनियमे निपातातिरिक्तत्वेन संकोचे सतीष्टसिद्धेः। परन्त्वत्र पक्षे 'प्रतिष्ठते' इत्यादौ गत्यभावस्य धात्वर्थत्वे तदभावस्योपसर्गार्थत्वे न्यायनये तिङर्थाश्रयत्वे गत्यभावाभावस्याप्रकृत्यर्थतया

---

१. महाभा० २।१।६—प्रदीपः।

प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधादनन्वयापत्तिः स्यात्, आद्य-गमनस्य प्रतीतिश्च न स्यात् ।

प्रशब्दार्थाभावस्य गमनाभावरूपधात्वर्थं प्रति विशेष्यतयैव भानाद् धात्वर्थगत-विशेषकत्वाभावेनोसर्गत्वमपि प्रशब्दस्य न स्यात् । तस्मादुपसर्गाणां द्योतकत्वमेवो-चितम् । चादीनां तु केषाञ्चिद् वाचकत्वम्, केषाञ्चिद् द्योतकत्वम् । यथा नञोऽभावो वाच्यः । 'शरैरुस्रैरिव' इत्यादौ इवादिशब्दस्य सदृशादिद्योतकत्वम्, उस्रशब्दस्यो-स्रसदृशे लाक्षणिकत्वम् ।

न च वाचकतापक्षे 'शोभनः समुच्चयः' इतिवत् 'शोभनश्च', घट-पटयोः समुच्चयः' इतिवत् 'घट-पटयोश्च' इत्याद्यपि स्यादिति वाच्यम्; शब्दशक्तिस्वभावाद् निपातानां नित्यपरतन्त्रतया तत्र विशेषणयोगस्यासम्भवात् ।

अत्रायं समाधिः—शक्ति-लक्षणा-व्यञ्जनेति त्रिविधवृत्तिषु शक्तेः प्राथम्याद् निपातेषु तत्सम्भवे वृत्त्यन्तरं नोचितम् । प्रकर्षः प्रादिवाच्य इत्याद्यनुमानेन वाचकता-पक्षस्यैव समर्थनात् । न च 'अनुभवति' इत्यादौ अन्वादेरनुभवादिवाचकत्वे धातो-र्व्यापारमात्रवाचकत्वं स्यात्, तच्च 'फलव्यापारयोर्धातुः' इति सिद्धान्ताद् विरुद्धमस्तीति वाच्यम्, ईदृशस्थले धातोस्तन्मात्रपरत्वेऽपि दोषाभावात् । विशिष्टार्थवाचकपदस्य विशेषणवाचकपदसमभिव्याहारे विशेष्यमात्रपरत्वस्य दृष्टत्वात् । तथा च महाकविः कालिदासः—"स कीचकैर्मारुतपूर्णरन्ध्रैः"[1] इत्येवं प्रायुङ्क्त । सकर्मकाकर्मकविभाग-व्यवस्था तु सकर्मकलक्षणनिर्देशेन पूर्वमुक्तैव ।

'घटं पटञ्च पश्य' इत्यादौ चशब्द एव समुच्चयवाचकः । तत्रैव प्रतियोगिता-सम्बन्धेन पटस्यान्वयः, तस्य च स्वरूपसम्बन्धेन घटेऽन्वयः कर्तव्यः । एवं च 'पटप्रति-योगिकसमुच्चयवन्तं घटं पश्य' इति बोधः । यद्यपि नामार्थयोः साक्षाद् भेदेनान्वयो न भवति, व्युत्पत्तिविरोधात्; तथापि व्युत्पत्तिवैचित्र्येण तस्यां व्युत्पत्तौ निपातातिरिक्तत्वेन संकोचे सति नास्ति कुत्रापि दोषलेशः ।

इवादिनिपातस्थलेऽपीयमेव रीतिरनुसर्तव्या । तत्र चत्वं वात्वमिवत्वादिकञ्च वाचकताऽवच्छेदकत्वेन स्वीकार्यम् । 'प्रतिष्ठते' इत्यत्र प्रशब्दसमभिव्याहारात् स्थाधातोर्गतिमात्रमर्थः । प्रशब्दस्य प्रकृष्टत्वमर्थः । एवञ्च प्रकृष्टगमनमर्थस्तत्र स्वीकर-णीयः । तथा सति न सन्ति पूर्वोक्तो दोषाः । तत्र प्रशब्दस्याभावोऽर्थस्तु सर्वथाऽनुभव-विरुद्धः । तत्समभिव्याहारेण स्थाधातोरेवार्थः परिवर्तनीयः । यथा 'उपकृतं बहु तत्र

---

१, रघुवंशमहाकाव्ये—२।१२ ।

किमुच्यते, सुजनता प्रथिता भवता परम्' इत्यादौ उपकृतपदस्यापकारे लक्षणा स्वीक्रियते साहित्यशास्त्रमर्मज्ञैः[१]। अथ च 'प्रजपति' इत्यादौ प्रशब्दस्योपसर्गत्वमजानतोऽपि प्रकृष्टजपविषयकबोधदर्शनाद् द्योतकतापक्षो न सम्भवति, द्योतकताज्ञानस्योपसर्गत्वज्ञानाधीनत्वात्। आभिर्युक्तिभिर्भाषाविज्ञानदृष्ट्या च मया वाचकतावाद एव सिद्धान्तितः। विस्तृतो विमर्शोऽस्मिन् ग्रन्थ एव द्रष्टव्यः।

'असत्त्व' इति शब्दोऽष्टाध्याय्यामपां तरङ्गेषु तैलबिन्दुरिव प्रक्षिप्तः सन् पश्चाद्भाविवैयाकरणनिकायेषु तत्त्वचिन्तायाः प्रधानतमो विषय उपपन्नः। सर्वैः पश्चाद्भाविभिर्वैयाकरणैरादर्शरूपेण मुनित्रयव्यवस्थाऽङ्गीकृता[२]। अनुवादमात्रमपि कुर्वाणैरेतैः शाब्दिकैः सम्यङ्नानुवादिता मुनित्रयविभुसिद्धान्ताः। एतेषां चर्चायास्तत्त्वानि कानिचित् परिगणितान्यासन्। को नाम सुबर्थः, निपातोपसर्गा द्योतका वाचका वा, 'घटो घटः' इत्यत्र कः शाब्दबोधः, शाब्दबोधस्य को वा परिष्कारपन्थाः? इत्येतान् विषयानाधारीकृत्य वैयाकरणा मिथो वाद्मातेनुः।

व्याकरणाध्ययनस्य प्रयोजनानि निर्दिशता महामुनिपतञ्जलिनोक्तं यत्—'रक्षार्थं वेदानामध्येयं व्याकरणम्'[३] इति निर्देशोऽपि न्यक्कृतोऽर्वाक्कालिकैः शाब्दिकैः। दृश्यते हि व्याकरणशास्त्रस्य वेदाङ्गेषु प्राधान्येन सन्निवेशः। तस्येदमेव हार्दं यद् रक्षार्थं वेदानामध्येयं व्याकरणमिति। अस्मिन्नेवार्थे व्याकरणस्य वेदाङ्गत्वस्वारस्यम्। एवं भाष्यनिर्दिष्टस्य व्याकरणाध्ययनप्रयोजनस्य मुख्यं लक्ष्यमप्युपेक्षितं पश्चाद्भाविभिः शाब्दिकैः।

दशामिमां दर्शं दर्शं चेखिद्यमानमानसैर्भर्तृहरिभिः साधूक्तम्—

प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान्।
संप्राप्य वैयाकरणान् संग्रहेऽस्तमुपागते॥
कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात्।
तस्मिन्नकृतबुद्धीनां नैवावस्थितनिश्चयः[४]॥ इति।

इत्थं संस्कृतवाङ्मये द्विविधं निर्वचनमुपलभ्यते निपातपदस्य। प्रथमं तावत् कार्यकारणमूलकम्, अर्थभूयस्त्वमूलकम्, नामपदव्यवहारमूलकञ्चापि। द्वितीयन्तु—असत्त्वमूलकम्, अत एव द्योतकत्वमूलकञ्च। एके तावदवलम्बते वैदिकसाहित्यम्, अपरञ्च लौकिकमिति।

१. पदमञ्जरी—१।४।५७; २. शृङ्गारप्रकाशः—पृ० ३३।
३. महाभाष्यम्—पस्पशाह्निकम्; ४. वाक्यपदीयम्—२।४७८-४८०।

**निपाताव्ययमौलिको भेदः —**

प्रायेण हि दृश्यते निपाताव्ययोरन्योन्यं वृत्तिसाङ्कर्यम्। तानेव शब्दान् शाब्दिकाः कुत्रचिद् निपातपदेन व्यपदिशन्ति, कुत्रचित्त्वव्ययपदेन। उभयोर्लक्षणान्यपि साङ्कर्यग्रस्तानि, अन्योन्याश्रितानि वोपलभ्यन्ते। असत्त्वगन्धिनो निपाता अपि भवन्ति, अव्ययान्यपि। तदुक्तं जिनेन्द्रबुद्धिना —'सत्त्वमिति च द्रव्यमुच्यत इति। नहि चादिस्वरादिषु मध्ये शब्दः सत्तावाची कश्चिदस्ति। इदं तदिति सर्वनामप्रत्यवमर्शयोग्यो योऽर्थस्तद् द्रव्यमिति'[1] इति। भोजराजेनाप्येवमेवोपपादितम्—'प्रायेणालिङ्गसंख्याशक्तीनव्ययानि'[2] इत्यव्ययलक्षणम्। 'असत्त्वभूतार्थाभिधायिनोऽलिङ्गसंख्याशक्तयो निपाताः' इति निपातलक्षणम्। लक्षणानीमानि अन्योन्यसंसक्तानि दृश्यन्ते। वस्तुतोऽव्ययसंज्ञा तु न वैदिकी। यतो हि तत्र—

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्[3] ॥**

इति गोपथब्राह्मणीयस्यास्य लक्षणस्य व्याप्तिरेव न दृश्यते। वैदिकवाङ्मये सर्वविधाः शब्दाः स्वरूपव्ययवन्तोऽर्थव्ययवन्तश्च दृश्यन्ते। न हि तत्र शब्देषु स्थाणुवृत्तिराद्रियते। साधूक्तं ह्विट्नीमहोदयेन—'पूर्वप्रत्ययैः परप्रत्ययैर्वा आवृताः शब्दा एव व्यवहारपदवीमवतरन्ति। प्रत्ययैरनावृतस्य कस्यचिद् नग्नरूपस्य शब्दस्य विनियोग एव न कर्तुं शक्यते'[4] इति। ह्विट्नीमहोदयस्य सिद्धान्तोऽयं महाभाष्यकारसिद्धान्तेन सह संवदते—'न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्ययः' इति।

वैदिकसन्दर्भैरेतदायाति यत् तत्र सर्वविधाः शब्दा व्ययवन्तोऽर्थात् कारक-विभक्ति-लिङ्ग-संख्यानुगुण्यमप्यनुभवन्ति। किं बहुना, संज्ञापदानामिव निपातोपसर्गाणां तत्र परामर्शो दृश्यते। अधस्तात् तावत् कारक-संख्यान्वितानि निपातपदान्युद्ध्रियन्ते—

(क) तृतीयाविभक्तिभाजः[5]—नमसा, अन्तरेण, अन्तरैः, पराचैः—इत्यादिः।

(ख) चतुर्थीविभक्तिभाजः[6]—आनवाय,[7] अह्नाय, चिराय—इत्यादिः।

---

१. न्यासः—१।४।५७;    २. श्रृंगारप्रकाशः—१, पृ० ९-१० ।

३. गोपथब्राह्मणम्—१।१।२६;    ४. लैंग्वेज एण्ड इट्स स्टडी—पृ० १३ ।

५. क्रमशो द्रष्टव्यम्—ऋ० सं०—१।६३।९, पदमञ्जरी—२।३।४, ऋ० सं० ६।६३।१०, अथर्ववे० ७।४२।१ ।

६. ऋ० सं०—६।६२।९, महाभार० विराट्प० २२।१०, किरातार्जु० १।४४ ।

७. 'आनवाय', 'अणुः', 'आनवस्य'-प्रभृतयो संज्ञाशब्दाः 'अनु' इत्युपसर्गोपादानभूताः।

(ग) पञ्चमीविभक्तिभाजः[१]—बलात्, पश्चातात्, पराकात् —इत्यादिः ।

(घ) षष्ठीविभक्तिभाजः[२]—आनवस्य, चिरस्य, नानानाम्, पुरूणाम्—इत्यादिः ।

(ङ) सप्तमीविभक्तिभाजः[३] —अभीके, परे, पारे, उद्वत्सु, निवत्सु— इत्यादिः ।

नानाविभक्तिजुषामेतेषां शब्दानां विश्लेषणेन निष्क्रष्टुं शक्यते यद् वैदिकभाषायामव्ययपदचर्चाराहित्यस्य प्रधानो हेतुस्तु निपातोपसर्गाणां तत्तद्विभक्तिभाक्त्वमेवासीत् । अतो निष्कर्षरूपेण प्रत्येतुं प्रभवामो यन्निपातत्त्वं हि नामार्थौपयिकी संज्ञाऽऽसीत्, अव्ययत्वन्तु शब्दस्वरूपौपयिकी इति ।

**निपातानां नाममूलकत्वम्**—

भाषाः खलु द्विविधा भवन्ति—शब्दप्रसविन्यः, शब्दाहारिण्यश्च । प्रथमकोटौ प्राचीनभारोपीयभाषाः—संस्कृत-ग्रीक-लैटिन-प्रभृतयोऽन्तर्भवन्ति, द्वितीये तु समास्ता आधुनिक्यो भाषाः समायान्ति । नवनवानां शब्दानां प्रसवदृष्ट्या संस्कृतभाषा काममनन्यतमाऽस्ति । वैदिकवाङ्मये बह्व एतादृशाः संज्ञाशब्दा दृश्यन्ते, ये निपातोपसर्गोपादानभूताः । न हि तत्र कश्चिद् दृढाग्रहो दृश्यते निपातानां नामत्वेन परामर्शनिषेधे । निपातोपसर्गोपादानभूतानि नामपदानि "**चादयोऽसत्त्वे**" इति सूत्रस्य मिथ्यात्वं प्रख्यापयन्ति । ते च नामशब्दा येन केन प्रकारेण कृत्स्ने संस्कृतसाहित्ये व्यवहृता दृश्यन्ते । ते चाधस्तात् प्रस्तूयन्ते—

(क) अणुः<अनुः—'अणुः'[१] इति संज्ञाशब्दः 'अनु' इत्युपसर्गविपरिणामः[४] ।

(ख) आनवः[५]<अनुः—अनोरपत्यमानव इति नामा कश्चिद्वैदिको राजा । अनूपसर्गस्य संज्ञात्वमत्रापि दृश्यते ।

(ग) उमा<उ+मा>उमा[६]—इति संज्ञापदमपि निपातद्वयसमाहारभूतम् ।

(घ) पुरुः—इति संज्ञाशब्दोऽपि 'पुरु'[७] इत्युपसर्गप्रतिरूपः ।

(ङ) दोषा[८]–इति रात्रिवाचकः संज्ञाशब्दो निपातत्त्वेनापि परामृष्टोऽवलोक्यते ।

(च) सनकः[९], सनत्कुमारः, सनन्दनः, सनातनः प्रभृतयो नामशब्दा अपि 'सना' इति निपातोपादानभूताः ।

---

१. नामलिंगानु० २।८।१०८, ऋ० सं०—७।७३।५, १०।२२।६ ।

२. ऋ० सं० —७।१८।१३, अभिज्ञानशा० ५।१५, ऋ० सं०—९।१।१२।१, तत्रैव—१।५।२ ।

३. ऋ०सं०—४।१३।५, शतपथब्रा० ५।१।५।२१, ऋ०सं० १०।१८८।५, तत्रैव-१।१६१।११ ।

४. निरुक्तम्—६।८ —दुर्गव्याख्या; ५. ऋ० सं०— ६।६२।९— स्कन्दभाष्यम् ।

६. कुमारसम्भवम् – १।२५—अरुणगिरिनाथव्याख्या ।

७. ऋ० सं०—१।१०८।८—सायणभाष्यम्; ८. तत्रैव—६।७१।४—स्कन्दभाष्यम् ।

९. ऋ० सं०—१।३३।४, १।६२।७—स्कन्दभाष्यम्, भागवतम्—२।७।५—श्रीधरीव्याख्या, अमरकोषः—१।१।५१—सर्वानन्दव्याख्या ।

ऐतिहासिकपदविज्ञानदृशा निपातोपसर्गमूलकानि नामपदानीमानि 'निपाता द्योतकाः' इति मिथ्यावादमन्यथयन्ति। अस्मिन्नेव सन्दर्भे किलाधुनिकभाषाशास्त्रविदाम्—मैक्समूलर[१]–ह्विट्नी[२]–बरो[३]-वान्द्रियैज्[४]–गुणे[५]—प्रभृतीनां प्रतिपादनमिदं समीचीनं प्रतिभाति यत्—'निपातोपसर्गा अपि नाम-सर्वनामशब्दानां स्खलितावशेषाः' इति।

**निपातानां सर्वनाममूलकत्वम्—**

एतादृशा अपि निपाता अनुसन्धानेनान्विष्टाः, ये सर्वनामकोटिमप्यधिरोहन्ति। बहवो निपाता गैर्वाण्यां दृश्यन्ते, ये मूलतः सर्वनामकक्षातोऽधःकृताः। 'अहम्'[६], आकीम्[७] <आ + किम्> आकीम्, किम्[८], तत्-यत्[९], नकिः[१०] <न + कश्चित्> नकिः, माकीम्[११] <मा + किम्> माकीम् > माकिः[१२], मा + कश्चित् > माकिः, ते[१३]-मे, सा[१४], हिकम्[१५] <हि + कम्> हिकम् —प्रभृतयो निपाताः सर्वनाममूलकाः।

अवेस्ताभाषायामप्येतादृशाः सर्वनाममूलका निपाता दृश्यन्ते। कश्च > अवे० चिश् च, ताश्चित् > अवे० तासचित्, तेचित् > अवे० तए चित्, माकिः > मा चिश्—प्रभृतय आवेस्तिका निपाता अपि सर्वनाममूलकाः।

**निपातानामाख्यातमूलकत्वम्—**

संस्कृतभाषायां दृश्यन्ते हि भूयांसो निपाता आख्यातमूलकाः। अत्रेदमवधारणीयं वर्तते यद् आख्यातमूलकानां निपातानां विकासोऽर्वाक्कालिकः। न हि श्रुतिसाहित्य आख्यातमूलकनिपातानां प्रयोगोऽवलोक्यते। ते चाख्यातप्रतिरूपका निपाता अवस्तात् प्रस्तूयन्ते—अस्ति,[१६] नास्ति,[१७] अस्तु,[१८] आह,[१९] आस,[२०] स्यात् प्रभृतयो[२१]

---

१. लेक्चर्स आन दी साइंस आफ लैंग्वेज, पृ० २३६; २. लैंग्वेज् एण्ड इट्स स्टडी – पृ० ५३।
३. संस्कृत-भाषा-पृ० ३२५; ४. भाषा पृ० ७०; ५. तुलनात्मक-भाषा-विज्ञान–पृ० ६५।
६. नामलिङ्गानु० २।८।१०१–क्षीरस्वामिव्याख्या; ७. ऋ० सं०–१।१४।९–स्कन्दभाष्यम्।
८. महाभारतम्, कर्णप०—५०।२४— नीलकण्ठीव्याख्या; ९. निरुक्तम् – ६।६—दुर्गव्याख्या।
१०. ऋ० सं०—१।२७।८—स्कन्दभाष्यम्; ११. ऋ० सं०–६।५४।७–माधवीया व्याख्या।
१२. अथर्ववेदः—१९।४७।६–सायणभाष्यम्; १३. अभिज्ञानशा०–३।२–माधवभट्टव्याख्या।
१४. ऋ० सं०—१।१९१।११—सायणभाष्यम्।
१५. तत्रैव–१०।५०।५, अथर्ववेदः–३।१३।३–सायणभाष्यम्; १६. अवेस्ता–पृ० ५८,५७,६२।
१७. पदमञ्जरी –२।२।२४, महाभाष्यम्—२।२।२४; १८. काशिका—४।४।६०।
१९. न्यासः—६।३।७०; २०. दुर्गासप्तशती—४।२८—शान्तनवीव्याख्या।
२१. सरस्वतीकण्ठाभरणम्— १।१।१२५—हृदयहारिणीव्याख्या।

निपाताः क्रियाप्रतिरूपकाः सन्तोऽपि क्रियार्थं न प्रकटयन्ति । उक्तञ्च जिनेन्द्रबुद्धिना— "अस्तिशब्द इत्यादि विभक्ति-स्वर-प्रतिरूपकाश्चेति निपाता भवन्तीति निपातसंज्ञकं तिङन्तसदृशं प्रातिपदकमेतत्, न तिङन्तः, एतच्च तिङन्तेन समानार्थम् । यथा— अस्तिक्षीरा ब्राह्मणी । भिन्नार्थश्च यथा—धने वर्तते, अस्तिमानिति=धनवानिह गम्यते । तदिह विशेषस्यानभिधानादुभयस्यापि ग्रहणम्[1] ।" एवमेवान्येऽपि किलाख्यात-प्रतिरूपा निपाताः प्रयुज्यन्ते स्म संस्कृतभाषायाम् ।

**नामधातुवदपि निपातानां व्यवहारः —**

नामधातूनामिव निपातानामपि व्यवहारो दृश्यते । तथा च ऋग्वेदे – 'सनायते गोतम इन्द्र'[2] इति । व्याकरोति स्म मन्त्रममुं सायणाचार्यः—'स इन्द्रः सनायते= नित्य इवाचरति । सना इति निपातो नित्यशब्दसमानार्थः । तस्मादाचारार्थे क्यङ्प्रत्यय इति । एवमेव 'स्वधा' इति निपातोऽपि नामधातुवद् भागवते व्यवहृतोऽवलोक्यते । तथा हि श्लोकः—'अमृतमयगभस्तिभिः स्वधयति'[3] । आचार्यश्रीधरेण स्वधयति इत्यस्य व्याख्यां कुर्वतोक्तम्—'स्वधयति=शान्तिं गमयतीत्यर्थः' इति । एवमेवान्येऽपि निपाता नामधातुवद् व्यवहृता भवेयुरिति ।

**विभक्तिप्रतिरूपका निपाताः —**

गैर्वाण्यामालोकपदवीमवतरन्ति भूयांसो विभक्तिप्रतिरूपका निपाताः । तथा हि सिद्धान्तितं महाभाष्यकारेण—'उपसर्ग-विभक्ति-स्वरप्रतिरूपकाश्च निपाता भवन्तीति'[4] इति । एवंविधा विभक्तिप्रतिरूपका लोक-वेद-साधारणाः । ते च यथा— अत्र,[5] अधुना,[6] अन्तरतः,[7] अन्तितः,[8] अन्येद्युः[9], अभितः,[10] अर्वावतम्[11]—अर्वावतः, इत्था,[12] तादीत्ना,[13] यत्र-तत्र[14] शुभम्-भद्रम्, [15]सुदि-वदि[16] स्थाने[17]-प्रभृतयो निपाता विभक्तिप्रतिरूपकाः । भूयांसोऽन्येऽपि विभक्तिप्रतिरूपका निपाताः संस्कृतभाषायाः श्रियं समेधयन्ति । विभक्तिप्रतिरूपैरेतैर्निपातैर्निष्क्रष्टुं शक्यते यत् संस्कृतवाङ्मयस्या-

---

१. न्यासः—४।३।५६;
२. ऋ० सं०—१।६ ।१३—सायणभाष्यम् ।
३. भागवतम्—५।८।२५—श्रीधरीव्याख्या;
४. महाभाष्यम्—२।२।२४ ।
५. शुक्लय०— ६।३—उव्वटभाष्यम्;
६. ऋ० सं०—१०।६१।२३—सायणभाष्यम् ।
७. तै० सं०—७।२।१०—भट्टभास्करभाष्यम्;
८. ऋ० सं०—१०।११४।४—सायणभाष्यम् ।
९. अथर्व०—१।२६।४—सायणभाष्यम्;
१०. प्रदीपः—८।३।२ ।
११. ऋ० सं०— ३।४१।८-९-सायणभाष्यम्;
१२. तत्रैव—६।५९।२—स्कन्दभाष्यम् ।
१३. तत्रैव—१।३२।४;
१४. वाररुचनिरुक्तसमुच्चयः—४।९ ।
१५. प्रदीपः—७।३।४६;
१६. प्रक्रियाकौमुदी, भूमिका—पृ० ३१ ।
१७. कुमारसंभवम्—६।६७—नारायणव्याख्या ।

विच्छिन्ने प्रवाहे निपाता अपि रूपोपचयापचयवन्त आसन्। भाषाया ऐतिहासिके संस्रवे शब्दाः स्खलितवृत्तयः, क्षीणस्वरूपाश्चोपपद्यन्त एव।

**स्वरप्रतिरूपका निपाताः—**

स्वरप्रतिरूपका अपि निपाता उपयुज्यन्ते संस्कृतभाषायाम् 'अ अपेहि' 'आ एवं नु मन्यसे', 'इ इन्द्रं पश्य', 'ई ईदृशः संसारः', 'उ उत्तिष्ठ', 'ऊ ऊषरे बीजं वपसि', 'ए इतो भव', 'ओ ओ श्रावय' अमीषूपर्युक्तेषु[1] वाक्येषु स्वरप्रतिरूपकाणां निपातानामुपयोगोऽवलोक्यत एव। एवमेव स्तोभादिषु, गुह्यतान्त्रिकमन्त्राणां विनियोगेषु, अभिचारक्रियादिषु च—कुं, खुं, गुं, घुं, ऐं, ह्लौं क्लीं-- श्रीङ्-प्रभृतयो[2] निपाता विनियोजिता दृश्यन्त एव।

**धातूपसर्गोपश्लेषजन्या निपाताः—**

धातूपसर्गसंसर्गजन्या भूयांसो निपाता व्यवहृता दृश्यन्ते श्रुति-स्मृति-वाङ्मये। एतदपि ध्यातव्यमस्ति यद्यथा धातूपसर्गसंसर्गोपिता निपाता भवन्ति, तथैव धातूपसर्गसंसर्गजन्या धातवोऽपि दृश्यन्ते। अनुसन्धानप्रबन्धेऽस्मिन् तादृशा धातवोऽपि यथास्थानं विविक्ताः। अत्र प्रसङ्गोपात्ता एतादृशा निपाता एव विमर्शयिष्यन्ते, येषामात्मलाभो धातूपसर्गास्कन्दजन्यः।

(क)—[3]अपाक्—'अपाक्<अप + √अञ्च ⌊=गतौ⌋ > अपाक्' इति निपातो धातूपसर्गपरिणामोऽधोऽर्थे प्रयुक्तः।

(ख)—आनुषक्—[4]इति वैदिको निपातोऽनुषञ्जनार्थे प्रयुक्तो दृश्यते। व्युत्पत्तिस्त्वस्य—अनु + √षञ्ज् ⌊=सङ्गे⌋ >आनुषक्—एवंविधो दृश्यते।

(ग)—उपाकः[5]—'उपाकः' इति निपातः प्रायेण सप्तम्यन्तोऽपि 'उपाके' इति रूपेण दृष्टचरः। अस्यापि निपातस्य जन्म धातूपसर्गोपश्लेषेणैवोपपन्नम्। तद्यथा—'उप + √अञ्च् ⌊=गतौ⌋ >उपाकः; उपाके' इति। अन्तिकार्थकोऽयं निपातः।

(घ)—न्यक्[6]—'न्यक्' इति निपातोऽपि धातूपसर्गोपश्लेषप्रभवः। व्युत्पत्त्याऽयम्—नि + √अञ्च् ⌊ = गतौ⌋ >न्यक्=अधोभावे इति प्रतिभाति।

---

१. द्र० सरस्वतीकण्ठाभरणम्—१।१।१२६-हृदयहारिणीव्याख्या।

२. द्र० गरुणपुराणम्—अध्यायः—७; नित्या० षोड० परिशि० २।

३. ऋ० सं०—८।२८।३; १०।४५।७—सायणभाष्यम्।

४. तत्रैव—१।२७।७; ३।११।१—सायणभा०; शब्दरत्नाकरः—६।११०।

५. ऋ० सं० - ८।६।२५—सायणभा०।

६. महाभारतम्, उद्योगप० ८३।२४।

**( ङ )—प्रायः[1]**—'प्रायः' इति निपातोऽपि धातूपसर्गश्लेषप्रतिरूपकः। इत्थम्—

प्र + √अय ⌞ = गतौ ⌟ > प्राय — इत्यस्य स्थितिः।

एवमेव विषूचः[2] < विषु + √अञ्च् ⌞ = गतौ ⌟ > विषूचः, स्वगा[3] < सु + √गम् ⌞ = गतौ ⌟ > स्वगा, स्वधा[4] < सु + √ अद् ⌞ = भक्षणे ⌟ > स्वधा, स्वस्ति[5] < सु + √ अस ⌞ = भुवि ⌟ > स्वस्ति, स्वाहा < सु + आह > स्वाहा[6]-प्रभृतयो निपाता अपि धातूपसर्गप्रसवाः। इमे धातूपसर्गसंसर्गलब्धात्मनो निपाता औपलक्षणिका एव।

**निपातानां सङ्ख्या—**

निपातानां संख्याविषये कृत्स्ने श्रुति-स्मृतिवाङ्मये नावलोक्यते काचिद् विसंवादरहिता तत्त्वदृष्टिः। निर्वचनकारैः शाब्दिकैश्च पदे पदे किलोदघोषि यन्निपाता अपरिमिता इति। तथा च शौनकः—

**इयन्त इति संख्यानं निपातानां न विद्यते।**
**प्रयोजनवशा ह्येते निपात्यन्ते पदे पदे[7]॥** इति।

निरुक्तव्याख्याने दुर्गाचार्येणापि संश्लोकितं यद् अपरिमिता निपाता भवन्तीति-"अपरिमिताश्च निपाता इति"[8] इति। स्वतः प्रमाणभूतेनाचार्यपतञ्जलिनाऽपि सिद्धान्तितं यन्निपातादीनां संख्यानिर्धारणन्तु असम्भवप्रायमेव। तद्यथा "को[9] हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुमिति"। अभीभिः सिद्धान्तैः खलु स्थिरीक्रियते यद् निखिला अपि चादिपाठा गणपाठाश्चौपलक्षणिका एव। ते हि खलु वाङ्मयार्णवेऽङ्गुलिनिर्देशनमात्रं कुर्वन्ति। भोजव्याकरणकर्त्रा साधूक्तं यन्निपातगणे परिसंख्यातेभ्योऽन्येऽपि निपाताः सन्तीति—

**निपातगणतो ग्राह्या निपाता अपरेऽपि च।**
**अव्ययान्यपराण्येव ग्राह्याण्यव्ययकामतः[10]॥** इति।

अमीभिः शास्त्रीयैः प्रमाणैर्निपातानां प्रायोगिकरूपोपचयापचयैश्च किलैतन्निष्क्रष्टुं शक्यते, यन्निपाताः संख्यया मातुमनर्हाः। यतो हि कुत्रचिदेतेषां सगोत्रीयैरुपश्लेषैः,

---

१. शतपथब्रा० —५।५।४।८; पदमञ्जरी—२।३।१८।
२. शुक्लयजुर्वेदः —१९।१०—उव्वटभाष्यम्;
३. अथर्ववे०—७।९७।४—सायणभाष्यम्।
४. मनुस्मृतिः —३।२५४—कुल्लूकभट्टव्याख्या;
५. निरुक्तम् — ३।४—दुर्गव्याख्या।
६. तै० सं०—१।२।५—भट्टभास्करभाष्यम्;
७ बृहद्देवता—२।९५।
८. निरुक्तम्—१।१—दुर्गव्याख्या;
९. महाभाष्यम्—२।१।१।
१०. बृहद्देवता—२।७३।

कुत्रचिद्धातुभिर्योगैः, कुत्रचिन्नामनिपातसङ्घातैः, कुत्रचित् सर्वनामनिपातास्कन्दनैः, कुत्रचिदाख्यातप्रतिरूपकैः, कुत्रचित् स्वररूपेणोद्भवैः, कुत्रचिच्चानुकरणमूलकध्वनिरूपेण विजृम्भणैर्निपातानां संख्योपचयः केन रोद्धुं शक्यते ? एवं विविधैरुपादानकारणैः किल समृद्धिमेति निपातराशिः। नवनवानां निपातानामुद्भवे खल्विमान्येवोपादानकारणानि दृष्टचराणि। न हि निपातसंपत् नाम-सर्वनाम स्वर-अनुकरण-धातुआख्यात-प्रभृतिभ्यो भाषासम्पद्भ्यः पृथक्कर्तुं शक्यते। समर्थ्यते चेमां निष्कर्षप्रमां शौनकाचार्यः—

**नैपातिकानां नाम्नां तु प्रागुक्तैर्नामलक्षणैः।**
**सम्पन्नानां पृथक्त्वेन परिसंख्या न विद्यते[1]॥** इति।

एतादृशैरेव निष्कर्षतत्त्वैः किल सभाजितमिदं तत्त्वम् आधुनिकभाषाशास्त्रान्वेषणधृतव्रतैः—मैक्समूलर[2]—बरो[3]—टर्नर[4]—ह्विट्नी[5]—इमेरिक[6]—डेनिस्टन[7]—ब्रैंडरेथ[8]—ट्रम्फ[9]—वाल्टरस्काट[10]—प्रभृतिभिः संस्कृतवाङ्मयसमुपासकैः।

अत्रेदमपि विचारणीयं प्रासङ्गिकं भाति यत् खलु दृश्यते हि निपातानां भारोपीयार्यभाषानिपातैः रूपप्रतिमाभिश्च आनुपूर्व्या संवादः। संस्कृतभाषाक्रोडे स्वायत्तीकृतेषु शब्दनिकायेषु यथा निपाता रूपमूर्तिभिरर्थमूर्तिभिश्च प्रत्नयोरोपीयार्यभाषानिपातैः सह संवदन्ते, न तथैतद्वर्गीया नाम-आख्यातशब्दाः संवादतुलामधिरोहन्ति। अस्याविकलकौटुम्बिकसंवादस्य प्रधानो हेतुस्तु किलैतिहासिकेऽविच्छिन्नप्रवाहे निपातानां प्रायेण रूपोपचयापचयाभाव एव कल्प्यते। यतो हि यथा नामपदेष्वाख्यातपदेषु च कालिकाः, दैशिकाः, आर्यजातिसम्पर्कमूलकाश्च विपरिणामाः सङ्घटन्ते, एतेषां रूपव्ययस्वभावत्वात्, न तथा निपातपदेषु, तेषां रूपव्ययाभावस्वभावत्वादिति। अतः साम्प्रतिके काले सगोत्रीयाणामार्याणां सामीप्यापादने, एकगोत्रोद्भवस्रोतस्यानुसन्धाने च तत्तत्

---

१. बृहद्देवता—२।७३; २. लेक्चर्स आन दि साइंस आफ लैंग्वेज—पृ० २६९।
३. संस्कृत-भाषा—पृ० १८०।
४. ए कम्पैरेटिव एण्ड एटिमालाजिकल-डिक्श० आफ् नेपाली लैंग्वेज—पृ० १३।
५. ओरिएण्टल एण्ड लिंग्विस्टिक स्टडी—पृ० १६९।
६. ए ग्रामेटिकल स्टडीज़्—पृ० १५४-५५; ७. दि ग्रीक पार्टिकिल्स—पृ० ४५।
८. दि गौडियन एण्ड दि रोमेन्स लैंग्वेजेज़्—इ० एल० ब्रैंडरेथ—जर्नल आफ दि रायल एशियाटिक सोसाइटी—लन्दन, वाल्यू० १२; १८८० ई०।
९. आन दि डिक्लेंसनल फीचर्स आफ् दि नार्थ इण्डियन-वर्नाक्युलर्स-इ० ट्रम्फ़—जर्नल आफ् दि रायल एशियाटिक सोसाइटी, लन्दन, वाल्यूम—१९।
१०. दि साइंस आफ एटिमालाज़ी—पृ० १५६।

प्राचीनभारोपीयार्यभाषानिपातानां संवादमूलकः, तुलाबोधकश्च विवेको महते श्रेयसे कल्प्यते ।

अनुसन्धानप्रबन्धममुं निर्मातुकामेन मया महदसौविध्यमनुभूतम्, यतो हि विषयममुमधिकृत्य न कश्चित् सम्पूर्णो ग्रन्थो भारतीयासु भाषास्वासादितः । यत्र तत्र शोधपत्रिकासु विवरणमूलका लेखा दृष्टचराः; किन्तु तेषु लेखेषु विवरणमात्रमेवोपलब्धम् । एतादृशं गवेषणसामग्र्यभावोपेतं विषयमूरीकृत्य मधुकरवृत्त्याश्रितेन मया संस्कृतवाङ्मयस्याकरग्रन्थरत्नान्येव विशेषत आलोडितानि । अतः प्रथमे प्रयासेऽस्मिन् यास्त्रुटयो भवेयुस्तदर्थमहं कृपालुभिः सूरिभिः क्षन्तव्य इत्यभ्यर्थये ।

विश्वेश्वरपुर्याम्,<br>
वसन्तपञ्चम्याम्,<br>
वि० सं० २०४६<br>
(३१ जनवरी, १९९०)

विदुषां विधेयः<br>
हरिश्चन्द्रमणित्रिपाठी<br>
प्रकाशनाधिकारी<br>
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य<br>
वाराणसीस्थस्य

# किमप्यस्मदीयम्

नत्वा पाणिनिमार्षवाक्पतिमिमं शब्दैकवारां निधिं
यद्गाम्भीर्यतलावगाहनविधौ व्यग्रा समग्रा बुधाः।
अद्यावध्यपि यस्य नान्तमयते कश्चिद् विपश्चिद्वरः
तस्यैकांशनिपातनिर्णयपरः शोधोऽयमुन्मीलितः॥

पाणिनीयनिपातार्थनिर्णयो नाम सार्थकः।
प्रबन्धो विहितो नूनं मया स्यात्सुधियां मुदे॥

अथायमनुसन्धानप्रबन्धो निपातार्थनिर्णयो नाम मया सुबहुश्रमसाध्यकार्यानुबन्धी आचार्यश्रीपण्डितकालिकाप्रसादशुक्लमहाशयानां गुरुवर्याणां नैकशास्त्रतत्त्वाधिगमपटुमतीनां कविकाव्यकोविदानां सुख्यातवैदुष्यकीर्तीनां निर्देशने पूर्तिमानीतः। पूज्यानां शुक्लचारित्र्यव्रतानां गुरुवरश्रीशुक्लपादानां मां प्रति पुत्रनिर्विशेषस्नेहौदार्यशिष्यवैशिष्ट्यप्रदानादिभावस्यैव प्रभावो ममास्य शोधप्रबन्धस्य मूलहेतुरिति कदाप्यहं विस्मर्तुं न शक्नोमि, अतस्तान् कृतज्ञतया स्मरामि प्रणमामि च—

श्रीकालिकाशुक्लवरो बुधेन्द्रः
पुत्रोपमस्नेहमतिप्रदानात्।
अकारयच्छोधनिबन्धपूर्ति
तज्ज्ञानदानस्य फलं पुरस्तात्॥

अतस्तान् विबुधश्रेष्ठान् वैयाकरणमूर्धगान्।
काव्यसाहित्यतत्त्वज्ञान् विनयेन नमाम्यहम्॥

अपि च यैरहं वटुकल्पो वेदाध्ययने तत्पाठपरिशीलने प्रवर्तितः, ऋषिकल्पास्ते स्व०पण्डितश्रीकमलनाथशुक्लमहोदयाः श्रीपरशुरामचण्डिकावेदमहाविद्यालयस्य प्राचार्यचरा मया हृदयेन स्मारं स्मारं प्रणम्यन्ते, संस्मर्यन्ते च—

श्रीमत्कमलनाथाख्यः शुक्लो नामर्षिकल्पकः।
वेदाधीति गुरुं चाद्यं नमामि श्रद्धयान्वितः॥

ये साभिनिवेशविशेषेण व्याकरणशास्त्राध्ययनप्रवृत्तिं मदीयामुद्भाव्य प्रेरणां प्रादान्, तेभ्यः श्रीमद्भ्यो ब्रह्मचारिहरनारायणत्रिपाठिभ्यः साञ्जलि मम प्रणतयः सन्तु—

**येन व्याकरणस्याध्ययने मे रुचिरुत्तमा व्यधायि ।**
**तस्मै हरनारायणयतिवर्याय त्रिपाठिने नमोऽस्तु ॥**

ये च शोधकार्यस्यावधिमनवधीकारक्रिययाऽऽनन्त्यमापादयन्तो जिज्ञासूनामन्तस्तले निगूहितं मन्दज्योतिः प्रकाशपुञ्जीकुर्वन्तो ज्ञाताज्ञातोभयतत्त्वराशिमुन्मीलयन्तश्च भारतीयसंस्कृतिमहोपवनस्य कुसुमाकरायमाणाः स्वर्गताचार्यवर**हजारीप्रसादद्विवेदिनो** मम स्मृतिपथमुपेता निरन्तरप्रेरणाप्रदास्ते मदनुसन्धानकर्मणि प्रणयाप्लुतचेतसा सशिरोऽञ्जलि प्रणम्यन्ते—

**ये राष्ट्रभाषोद्गमभूहजारीप्रसादविज्ञाः कुसुमाकराभाः ।**
**शोधप्रबोधप्रणिधानमूलप्रमापकास्ते च मया प्रणम्याः ॥**

ये च परमोदारमतयः कारुण्यपारावारप्रतिमूर्तयः प्रथितसत्कीर्तयः सातिशयस्नेहेन ममास्य शोधकार्यस्य प्रत्येकं पङ्क्तीनां निरीक्षणे यथार्थनिर्देशने च बहूपयोगिसाहाय्यमकार्षुस्तेषां गुरूणां पितृकल्पानामाचार्य**श्रीकरुणापतित्रिपाठिमहोदयानां** कृते साभारश्रद्धानिबद्धादरभरमुपहरामि—

**बुधवरः करुणापतिरुन्मुखीभवदमन्दमनोज्ञसदाशयः ।**
**गुरुकृपापरया सुदृशा सदा मदुपकारकृदेष विशेषतः ॥**
**येषामपारकरुणापरिपूर्णचेतो-**
**हेतोरगान्मम च पूर्तिमयं प्रबन्धः ।**
**तेषां निजीयजनकोपमहार्दभाव-**
**स्निग्धान्तरङ्गमनसां चरणौ नमामि ॥**

शोधकर्मणोऽस्य यशस्विस्वरूपसमाहरणे फलोन्मुखीकरणे चाहर्निशं प्रेरयद्भिर्विलम्बलम्बनं प्रमादं जाड्यादिदोषं दूरयद्भिर्दूरीकुर्वद्भिश्च ज्ञानासिना दिङ्मोहदौर्बल्यपाशमुच्छिनद्भिर्विश्रुतविद्वद्भिः प्राच्यपाश्चात्त्योभयवाङ्मयनिगूढतत्त्वविद्भिश्चतुरस्रभाषाविज्ञानप्रमाणप्रमितिप्रमेयाप्रमेयप्रबोधप्रख्यातवैपश्चिती चित्तान्तःकरणौदार्यविकसन्मतिभिः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिभिः श्रीमद्भिः आचार्यप्रवर**श्रीविद्यानिवासमिश्र**महाशयैरहमनुगृहीतोऽस्मि, तेभ्यो मूर्ध्ना नतिततीरर्पयामि—

**येषामत्र विशिष्टविश्वविकसद्वैदुष्यपुष्यत्प्रभाऽऽ-**
**कृष्टाः शिष्टबुधा दधत्यनुदिनं वैशिष्ट्यमन्तर्दृशा ।**
**शास्तृत्वेऽपि च शास्त्रमर्मणि च ते विद्यानिवासप्रधी-**
**मन्तः सन्ति विचक्षणाः कुलपतिप्रख्यं दधानाः पदम् ॥**
**शोधप्रबन्धरचने वचनैरनेकै-**
**र्यैर्बोधवर्धनपरैरहमीरितोऽस्मि ।**
**विद्यानिवासविबुधेभ्य उदारचेतो**
**विद्भ्यो नतीश्च शिरसाऽनिशमर्पयामि ॥**

अस्मदीयस्यास्य शोधप्रबन्धस्य प्रणयने प्रणयेन प्रेरणाप्रदायका अज्ञानान्धतमसः प्रकाशप्रसारकाः प्रेमौदार्यप्रियवचोविस्तारकाः स्वनामधन्यवदान्यमान्यश्री**गौरीनाथशास्त्रिणः** कुलपतिचराः ( सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य ) सादरं प्रणम्यन्ते मया अयाचितोचितपरामर्शप्रकाशनार्थम्—

**औदार्यसत्कार्यविचारचारु-**
**प्रकाशभास्वद्धृदया दयार्द्राः ।**
**श्रीशास्त्रिणो मानधनाढ्यगौरी-**
**नाथा विनम्यन्त इमे मया ते ॥**

महाकविमाघकाव्यप्रयुक्तस्यैकस्य 'स्वित्' इत्येतस्य निपातस्य नानार्थच्छटाः प्रकटीकुर्वन्तो निष्कपटविशिष्टस्वरूपसस्मितास्यहास्यविकासिनस्तत्त्वविदां वराः कुलपतिचराः ( सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य ) **आचार्यश्रीवेङ्कटाचलमहानुभावा** ममास्य शोधस्य प्रभावसंवर्धनमकुर्वंस्तेषामाधमर्ण्यमानतेन मौलिना बिभर्मि—

**स्विदेष माघोक्तनिपात उच्चै-**
**र्यैर्नैकधाऽर्थेषु निदर्शितोऽभूत् ।**
**तेषामहं श्रेष्ठधियां कृतज्ञो**
**नतेन मूर्ध्नोपकृतिं दधामि ॥**

ये च ममोत्तममार्गदर्शकाः सुतनिर्विशेषेण मयि स्निग्धां दृष्टिं दधाना **आचार्यश्रीभूपेन्द्रपतित्रिपाठिनो** वैयाकरणमूर्धन्या धन्यानन्यजीवना व्याकरणविभागाध्यक्षचराः (सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य) श्रीमद्भागवतस्य विख्यातायां श्रीधरीत्याख्यायां व्याख्यायां सुख्यातानां निपातानां संग्रहे विवेचने च मदीयशोधप्रबन्धनिबन्धनेऽनिर्बन्धानुसन्धानध्यानमावर्जितवन्तस्तेषां स्वर्गतानां महामतीनां कार्तज्ञ्यं सप्रणति मनसि बिभ्राणोऽहं नैव तृप्तिमनुभवामि—

**यैः श्रीधरीति विदितां महितां च टीका-**
**मालोड्य तद्गतनिपातनिदर्शनेन ।**
**शोधे व्यधायि सुबहूपकृतिं तदेषां**
**भूपेन्द्रनामविदुषां स्मृतिमाश्रयामि ॥**

वैयाकरणकेसरिणश्छात्रवात्सल्यसारल्यसंवलितशेमुषीका ऋषिकल्पसङ्कल्पोन्मुखीभूतसदाचारोचितचारुचरित्राः पवित्रपाण्डित्यपरम्परापरिपालनतत्परा **आचार्यश्रीरामप्रसादत्रिपाठिनो** मङ्गलाभिशंसनमालिख्य मामुपकृतवन्तस्तेषामाशिषा विशेषभारमावहन्नहं तान् विनयेन शिरसा प्रणमामि—

**अगाधशब्दार्णवगाहमाना**
**रामप्रसादाख्यसुधीन्द्रपादाः ।**
**शिष्यप्रियत्वान्ममार्गसर्ग-**
**प्रदीपकाः सन्ति गुरुप्रदीपाः ॥**

**शब्दारण्यविचारे केसरिणो ये मनीषिमूर्धन्याः ।**
**शोधेऽस्मिन् शुभशंसां कृतवन्तस्तान्नमामि विबुधेन्द्रान् ॥**

**"तस्य वाचकः प्रणवः"** इत्येष योगसूत्रस्य **'प्रणव'**शब्दो यश्चोङ्कारतया 'निपात' इत्यभिधीयते, तस्यौपनिषद्वैदान्तिकावस्थानविशेषोपस्कारे पुष्कलसामग्रीसमाहारे च सुबहूपकुर्वन्तस्तत्समुचितां दिशमुन्मीलयन्तश्च श्रीमन्त **आचार्यश्रीदेवस्वरूपमिश्र**महोदया ममास्मिन् शोधकर्मणि कृतेच्छायोगाः स्वच्छान्तःकरणेनाभिनन्द्यन्ते शिरसा प्रणम्यन्ते च—

**योगस्थलप्रणव ओमिति तन्निपात-**
**प्रेष्ठस्वरूपमभिधाय हितं विधाय ।**
**देवस्वरूपसुधियो विहितोपकाराः**
**शोधेऽत्र सादरभरादभिनन्दनीयाः ॥**

ममास्य शोधग्रन्थस्य यथाशीघ्रप्रकाशने सम्भावितप्रभाविविघ्नविलम्बापनोदने चिन्तातुरतां दर्शयन्तो नैजकृतिगतक्षतिमिव विदन्तश्च दैवादकाले दिवङ्गताः **पण्डितश्रीविश्वम्भरनाथत्रिपाठिनो** न कदापि विस्मर्यन्ते, यैरहमनुपदमस्मिन् शोधानुबन्धिनि शुभकर्मणि सततसम्प्राप्तप्रोत्साहनोऽस्मि—

**यैश्च प्रोत्साहितोऽभूवं शोधबन्धप्रकाशने ।**
**तेषां हार्दस्मृतिं कुर्वे विश्वम्भरत्रिपाठिनाम् ॥**

कठिनतरकर्मधर्मैकपाठपाठका डॉ० **शम्भुनाथसिंह**विचारकाः, येषां सोपष्टम्भोपालम्भने स्नेहस्निग्धोपश्लेशने किं महार्घमिति निश्चेतुमशक्नुवानोऽहं तदीयप्रशस्तप्रेरणाप्रसूतात्मबोधोद्बुद्धशोधनिबन्धमेनं मन्वानो नितरां प्रसीदामि—

**सङ्घर्षाध्वनिकर्मण्यप्रदीपस्य प्रकाशकाः ।**
**श्रीशम्भुनाथसिंहास्ते मद्बोधे शोधहेतवः ॥**

अनिवार्येऽस्मिन् शोधकार्येऽलभ्यग्रन्थनामनिर्देशेन शोधपत्रिकादिबोधविकासेन तथा तादृशशैलीविधानोपदेशेन च वैशिष्ट्यप्रकर्षमुद्भावयन्तः समग्रश्रमणविद्योदात्तावदाततत्त्वमर्मज्ञाः प्राच्यपाश्चात्त्यवैचारिकाचारदर्शनाभिज्ञाः **पण्डितश्रीलक्ष्मीनारायण-**

त्रिपाठिनो हृदयेनाभिमन्यन्ते प्रणम्यन्ते च मयाऽस्मदुपज्ञेयानुसन्धानमार्गोन्मीलनाय विशिष्टत्वप्रदानाय चेति—

ये वस्तुतो विष्वगमन्दलक्ष्मी-
नारायणाह्वानधनं दधानाः।
सत्प्रेरणादातृवरा वदान्या
धन्या अनन्या ननु संविभान्ति॥
शोधौपयिकपत्रादिपुस्तकादिनिदर्शनात्।
लक्ष्मीनारायणो मान्यो निबन्धोत्कर्षदर्शकः॥

यश्च ज्ञानोष्मणा प्रत्यक्षमप्रत्यक्षं प्रभावयन् मम साहचर्यमाचरति, सोऽयं कविवरः पण्डितप्रवरः श्रीशिवजी-उपाध्यायः सुहृद्वरः सस्नेहमनुस्मर्यते—

येन ज्ञानोष्मणा नूनं प्राभावयदहर्निशम्।
मामसौ शिवजीत्याख्यो मित्रमात्मीकृतो मया॥

अस्य शोधप्रबन्धस्य मुद्रणकाले पूर्वरूपसंशोधने नैकसन्दर्भसन्निवेशने च साह्यमनुतिष्ठन् श्रीपरमेश्वरपाण्डेयः परमप्रीतेन मनसा मयाऽनुध्यायते—

पूर्वरूपपरिष्कारे संस्कारे शोधकर्मणः।
परमेश्वरपाण्डेयः चेतसा ध्यायते मया॥

सरस्वतीभवनपुस्तकालयस्य ज्ञातव्यज्ञाननिधेर्लाभान्वयेन भृशमुपकुर्वाणः श्रीमदच्युतनाथझा उपपुस्तकाध्यक्षश्चाध्यक्षमभिलक्षितः सत्क्रियते स्वशोधोपबृंहणाय—

अच्युतनाथझाख्योपपुस्तकाध्यक्ष आदरात्।
मया सत्क्रियते योऽसौ ज्ञातज्ञाननिधिप्रदः॥

शोधकर्मणि सहजमौदार्यसौमनस्यवश्यः पुस्तकालयाद् ग्रन्थोद्धृतिपूर्वकोपलब्धि-धारकः श्रीवैरिस्टरतिवारी नूनमनुपदं कृतोपकृतिरहं तं मनसाऽभिवर्द्धयामि—

पुस्तकालयतो ग्रन्थोद्धृतिपूर्वोपलब्धये।
वैरिस्टरतिवारीति शस्यते साह्यमाचरन्॥

शोधकार्येऽवधार्यधियं व्यवहार्यस्याङ्ग्लग्रन्थस्य कतिपयनिपातार्थविनिश्चये कृतोद्योगसहयोगः श्रीनन्दलालदूबेमहोदयो न कदापि विस्मर्तुं शक्यते—

निपातार्थविनिश्चित्यै नन्दलालद्विवेदिना।
यत्साहाय्यं मया लब्धं न तद् विस्मर्तुमिष्यते॥

ग्रन्थटङ्कणादारभ्य मुद्रणावधि नैकविधसूचीनाम् अकारादिक्रमेण सन्निवेशने साहाय्यमाचरन् **श्रीसुरेन्द्रमिश्रो** मयाऽभिश्लाघ्यते—

**ग्रन्थटङ्कणसूच्यादिसन्निवेशे विशेषतः ।**
**सुरेन्द्रमिश्रः संलग्नः शोधेऽस्मिन् मन्मनो मुदे ॥**

ग्रन्थमुद्रकस्तारामुद्रणालयस्याधिष्ठातृ**श्रीरमाशङ्करपण्डचामहोदयाः** प्रणयेन पुरस्क्रियन्ते, यैः यथाकालं मुद्रणविधिरनुष्ठितः—

**रमाशङ्करपण्डचाख्यो ग्रन्थमुद्रणतत्परः ।**
**यथाकालं कृतं तस्य श्लाघ्यं कार्यं प्रशस्यते ॥**

**—इति प्रबन्धलेखकस्य**

# संकेतविवरणम्

( Abbreviation )

अग्निपु० = अग्निपुराणम्
अथर्वप० = अथर्वपरिशिष्टम्
अथर्ववे० = अथर्ववेदः
अ० ना० = अनेकार्थनाममाला
अप० का० = अपभ्रंशकाव्यत्रयी
अभि० शा० = अभिज्ञानशाकुन्तलम्
अनर्घरा० = अनर्घराघवम्
अवे० = अवेस्ता
अर्थशा० = अर्थशास्त्रम्
अष्टा० = अष्टाध्यायी
आ० व्या० = आशुबोधव्याकरणम्
ईशा० उ० = ईशावास्योपनिषद्
उप० व० = उपसर्गवर्गः
उप० वृ० = उपसर्गवृत्तिः
ऋ० प्रा० = ऋग्वेदप्रातिशाख्यम्
ऋ० सं० = ऋग्वेदसंहिता
ऐ० ब्रा० = ऐतरेयब्राह्मणम्
क० सं० = कपिष्ठलसंहिता
क० मं० = कर्पूरमञ्जरी
कविक० = कविकल्पद्रुमः
का० सं० = काठकसंहिता
किरा० = किरातार्जुनीयम्
कु० मा० = कुन्दमाला
कु० पा० च० = कुमारपालचरितम्
कु० सं० = कुमारसम्भवम्
क्षीरत० = क्षीरतरङ्गिणी
ग० व० = गउडवहो
ग० म० = गणरत्नमहोदधिः
गी० गो० = गीतगोविन्दम्
गो० ब्रा० = गोपथब्राह्मणम्
गो० गृ० सू० = गोभिलीयगृह्यसूत्रम्
ग्री० पा० = ग्रीक पार्टिकल्स
छा० उ० = छान्दोग्योपनिषद्
छा० ब्रा० = छन्दोग्यब्राह्मणम्
तै० आ० = तैत्तिरीयारण्यकम्
तै० प्रा० = तैत्तिरीयप्रातिशाख्यम्
तै० ब्रा० = तैत्तिरीयब्राह्मणम्
तै० सं० = तैत्तिरीयसंहिता
दे० ना० = देशीनाममाला
द्रा० गृ० सू० = द्राह्यायणगृह्यसूत्रम्
ध० नाम० = धनञ्जयनाममाला
ना० शा० = नाट्यशास्त्रम्
नि० सू० = निदानसूत्रम्
निरु० = निरुक्तम्
पा० = पाणिनिः
पै० सं० = पैप्पलादसंहिता
प्र० स० = प्रक्रियासर्वस्वम्
प्र० यौ० = प्रतिज्ञायौगन्धरायणम्
प्र० ना० = प्रतिमानाटकम्
प्र० च० = प्रबोधचन्द्रोदयः
प्र० उ० = प्रश्नोपनिषद्
प्रा० प्र० = प्राकृतप्रकाशः
प्रा० म० दी० = प्राकृतमणिदीपः
प्रा० श० = प्राकृतशब्दानुशासनम्
बा० भा० = बालभारतम्
भवि० क० = भविस्सयत्तकहा
मनु० = मनुस्मृतिः
म० व्यु० को० = मराठीव्युत्पत्तिकोशः
म० भा० = महाभारतम्
महा० भा० = महाभाष्यम्
मा० सं० = माध्यन्दिनीयसंहिता
माल० मा० = मालतीमाधवम्

मु० व्या० = मुग्धबोधव्याकरणम्
मे० सं० = मेघसंदेशः
मै० सं० = मैत्रायणीसंहिता
व० रत्ना० = वर्णरत्नाकरः
वा० प० = वाक्यपदीयम्
वाच० = वाचस्पत्यम्
वाज० प्रा० = वाजसनेयिप्रातिशाख्यम्
वा० पु० = वायुपुराणम्
वा० नि० स० = वाररुचनिरुक्तसमुच्चयः
वा० रा० = वाल्मीकिरामायणम्
वि० ध० सू० = विष्णुधर्मसूत्रम्
वै० ग्रा० = वैदिक ग्रामर
व्य० वि० = व्यक्तिविवेकः
श० ब्रा० = शतपथब्राह्मणम्
शब्दा० चि० = शब्दार्थचिन्तामणिः
शां० श्रौ० सू० = शाङ्खायनश्रौतसूत्रम्
शु० य० प्रा० = शुक्लयजुःप्रातिशाख्यम्
शृ० प्र० = शृङ्गारप्रकाशः
षड्भा० च० = षड्भाषाचन्द्रिका
स० सं० = सर्वदर्शनसंग्रहः
सा० वि० ब्रा० = सामविधानब्राह्मणम्
सि० हे० श० = सिद्धहेमशब्दानुशासनम्
सि० कौ० = सिद्धान्तकौमुदी
से० का० = सेतुबन्धकाव्यम्
स्क० भा० = स्कन्दभाष्यम्
हि०के०गृ०सू० = हिरण्यकेशीयगृह्यसूत्रम्
है० प्रा० व्या० = हैमप्राकृतव्याकरणम्
हैमव० = हैमवती

●

# विषयानुक्रमणिका


| | |
|---|---|
| **संस्तवः—** | क–च |
| **मङ्गलाभिशंसनम्—** | i–v |
| **उपोद्घातः—** | १–२० |
| **किमप्यस्मदीयम्—** | २१–२६ |
| **प्रथमोऽध्यायः—** | १–४६ |

निपातानामैतिहासिको भाषाशास्त्रीयश्चार्थविकासः, पदचातुर्विध्यविकासः, पदशब्दनिर्वचनम्, निपातानामर्थनिर्णये विसंवादः, निपातानां संख्या, उपसर्गप्रतिरूपका निपाताः, विभक्तिप्रतिरूपका निपाताः, तिङ्प्रतिरूपका निपाताः, स्वरप्रतिरूपका निपाताः, स्खलितार्था निपाताः, संयुक्ता निपाताः, धातु-निपातोद्भवा निपाताः, काश्यपगोत्रीया निपाताः, गणपाठातिरिक्ता निपाताः, मनोभावमूलका निपाताः, वीप्सामूलका निपाताः, हर्षातिरेकीया निपाताः, वितर्कातिरेकीया निपाताः, आदरातिरेकीया निपाताः, सम्भ्रमातिरेकीया निपाताः, विषादातिरेकीया निपाताः, क्रोधातिरेकीया निपाताः, विस्मयातिरेकीया निपाताः, दैन्यातिरेकव्यञ्जका निपाताः, जिज्ञासातिरेकव्यञ्जका निपाताः, स्तुत्यतिरेकव्यञ्जका निपाताः, प्रलापातिरेकव्यञ्जका निपाताः, वैदिक-शास्त्रीयभाषयोर्निपातकृतभेदनिरूपणम्, वैदिक-शास्त्रीयभाषयोः सन्धिकालः, प्रत्ययभाजो निपाताः ।

| | |
|---|---|
| **द्वितीयोऽध्यायः—** | ४७–७३ |

निपाताव्ययोपसर्गेषु को वात्मविसंवादः, उदात्तानुदात्तस्वरितसंस्कारवन्तो निपाताः, वैदिकवाङ्मयस्य व्याख्यानभूते द्वे परम्परे, पददेवताः, पदगोत्राणि, अव्ययपदस्यार्वाक्कालिको विकासः, चादिलक्षणम्, सत्त्वगन्धिनो निपाताः, असत्त्वगन्धिनो निपाताः, पाणिनि-भोजराज-हेमचन्द्र-माधवभट्ट-सम्मतो निपातक्रमपाठः, निपाताव्ययोपसर्गाणामन्योन्यसंसक्तवृत्तिमत्त्वम्, निपाताव्ययोपसर्गा अपि सत्त्वगन्धिनो भवन्ति, निपाताव्ययोपसर्गाणामैतिहासिकस्वरूपोपचयापचयः ।

| | |
|---|---|
| **तृतीयोऽध्यायः—** | ७४–१०६ |

निपाता द्योतका वाचका वा, निपातानां प्रकृतित्वविचारः, द्विधा-चतुर्धा-पञ्चधापदविकासपरामर्शः, निपातानामर्थवाचकताविमर्शः, 'सदृशं त्रिषु

लिङ्गेषु' इति सिद्धान्तपर्यवेक्षणम्, द्योतकत्ववाचकत्वविचारः, शाकटायन-सम्मतद्योतकत्वविमर्शः, वाचकत्वविषये यास्कमतम्, वाचकतापक्षपाती भगवान् पाणिनिः, माधवभट्टपुरस्कृतं वाचकत्वम्, प्रातिशाख्येषु वाचकत्व-परामर्शः, पाणिनिपश्चाद्भाविनां शाब्दिकानां वाचकत्वनिर्णयः, पालि-प्राकृत-अपभ्रंशभाषासु निपातार्थविचारः, निपातेषु वर्णागम-वर्णविपर्यय-वर्णविकार-वर्णनाश-अर्थातिशययोगरूपा विकृतयः, द्योतकत्व-वाचकत्ववादस्य तोलनात्मकं परीक्षणम् ।

**चतुर्थोऽध्यायः—** १०७–१८६

उपसर्गाः पदविज्ञानञ्च, ऐतिहासिकः पदविभागः, पदचातुर्विध्यविकासः, उपसर्गशब्दस्याभिधानिकानि वैचित्र्याणि, उपसर्गपदस्य वैयुत्पत्तिकोऽर्थः, उपसर्गाणामर्थबिम्बोपसर्जनम्, भावावबोधका वस्तुवाचकाश्च शब्दाः, ऐतिहासिकसंस्रव उपसर्गसंख्यायामुपचयापचयश्च, केचन प्राचीनभारोपीय-भाषोपसर्गाः, वैदिकभाषायां वीप्सामूलका उपसर्गाः, उपसर्गाणां प्रयोग-विज्ञानम्, उपसर्गानुक्रमे यास्क-पाणिन्योर्विसंवादः, आचार्ययास्कसम्मत उपसर्गक्रमः, पाणिनिगणपाठ उपसर्गक्रमः, आचार्यशौनकसम्मत उपसर्गक्रमः, यास्क-पाणिनि-शौनक-भोजराजपुरस्कृत उपसर्गक्रमः, उपसर्गेषु वर्णागमः, उपसर्गेषु वर्णविकारः, उपसर्गेषु अर्थातिशययोगः, उपसर्गक्रोडीकृता धातवः, धातूपसर्गास्कन्दनेनातिरिक्तधातूनां प्रसवः, अडादीनामासञ्जनम्, धातुसाधन-योर्धातूपसर्गयोर्वा सम्बन्धः, उपसर्गोपरागेण धातूनां सकर्मकत्वाकर्मकत्व-निरूपणम्, उपसर्गाणामर्थविकासः, 'प्र'-उपसर्गस्यार्थविकासः, 'परा'-उपसर्ग-स्यार्थविकासः, 'अप'-उपसर्गस्यार्थविकासः, 'सम्'-उपसर्गस्यार्थविकासः, 'अनु'-उपसर्गस्यार्थविकासः, 'अव'-उपसर्गस्यार्थविकासः, 'निस्'-उपसर्गस्यार्थ-विकासः, 'दुस्'-उपसर्गस्यार्थविकासः, 'वि'-उपसर्गस्यार्थविकासः, 'आ < आङ्-उपसर्गस्यार्थविकासः, 'नि'-उपसर्गस्यार्थविकासः, 'अधि'-उपसर्गस्यार्थ-विकासः, 'प्रति'-उपसर्गस्यार्थविकासः, 'परि'-उपसर्गस्यार्थविकासः, 'उप'-उपसर्गस्यार्थविकासः, 'अति'-उपसर्गस्यार्थविकासः, 'अपि'-उपसर्गस्यार्थ-विकासः, 'सु'-उपसर्गस्यार्थविकासः, 'उत्'-उपसर्गस्यार्थविकासः, 'अभि'-उपसर्गस्यार्थविकासः ।

**पञ्चमोऽध्यायः—** १८७–२६६

**(क) निपातानामर्थविकासः—** १८७–२४१

उपसर्गप्रतिरूपका निपाताः, विभक्तिप्रतिरूपका निपाताः, स्वर-प्रतिरूपका निपाताः, प्रत्ययप्रतिरूपका निपाताः, 'अच्छ'-निपातार्थविमर्शः,

'अथ'-निपातार्थविमर्शः, 'अध'-निपातार्थविमर्शः, 'अन्तर्'-निपातार्थविमर्शः, 'अपि'-निपातार्थविमर्शः, 'अवाक्'-निपातार्थविमर्शः, 'अलम्'-निपातार्थविमर्शः, 'अह'-निपातार्थविमर्शः, 'आनुषक्'-निपातार्थविमर्शः, 'आशु'-निपातार्थविमर्शः, 'आहो'-निपातार्थविमर्शः, 'इत्'-निपातार्थविमर्शः, 'इति'-निपातार्थविमर्शः, 'इव'-निपातार्थविमर्शः, 'उ'-निपातार्थविमर्शः, 'उत'-निपातार्थविमर्शः, 'उपरि'-निपातार्थविमर्शः, 'एव'-निपातार्थविमर्शः, 'कथम्'-निपातार्थविमर्शः, 'किल'-निपातार्थविमर्शः, 'कु'-निपातार्थविमर्शः, 'खलु'-निपातार्थविमर्शः, 'च'-निपातार्थविमर्शः, 'ज्योक्'-निपातार्थविमर्शः, 'तिरस्'-निपातार्थविमर्शः, 'तु'-निपातार्थविमर्शः, 'न>नञ्'-निपातार्थविमर्शः, 'नाम'-निपातार्थविमर्शः, 'नु'-निपातार्थविमर्शः, 'पुरा'-निपातार्थविमर्शः, 'मा>माङ्'-निपातार्थविमर्शः, 'यथा'-निपातार्थविमर्शः, 'यदि'-निपातार्थविमर्शः, 'यावत्'-निपातार्थविमर्शः, 'वषट्'-निपातार्थविमर्शः, 'वा'-निपातार्थविमर्शः, 'वि'-निपातार्थविमर्शः, 'विषु'-निपातार्थविमर्शः, 'श्रत्'-निपातार्थविमर्शः, 'सकृत्'-निपातार्थविमर्शः, 'सना'-निपातार्थविमर्शः, 'सु'-निपातार्थविमर्शः, 'स्म'-निपातार्थविमर्शः, 'स्वगा'-निपातार्थविमर्शः, 'स्वधा'-निपातार्थविमर्शः, 'स्वस्ति'-निपातार्थविमर्शः 'स्वाहा'-निपातार्थविमर्शः, 'स्वित्'-निपातार्थविमर्शः, 'ह'-निपातार्थविमर्शः, 'हा'-निपातार्थविमर्शः, 'हि'-निपातार्थविमर्शः ।

**( ख ) गणपाठेष्वनुपलब्धा निपाताः—** **२४२-२६१**

'अथ'-निपातार्थविमर्शः, 'अन'-निपातार्थविमर्शः, 'अन्तिके'-निपातार्थविमर्शः, 'अन्यतरस्याम्'-निपातार्थविमर्शः, 'अन्येद्युः'-निपातार्थविमर्शः, 'अपु'-निपातार्थविमर्शः, 'अभितः'-निपातार्थविमर्शः, 'अमा'-निपातार्थविमर्शः, 'अहम्'-निपातार्थविमर्शः, 'आके'-निपातार्थविमर्शः, 'आत्'-निपातार्थविमर्शः, 'आरात्'-निपातार्थविमर्शः, 'आवह'-निपातार्थविमर्शः, 'उवे'-निपातार्थविमर्शः, 'उच्चा'-निपातार्थविमर्शः, 'ऋधक्-निपातार्थविमर्शः, 'कर्हि'-निपातार्थविमर्शः, 'कोज'-निपातार्थविमर्शः, 'कुह'-निपातार्थविमर्शः, 'घ'-निपातार्थविमर्शः, 'चिश्चा'-निपातार्थविमर्शः, 'छम्बट्'-निपातार्थविमर्शः, 'ताजक्'-निपातार्थविमर्शः, 'दोषा'-निपातार्थविमर्शः, 'द्वन्द्वम्'-निपातार्थविमर्शः, 'पराचैः'-निपातार्थविमर्शः, 'पुनः'-निपातार्थविमर्शः, 'प्रायः'-निपातार्थविमर्शः, 'फट्'-निपातार्थविमर्शः, 'बट्'-निपातार्थविमर्शः, 'बलात्'-निपातार्थविमर्शः, 'बस्रि'-निपातार्थविमर्शः, 'भोस'-निपातार्थविमर्शः, 'मनाक्'-निपातार्थविमर्शः, 'ममत्'-निपातार्थविमर्शः, 'रात्रिदिवम्'-निपातार्थविमर्शः, 'वाव'-निपातार्थविमर्शः, 'विभाषा'-निपातार्थविमर्शः, 'विश्वाहा'-निपातार्थविमर्शः, 'सचा'-निपातार्थविमर्शः,

'सदम्'-निपातार्थविमर्शः, 'सा'-निपातार्थविमर्शः, 'साम्'-निपातार्थविमर्शः, 'सामि'-निपातार्थविमर्शः, 'सुमत्'-निपातार्थविमर्शः, 'स्यात्'-निपातार्थविमर्शः, 'स्वाम्'-निपातार्थविमर्शः, 'हये'-निपातार्थविमर्शः, 'हिरुक्'-निपातार्थविमर्शः, 'हुरुक्'-निपातार्थविमर्शः, 'हंहो'-निपातार्थविमर्शः।

**(ग) अनुकरणप्रतिरूपका निपाताः—** २६१–२६६

'अक्खली'-निपातार्थविमर्शः, 'अलला'-निपातार्थविमर्शः, 'आष्'-निपातार्थविमर्शः, 'कट्'-निपातार्थविमर्शः, 'क्रिकिरा'-निपातार्थविमर्शः, 'चिश्चा'-निपातार्थविमर्शः, 'जञ्जना'-निपातार्थविमर्शः, 'फूत्'-निपातार्थविमर्शः, 'मस्मसा'-निपातार्थविमर्शः,'मुट्मुट्'-निपातार्थविमर्शः, 'वव'-निपातार्थविमर्शः, 'शू'-निपातार्थविमर्शः, 'सीत्'-निपातार्थविमर्शः, 'हिङ्'-निपातार्थविमर्शः, 'हूम्'-निपातार्थविमर्शः।

**प्रथमं परिशिष्टम्—** २६७–२८४

**द्वितीयं परिशिष्टम्—** २८५–२९३

**तृतीयं परिशिष्टम्—** २९४–३००

**आदर्शग्रन्थनामावलिः—** ३०१–३१०

**शुद्धिपत्रम्—** ३११–३१६

# निपातार्थनिर्णयः

## प्रथमोऽध्यायः

### निपातानामैतिहासिको भाषाशास्त्रीयश्चार्थविकासः

अविच्छिन्नप्रवाहमादधानायाः संस्कृतभाषासरितो मौलिकमुद्गमस्थानम् ऋग्वेद एव । तत एवास्या वर्णाक्षर-पद-नामाख्यातोपसर्ग-निपात-प्रत्ययाभिज्ञानं क्रियते । अत एव गोपथब्राह्मणे[1] समुद्भाविता अनेके प्रश्नाः—'ओङ्कारं पृच्छामः—को धातुः, किं प्रातिपदिकम्, किं नामाख्यातम्, किं लिङ्गम्, किं वचनम्, का विभक्तिः, कः प्रत्ययः, कः स्वरः, क उपसर्गः, को निपातः, किं वै व्याकरणम्, को विकारः, को विकारी, कति मात्रः, कति वर्णः, कत्यक्षरः, कति पदः, कः संयोगः, किं स्थानानुप्रदान-करणम्, शिक्षकाः किमुच्चारयन्ति, किं छन्दः, को वर्णः इति पूर्वे प्रश्नाः' भाषा-कलेवरस्य परिधिं सङ्केतयन्ति ।

आधुनिकैर्भाषाशास्त्रगवेषकैर्भाषासीमाघटकतत्त्वानां प्रोद्भावने यावन्तः प्रश्नाः प्रोद्भावितास्ततोऽप्यधिकगाढतराणां प्रश्नानामाकुलताऽखिलक्षीक्रियते गोपथब्राह्मणे । मन्ये यदिमा जिज्ञासा ऋग्वेदस्य भाषास्वरूपं स्मारं स्मारं प्रोद्भाविता भवेयुः । वस्तुतो भाषासङ्घटकतत्त्वानां सङ्कलने, उच्चारणे, निर्धारणे, सङ्ख्याने च यादृशी तत्त्व-बुभुत्सैकतानता दृश्यते वैदिकवाङ्मयार्णवे, न तादृश्यभिनिवेशिनी तत्त्वदृष्टिरवलोक्यतेऽन्यासु भारोपीयासु भाषासु । महाकविकालिदासेनोक्तं[2] यत्—'**लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत्**' इति पद्धतिमधिकृत्याधुनिकभारोपीयभाषासरिन्मुखेन वैदिकवाङ्मयार्णवं प्रवेष्टुमवगाहितुं वा पार्यते । प्रमाणयन्ति च तथ्यमिदं मैक-डानल[3]-मैक्समूलर[4]-बरो[5]-फेरर[6]-गोल्डस्टूकर[7]-गुर्णे[8]-प्रभृतय आधुनिकभाषाशास्त्रविदः ।

एवं खीष्टशताब्दीतोऽष्टसहस्राब्दीतः प्राक् प्रवाहितो वैदिकवाङ्मयार्णवः प्राच्याधुनिकभारोपीयभाषामयीषु धारासु शतधा विभज्यमानोऽप्यजस्ररूपेण स्वकीयां मौलिकीं स्रोतोवहतां प्रख्यापयति संस्कृतभाषामुखेन । एवंविधायां संस्कृतभाषायामाविष्कृताः सर्वा ज्ञानशाखाः स्वीयामात्मोपलब्धिं प्रथयन्ति वैदिकसाहित्ये । पारिषत्कृतेरपि शब्द-साध्वसाधुविज्ञानस्य, अर्थराशेः सङ्कोचविस्तरस्य, वर्णागमस्य, वर्णविकारस्य, वर्ण-नाशस्य, वर्णविपर्ययस्य, धात्वर्थस्य, धात्वर्थातिशयस्य च तत्त्वपार्यवसानिको निर्णयस्तत एवोररीक्रियते । वस्तुतः सर्वविधानां निर्णयानां कृते श्रुतिस्तु स्वतः प्रमाणभूतैव ।

---

१. गोपथब्राह्मणम्–१।२४ । २. रघुवंशमहाकाव्यम्–३।२८ । ३. वैदिक-ग्रामर–पृ० ३७ ।
४. लेक्चर्स आन दी साइंस आफ लैंग्वेज–पृ० २१४ । ५. दी संस्कृत-लैंग्वेज—पृ० १०९ ।
६. ए कम्पैरेटिव ग्रामर आफ़ दी संस्कृत-ग्रीक-लैटिन–पृ० २३ ।
७. पाणिनि—पृ० ७६ । ८. तुलनात्मक-भाषा-विज्ञान—पृ० ७७ ।

अत्र तावत् सन्दर्भेऽस्मिन् पदचातुर्विध्यस्य नामाख्यातोपसर्गनिपातरूपस्य गवेषणे कश्चिदैतिहासिकः प्रयत्नोऽनुविधास्यते। सम्पूर्णशब्दराशिः चतुर्धा-(नामाख्यातोपसर्ग-निपातभेदेन) विभक्तो दृश्यते संस्कृतभाषायाम्। विभजनस्यास्य प्ररोहोऽपि ऋग्वेद एव प्रादुरभूत्। ऋग्वेदसंहितायाः प्रमाणेन 'चत्वारि पदजातानि—नामाख्यातोपसर्ग-निपाताः[१]' इत्यसौ शब्दशास्त्रीयपदविभागरूपसिद्धान्तः, तस्य प्राचीनतरमैतिहासिक-स्वरूपमपि प्रमाणितं भवति।

ऋग्वेदसंहितायाः प्रथमे चतुर्थे[२] च मण्डले पदविभागस्यास्य बलवत्तरं प्रमाण-मुपलब्धुं शक्यते। तद्यथा—

**चत्वारि[३] वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥** इति।

अस्योद्धरणस्य विश्लेषणेन यादृशं भाषाशास्त्रीयं पदव्युत्पत्तिमूलकञ्च भाषायाः स्वरूपं स्थिरं भवति, तेनायं दृढतमो विश्वासस्ततोऽपि परां कोटिमाटीकते यन्नामा-ख्यातोपसर्गनिपातरूपस्य पदविभागस्यास्त्यैतिहासिकं महत्त्वम्। सर्वाणीमानि प्रमाणानि व्याकरणशास्त्रोपयोगात्मिकाया व्युत्पत्तेरैतिह्यं प्रमाणयन्ति। उपरिष्टान्निर्दिष्टाया ऋग्वेदीयचर्चां भाष्यव्याख्यानकर्तृभिर्यास्क[४]-पतञ्जलि[५]-स्कन्द[६]-सायण[७]-दुर्ग[८]-नागेश[९]-

---

१. निरुक्तम्—१३।९।

२. चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश॥ (ऋ० सं० ४।५८।३)।

३. ऋ० सं० १।१६४।४५।

४. कतमानि तानि चत्वारि पदानि—नामाख्यातोपसर्गनिपाताश्चेति वैयाकरणाः। (निरु० १३।९)।

५. चत्वारि वाक्परिमिता पदानि = चत्वारि पदजातानि = नामाख्यातोपसर्गनिपाताः। (महा-भाष्यम्—पस्पशाह्निकम्—पृ० २३)।

६. तदेतद्भेदेनैव हि चत्वारि वाचः परिमितानि पदानि न पञ्चमम्। गवादीनि नामानि, कुतः? तेषां तत्त्वं सर्वमनुष्यैर्ज्ञायमानत्वात्। आख्यातोपसर्गनिपातास्तु अप्रसिद्धार्थत्वान्नार्थं सर्वे वदन्ति (ऋ० सं० १।१६४।४५) इति।

७. अपरे = व्याकरणमतानुसारिणो नामाख्यातोपसर्गनिपातभेदेन।
एतेष्वेव सर्वा वाक्परिमितेत्यखण्डायाः = कृत्स्नाया वाचश्चतुर्धा व्याकृतत्वात् इति। (ऋ० सं० १।१४६४।४५)।

८. कतमानि तानि चत्वारि पदानि इति विचार्यः प्रश्नः। तत्र तावद् नामाख्याते चोपसर्ग-निपाताश्चेति वैयाकरणा मन्यन्ते (निरु० १३।९)।

९. नामाख्यातेति—नामशब्देन सुबन्तम्, नमत्याख्यातार्थं प्रति = विशेषणीभवतीति व्युत्पत्तेः। आख्यातम् = तिङन्तम्। उपसर्गनिपातयोः पृथगुपादानं गोबलीवर्दन्यायेन (महाभाष्यम्—पस्प०, पृ० २३—उद्द्योतः)।

विल्सन[1]-प्रभृतिभिः शब्दशास्त्रावगाहनक्षमैः—**नाम-आख्यात-उपसर्ग-निपातरूपपद-विभागा** एवाङ्गीक्रियन्ते स्म ।

आश्वलायनश्रौतसूत्रमप्यमुं[2] पदविभागं समर्थयते । ऋग्वेदीयर्चि **'चत्वारि वाक्परिमिता पदानि'** इत्यत्र पदशब्दो बहुवचनान्तः पठितोऽस्ति । तत्र पदानीति विशेष्यं चत्वारीति विशेषणम् । अनयोर्विशेष्यविशेषणयोः संसर्गेण स्वत एव प्रथिततरं भवति यत् पदचातुर्विध्यविभागस्यादिकालो भारतीयवाङ्मयस्यादिग्रन्थत एव निर्धारितो भवति । एवं गवेषणेन विश्लेषणेन च सिद्ध्यति यद् आ-ऋग्वेदसंहितं खीष्टाब्दीय-प्रथमशताब्दीपर्यन्तम् अमरसिंहं यावन्निपातपदस्य स एवार्थः स्वीकृत आसीत्, योऽर्थोऽद्यापि संस्कृतवाङ्मयेऽन्यास्वपि भारतीयार्यभाषासु व्यवहृतो भवति । भवतु नाम तस्य पदस्यात्मप्रकाशने विसंवादः ।

पदशब्दस्य निर्वचनं तु व्याकरणशास्त्रेऽनेकविधमुपलभ्यते । आचार्ययास्क[3]-पाणिनि[4]-शौनक[5]-पतञ्जलि[6]-कौटल्य[7]-अमरसिंहादिभिः[8] शाब्दिकैस्तथा ऋग्[9]-यजुः[10]-तैत्तिरीयप्रातिशाख्यकर्तृभिरपि[11] पदलक्षणनिर्धारणे महान् प्रयत्नः कृत इति । एभि-राचार्यैः प्रतिपादितस्य पदलक्षणस्यानुरोधेनेदमेव निश्चीयते यद् ऋग्वेदर्चि वर्णितस्य 'पदानि' शब्दस्यापि स एवार्थो भवितुमर्हति, योऽर्थ उपरिष्टान्निर्दिष्टैराचार्यैः स्वीक्रियते, अर्थात् **'सुप्तिङन्तं पदम्', 'अर्थः पदम्', 'वर्णसङ्घातः पदम्', 'विभक्त्यन्तं पदम्'** इत्यादिषु लक्षणेषु स्वीकृतेषु विशेष्यभूते पदानिशब्दे विशेषणत्वेन 'चत्वारि' इति पदस्यान्वयात्, कानि तानि चत्वारि पदानीति जिज्ञासायाम्—'नामाख्यातोपसर्ग-निपाताः' इत्युत्तरीतुं शक्यते ।

पाश्चात्यभाषाशास्त्रविदुषा एण्ट्वीस्टलमहोदयेनापि स्वकीयग्रन्थेऽस्य[12] चतुर्विध-पदविभागस्य अरिस्टोटलनामकभाषाशास्त्राचार्यस्य सिद्धान्तं मत्वा तदनुसृतम् । बिगोब्राण्डलसंज्ञकभाषाशास्त्रविचक्षणेनापि सर्वान् पदविभागानपाकृत्य पदचातुर्विध्यं सिद्धान्तितमित्यपि एण्ट्वीस्टलमहोदयेन निर्दिष्टम् ।

---

१. ऋग्वेदः—भागः ११, पृ० २७८ ।
२. चत्वारि वाक्परिमितानि पदानि यज्ञेन वाचः पदवीयमायन् (आ० श्रौ० ३।८) ।
३. अर्थः पदमैन्द्राणाम् (निरु० १।१) । ४. सुप्तिङन्तं पदम् (पाणिनिः १।४।१४) ।
५. अर्थात् पदं स्वाभिधेयम् (बृहद्देवता—२।११७) ।
६. विभक्त्यन्तं पदम् । रूपं चेहाश्रीयते । रूपनिग्रहश्च शब्दस्य नान्तरेण लौकिकप्रयोगात् (महाभाष्यम्—१।२।६४) ।
७. वर्णसङ्घातः पदम् (अर्थशास्त्रम्—२।१०।२८) ।
८. शास्त्रे शब्दस्तु वाचकः (अमरकोषः—१।३।१४) ।
९. वर्णसङ्घातः पदम् (ऋ० प्रा० १।१०१) । १०. अर्थः पदम् (शुक्लय० प्रा० ३।२) ।
११. वर्णपृक्तः शब्दो वाच उत्पत्तिः (तैत्ति० प्रा० २३।३) ।
१२. आस्पेक्ट्स ऑफ लैंग्वेज—पृ० १५७-५८ ।

वस्तुतः सर्वाभिरपि भाषाशास्त्रपरिष्कृताभिर्भाषाभिः सर्वोत्कृष्टरूपेण भाषावैज्ञानिकदृशा च पदचातुर्विध्यविभाग एव स्वीक्रियते। अयं पदविभाग एतादृशो विज्ञानसम्मतः, आचार्यैर्बहुविधैरनेकधा चर्चितः पुरस्कृतश्चासीत्, येनैतस्य पदचतुष्टयस्य सङ्कीर्त्तनं विश्लेषणञ्च शाब्दिकातिरिक्तैरप्याचार्यैः स्वस्वग्रन्थे महता समारम्भेण गौरवेण च कृतमासीत्।

विज्ञानसम्मतस्यास्य पदविभागस्य विमर्शनम्—ऋग्[१]-यजुः[२]-वाजसनेयिप्रातिशाख्येष्वथ[३] च बृहद्देवता[४]-अर्थशास्त्र[५]-मीमांसा[६]-नाट्यशास्त्रादिग्रन्थेष्वप्यासाद्यते[७]। एवं संस्कृतवाङ्मयस्य प्रथिततरासु सर्वास्वपि ज्ञानशाखासु पदचातुर्विध्यस्य सिद्धान्तः सिद्धान्तितो वर्तते।

वस्तुत आसीद् ऋग्वेदसंहितातः प्रथमशताब्दीं यावच्छब्दशास्त्रभाषाशास्त्रमर्मज्ञानाम्, एतादृशो विचारप्रवाहश्चिन्तनप्रवाहश्च यद् भाषायां व्यवह्रियमाणानां पदानां यदि विभागः स्यात्, तर्ह्येतस्मिन् पदचतुष्टय एव। अयमेव विभागो भाषाशास्त्रसम्मतः, इतिहाससम्मतः, लोकसम्मतो भाषाप्रवाहसम्मतश्च भवितुमर्हतीति।

उपरि चर्चिताया ऋग्वेदऋचः **'गुहा त्रीणि निहिता नेङ्गयन्ति'**[८] इत्यस्य **'त्रीणि नेङ्गयन्ति'** इत्यनयोः पदयोर्हार्दमुपश्लोकयद्भिः पदपदार्थरहस्योद्घाटनसङ्कल्पितमानसैः यास्क[९]-पतञ्जलि[१०]-स्कन्द[११]-दुर्ग[१२]-शन्तनु[१३]-मैक्समूलर[१४]-वान्द्रियोज[१५]-प्रभृतिभिः सङ्कल्प्यते यत्—'सारस्वत्यां शब्दस्रोतोवहायामवगाहनाक्षमैर्मनुष्यैः केवलानि नामपदान्येव यथा तथाऽऽमृश्यन्ते, तेषां स्थूलार्थत्वात्। आख्यातोपसर्गनिपातास्तु तैर्नामृष्टाः, स्थूलवस्तुनिरपेक्षभावप्रत्ययसंवाहकत्वादप्रसिद्धार्थत्वाच्च। वस्तुतोऽनन्यसाधारणलभ्य एवैषामर्थावबोधः' इति। अत एवाचार्यदुर्गः संदिहान इव पठति—

**चतुर्विधपदेष्वत्र द्विविधस्यार्थनिर्णयः।**
**क्रियते संशयोत्पत्तौ नोपसर्गनिपातयोः॥** इति।

---

१. नामाख्यातोपसर्गा निपाताश्चत्वार्याहुः पदजातानि शाब्दाः (ऋ० प्रा० १२।१७)।
२. शुक्लयजुःप्रतिशाख्यम्–८।५२। ३. नामाख्यातोपसर्गनिपाताः (वाजस० प्रा० ८।४९)।
४. उपसर्गो निपातश्च नाम चाख्यातमित्यपि (बृहद्देवता–१।३९)।
५. वर्णसङ्घातः पदम्। तच्चतुर्विधम्–नामाख्यातोपसर्गनिपाताश्चेति (अर्थशास्त्रम्–२।१०)।
६. मीमांसासूत्रम्–२।१।
७. व्यञ्जनानि स्वराश्चैव सन्धयोऽथ विभक्तयः।
नामाख्यातोपसर्गश्च निपातास्तद्धितास्तथा॥ (ना० शा० १४।६)।
८. ऋ० सं० १।१६४।४५; ९. निरु० १।१।
१०. को हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुम् (महाभाष्यम्–२।१।१)।
११. आख्यातोपसर्गनिपातास्तु अप्रसिद्धार्थत्वान्नार्थं सर्वे वदन्ति। (ऋ० सं० १।१६४।४५)।
१२. निरु० १।१; १३. दुर्गासप्तशती–८।४५।
१४. दि लेक्चर्स आन् दि साइन्स ऑफ लैंग्वेज–पृ० २७०; १५. भाषा–पृ० २११।

इममेवाशयं व्याकुर्वाणैः वान्द्रियोज[1]-मैक्समूलर[2]-डेनिस्टन[3]-प्रभृत्याधुनिकभाषाशास्त्रचिन्तकैः समुपस्थाप्यत एष सिद्धान्तो यत्—'यदा शब्दतत्त्वार्थबोधे मनुष्यः शैथिल्यमातनोति, तदा शब्दार्था विस्मृता भवन्ति। बहुकालविस्मरणात् तेषामर्थाः सम्मूर्च्छिता इव भान्ति। अत एव सम्मूर्च्छितार्थोज्जीवनेऽशक्नुवानैः प्रयोक्तृभिस्तैर्निपातकक्षावतारिताः' इति। दुर्गासप्तशतीव्याख्याता शन्तनुस्तु निपातानामर्थानवबोधे कारणत्वेन मनुष्यकृतशैथिल्यमनभ्यासञ्चाम्नाति—

**पाठा व्याख्या निपातानां दृश्यन्ते च स्वैरिणः।**
**प्रयोग एव भगवांस्तानवस्थापयत्यपि॥**

आचार्यशन्तनोः सङ्केतस्तु न केवलं निपातार्थानामेवानवबोधे वर्तते, उत निपातसंख्याविषयेऽपि। स पठति—'न केवलं निपातानां व्याख्या = अर्थाः स्वैरिणो दृश्यन्ते, अपि तु पाठा = सङ्ख्या अपि'। **'त्रीणि नेङ्गयन्ति'** इति श्रुतिवाक्यस्यात्रैव स्वारस्यमस्तीति प्रतिजाने। **'तुरीयं वाचो मनुष्या वदन्ति'** इति श्रुतिवाक्यं सङ्केतयति यत्—तुरीयं वाचो = नामपदानि, मनुष्याः=शब्दशास्त्रावगाहनेऽसमर्थाः, वदन्ति = जानन्तीति।

निपातानाम्, उपसर्गाणाम्, धातूनाञ्चानेकार्थख्यापनस्येदमेव कारणं यदेते भावप्रत्ययान् प्रत्याययन्ति, न तु नामपदानामिव वस्तुप्रत्ययान्। अत एव भावराशिसंवाहकानां शब्दानामर्थप्रत्यभिज्ञानं दृढतराभ्यासमपेक्ष्यते।

एवं निपातार्थवैचित्र्यप्रतिपादनप्रस्तावनाप्रसङ्गे निपातानां संख्यावैचित्र्येऽपि सापेक्षतया विमर्शः प्रासङ्गिको भाति। प्रायेण सम्पूर्णे संस्कृतवाङ्मये निपातानां संख्याऽनियतैव विजृम्भते। दीर्घकालिकायामसंवहमाने संस्कृतवाङ्मये नह्येतादृशः कश्चित् तीर्थदर्श्यालोकतां व्रजति येन निपातानां संख्येदमित्थंतया निर्धारिता भवेत्। सर्वे तीर्थदर्शिनो वैयाकरणाः पदनिर्वचनव्यग्रा नैरुक्ताश्च 'नेति नेति' वदन्तो मौनीभूताः। गुरुणा तीर्थदर्शिना [4]महाभाष्यकारेणाप्युद्घोषितं यत्—'को हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपातानां संख्यामादेष्टुम्' इति। तर्हि का कथाऽन्येषाम्?

[5]आचार्यशौनक-क्षीरस्वामि[6]-शाकटायन[7]-हेमचन्द्रसूरि[8]-तिलक[9]-वर्धमान[10]-नारायणभट्ट[11]-अनुभूतिस्वरूप[12]-वररुचि[13]-लक्ष्मीधर[14]-प्रभृतयो वैय्याकरणा उद्घोषयन्ति

---

१. भाषा पृ० १५; २. दि लेक्चर्स आन् दि साइन्स आफ लैंग्वेज—पृ० ३८१।
३. दि ग्रीक पार्टिकल्स—पृ० १३९; ४. महाभाष्यम्—२।१।१।
५. बृहद्देवता—२।९५; ६. निपाताव्योपसर्गवृत्तिः—१।५।
७. ए डिस्क्रिप्टिव कैटेलाग आफ दि संस्कृत मैन्यूस्क्रिप्ट इन दि ओरियन्टल लाइब्रेरी मद्रास—सं० १२७४;
८. अनेकार्थसङ्ग्रहः—निपातकाण्डम्; ९. निपाताव्ययोपसर्गवृत्तिः—१।५।
१०. गणरत्नमहोदधिः-चादिस्वरादी—१७; ११. प्रक्रियासर्वस्वम्—चादिगणः।
१२. सारस्वतव्याकरणम्—स्त्रीप्रत्ययप्रक्रिया—१४।
१३. प्राकृतप्रकाशः—निपातप्रकरणे—सू० १६, भामहकृतमनोरमाटीका।
१४. षड्भाषाचन्द्रिका—१।२।५।

यत्—'निपातानां सङ्ख्येयत्ता, अर्थेयत्ता च नास्ति। इमेऽनन्ता अनन्तार्थाश्च। प्रयोजनैकगम्याः प्रयोगैकगम्या इमे भवन्ति। प्रयोजनाधीन एतेषां संख्यासङ्कोचो विकासश्चेति'। प्रयोजनं त्वेतेषां कुत्रचिदर्थप्रवाहस्य सङ्कोचाय, कुत्रचिद् विस्तराय, कुत्रचित् तैग्म्याय, कुत्रचिदर्थभूयस्त्वाय, कुत्रच्छिब्दप्रतिमाकल्पनाय, कुत्रचिद् वाक्यसंसर्ग-सङ्घटनाय, कुत्रचिद् मनोभावसङ्केताय, कुत्रचिदैतिह्यार्थबोधनाय, कुत्रचिद् दिक्सङ्केताय, कुत्रचिच्च कालनियन्त्रणाय भवति। अत एव बृहद्देवताकृतशौनकः[1] समादधाति यत्—

इयन्त इति संख्थानं निपातानां न विद्यते।
प्रयोजनवशा ह्येते निपात्यन्ते पदे पदे॥

आचार्यक्षीरस्वामिनः[2] पाठस्तु आनुषङ्[3] न तथा दृश्यते। तस्य पाठस्त्वन्यथा निभाल्यते—

इयन्त इति संख्यैषामर्थेयत्ता च नास्ति वै।
प्रयोजनवशादेत्य निपतन्ति पदे पदे॥

उभयोः श्लोकयोस्तोलनात्मकेन निष्कर्षेणेदमेव प्रस्फुटति यच्छौनको मनुते 'निपातानां संख्याविषये काचित् सीमा नास्ति, यतो हि ते प्रयोजनवशा उच्चावचार्था-धीना भवन्तीति'। स्वामिन आशयस्त्वयमेव यत्—'निपातानां संख्येयत्ताऽर्थेयत्ता च नास्ति, यतो हि ते स्वीयवैचित्र्यार्थवशात् स्वीयं स्थानंममल्लभन्ते[4]'। प्रक्रियासर्वस्व-प्रणेतुर्नारायणभट्टस्य[5] श्लोकस्तूभावपि न संवदते। स प्रस्तौति यत्—

अनन्ताः खल्वनन्तार्थाः स्वराद्याश्चादयोऽपि च।
असत्त्वपरतैवात्र चादीनां नियता मता॥

अर्थात्—'स्वराद्या निपाताश्च अनन्ताः, अनन्तार्थाश्च भवन्तीति' इति।

एवं हि दृश्यते यन्निपातानां संख्याविषयेऽर्थविषये च नास्ति कश्चित् तत्त्वनिर्णायकः पन्थाः। संस्कृतवाङ्मयस्य दशसहस्राब्दीव्यापिपरिधावितस्ततो विकीर्णा निपात-सिद्धान्ताः समस्यासमाधानेऽङ्गुलिनिर्देशं कुर्वन्ति। सन्दर्भेऽस्मिन् नानाविधाः समस्याः समुद्भवन्ति। कानि कानि कारणानि सन्ति निपातानां तेषामर्थानाञ्चानैयत्ये? कथं न तेषां रूपप्रतिमाऽर्थप्रतिमा च ऋजुतामादधाति? कथं न तेऽपीतरेषां पदानामिव रूपव्ययवन्तो भवन्ति? किं विभक्तिप्रत्ययान्विताः केचन निपाता निपातानां पद-स्वातन्त्र्यं नोद्घोषयन्ति? कथं वा द्वौ त्रयो निपाताः सम्भूयैकनिपातस्य रूपमाप्नुवन्ति? इत्येताः समस्याः स्यान्नामोद्घाटिता भवेयुरिति मन्ये।

---

१. बृहद्देवता—२।९५;   २. निपाताव्ययोपसर्गवृत्तिः—१।५।
३. 'आनुषक्' इति वैदिकभाषानिपात आनुपूर्व्यर्थे प्रयुक्तस्तत्र।
४. 'ममत्' इति बलवदर्थको निपातो रामायणमहाभारतयोर्द्रष्टुं शक्यते।
५. प्रक्रियासर्वस्वम्—निपातप्रकरणम्—५।

संस्कृतभाषार्णवस्य मन्थनाद् विविधानि सिद्धान्तरत्नानि निःसरन्ति निपातानां विषये। पुरस्तात्तावत् समस्येयं विचारणीया प्रतिभाति यत् कथं निपातानां संख्यार्थ-विषये दृश्यते बहुविधो विसंवादः ? बहुत्र संस्कृतवाङ्मये सिद्धान्तोऽयं सिद्धान्तितो वर्तते यत्—'उपसर्गविभक्तिप्रत्ययस्वरप्रतिरूपकाश्च[1] निपाता भवन्तीति'। अर्थाद् उपसर्ग-प्रतिरूपकाः, विभक्तिप्रतिरूपकाः, प्रत्ययप्रतिरूपकाः, स्वरप्रतिरूपकाश्च निपाता भवन्ति। उपलक्षणतयैकैकेषामुदाहरणान्यवस्तात् प्रस्तूयन्ते।

**(क) उपसर्गप्रतिरूपकाः**—अवस्तात्[2], परस्तात्[3], अधरात्[4], उद्क्तात्[5], पश्चात्[6], पश्चात्तात्[7], प्राकात्[8], अप्राकात्[9], पुरस्तात्[10], अर्वाक्[11], उत्तरात्[12], प्रवतः[13], उद्वतः[14], निवतः[15], परावतः[16], प्रतराम्[17], सम्प्रति[18], अनुकः[19], अतितराम्,[20] उत्तमः[21], परितः[22], अभितः[23], अभिकः[24]—इत्यादिः। उपरिष्टात् संख्याता निपाता औपसर्गिकाः। एतेषां प्रकृतिरुपसर्गा एव। प्रकृतिभूता उपसर्गाः प्रत्ययवन्तः सञ्जाताः। अत एवाशुबोधव्याकरणकृता[25] प्रत्यपादि यत्—'नामधातूपसर्गनिपाताः प्रकृतिः। तत्र नामप्रकृतिकाः सुप्तद्धितादयः, धातुप्रकृतिकाः तिङ्कृदादयः, तद्धिताः पुनर्निपातोपसर्ग-प्रकृतिकाः। तेन नतराम्, सुतराम् इत्यादिसिद्धिः' इति।

---

१. महाभाष्यम्—३।२।४२। २. ऋ० सं० ३।२२।३, अथर्ववेदः—११।२।४।
३. ऋ० सं० ३।२२।३।
४. ऋ० सं० ७।१०४।१९, १०।८७।२०, अथर्ववेदः—११।२।४।
५. ऋ० सं० ७।१०४।१९, १०।८७-२०।
६. ऋ० सं० १०।८७।२०, २।२७।११, अथर्ववेदः—७।८०।१, मेघदूतम्—१।५१।
७. ऋ० सं० ७।७३।५। ८. ऋ० सं० ७।१०४।१९।
९. ऋ० सं० ७।१०४।१९, १०।४५।७।
१०. ऋ० सं० ८।२८।३, १०।८७।२०, १०।१३९।१।
११. ऋ० सं० ११—३।४१।८, ३।४१।१९।
१२. सत्याषाढश्रौतसूत्रम्—४।५।१६, १।१०।११।
१३. ऋ० सं० ३।२।१०, अथर्ववेदः—१३।३।२, तैत्ति०सं० ४।१।१।
१४. तदेव। १५. तदेव। १६. तदेव।
१७. निपाताव्ययोपसर्गवृत्तिः—निपातकाण्डम्। १८. तदेव।
१९. तदेव। २०. तदेव।
२१. तदेव। २२. तदेव। २३. प्रदीपः—२।३।२। २४. तदेव।
२५. आशुबोधव्याकरणम्—संज्ञाप्रकरणम्, सू० ३३।

**(ख) विभक्तिप्रतिरूपका यथा**—अहम्[1], शुभम्[2], कृतम्[3], पर्याप्तम्[4], येन[5], तेन[6], चिरेण[7], चिराय[8], चिरात्[9], चिरस्य[10], अञ्जसा[11], अन्यतरस्याम्[12], विभाषा[13], अह्नाय[14], स्थाने[15], अन्तरा[16], अन्तरेण[17], आरे[18], आरात्[19], दूरे[20], दूरात्[21], सनात्[22], स्वस्तये[23], अहम्पूर्विका[24], प्रायेण[25], ते[26], मे[27], बहिर्धा[28] इत्यादयः । एते खलु विभक्तिप्रतिरूपकाः, अर्थात् सुबन्तप्रतिरूपकाः ।

**(ग) तिङ्प्रतिरूपका यथा**—अस्ति[29], नास्ति[30], विद्यते[31], असि[32], अस्मि[33], एहि[34], अस्तु[35], भवतु[36], मन्ये[37], शङ्के[38], स्यात्[39], आस[40], आह[41], वर्तते, पश्य, आदह इत्यादिः । इमे निपाताः प्रत्ययप्रतिरूपकाः = तिङ्प्रतिरूपका इति ।

---

१. नामलिङ्गानुशासनम्–२।८।१०१, सर्वानन्दव्याख्या ।

२. प्रदीपः–७।३।४६ ।

३. प्रक्रियासर्वस्वम्–सुब्विधिखण्डम्–पृ० १९१ ।

४. प्रक्रियासर्वस्वम्–पृ० १९१ ।

५. गणरत्नमहोदधिः–निपातकाण्डम्–५ ।

६. देशीनाममालापरिशिष्टम्–३ ।

७. गणरत्नमहोदधिः–निपातकाण्डम्–९ ।

८. किरातार्जुनीयम्–१।४४, चित्रभानुव्याख्या ।

९. गणरत्नमहोदधिः–निपातकाण्डम्–६ ।

१०. अभिज्ञानशाकुन्तलम्–५।१५, राघवभट्टव्याख्यानम् ।

११. मनुस्मृतिः–२।१९, हलायुधवृत्तिः–पृ० १११ ।

१२. प्रदीपः–५।२।९७, पदमञ्जरी–५।३।१०९ ।

१३. न्यायः–५।४।५२ ।

१४. महाभारतम्–विराटप० २२।१० ।

१५. कुमारसम्भवम्–६।६७, नारायणव्याख्या ।

१६. महाभाष्यम्–२।३।४, पदमञ्जरी–२।३।४ ।

१७. तदेव ।

१८. ऋ० सं० १।१७२।२, १०।३५।४–स्कन्दभाष्यम् ।

१९. ऋ० सं० ३।५४।९, ६।४७।१३, १०।४२।६ ।

२०. तदेव ।

२१. तदेव ।

२२. ऋ० सं०–१।५१।६, स्कन्दभाष्यम् ।

२३. ऋ० सं० २।२।६, तै० सं०–१।२।३ ।

२४. नामलिङ्गानुशासनम्–२।८।१०१, क्षीरस्वामिव्याख्या ।

२५. पदमञ्जरी–२।३।१८ ।

२६. ते मे शब्दौ निपातेषु द्रष्टव्यौ–त्वया-मया इत्येतस्मिन्नर्थे इति वामनः (रघुवंश०–१४।४०) ।

२७. अभिज्ञानशाकुन्तलम्–३।२, राघवभट्टव्याख्या ।

२८. शतपथब्रा० ८।३।१।११, सायणभाष्यम् ।

२९. काशिका–४।४।६० ।

३०. पदमञ्जरी–४।४।६० ।

३१. प्रक्रियासर्वस्वम्–सुब्विधिखण्डम्–पृ० १९१ ।

३२. तदेव ।

३३. तदेव ।

३४. प्रक्रियासर्वस्वम्–सुब्विधिखण्डम्–पृ० १९१ ।

३५. न्यासः–६।३।७० ।

३६. महाभारतम्–वनपर्वणि–४।८ ।

३७. प्रक्रियासर्वस्वम्–सुब्विधिखण्डम् ।

३८. कुमारसम्भवम्–७।८२, नारायणभट्टीयटीका ।

३९. प्रक्रियासर्वस्वम्–सुब्विधिखण्डम् ।

४०. प्रक्रियासर्वस्वम्–सुब्विधिखण्डम् ।

४१. ऋ० सं०–१।६।४ ।

(घ) **स्वरप्रतिरूपका यथा**—अ[1], आ[2], इ[3], ई[4], उ[5], ऊ[6], ऐ[7], औ[8], ऋ[9], ॠ[10], ऌ[11], ॡ[12], ऐ[13], औ[14] इत्यादिः । इमे स्वरप्रतिरूपका अप्रतिरूपकाश्च निपाता वेदितव्याः । विशेषत एषां प्रयोगो मनोभावार्थमाविष्कर्तुं क्रियते । मनोभावरूपरूषितानां निपातानां चर्चाऽग्रे करिष्यते ।

एवमौपलाक्षणिकाः केचनोपसर्ग-सुप्-तिङ्-स्वरप्रतिरूपका निपाता उपरिष्टाच्चर्चिताः । तेषां प्रयोगसन्दर्भा अपि यथास्थानमुल्लिखिताः । निपातसंख्याया अनैयत्ये निपातार्थनैयत्ये चैवंविधानामुपसर्ग-सुप्-तिङ्-स्वरप्रतिरूपकाणां निपातानां पुरस्तात् स्थानमस्ति । यतो ह्येकैकस्योपसर्गप्रतिरूपकस्य, सुप्प्रतिरूपकस्य, प्रत्ययप्रतिरूपकस्य च निपातस्यानेकानि रूपाण्युपलभ्यन्ते प्रत्ययभेदेन ।

यथोपसर्गप्रतिरूपकस्य—उद्वतः, उद्वत्सु, नि + वत > निवतः > निवत्सु, प्राक्तात्, प्रवतः, प्रतराम् इत्यादयः ।

विभक्तिप्रतिरूपकस्य—चिरम्, चिराय, चिरात्, चिरस्य, अन्तरम्, अन्तरा, अन्तरेणेत्यादिः ।

इत्थमेकस्यैव प्रकृतिभूतस्योपसर्गस्य निपातस्य च प्रत्ययभेदेन निर्मितान्यनेकानि रूपाणि पृथक् पृथङ्निपातसंज्ञाभाञ्जि भवन्ति । इदमेव प्रबलतमकारणमस्ति येन निपाता अनन्ता अनंतार्थाश्च व्यपदिशन्ते स्म । अनुप्राणन्ति च विश्लेषणमिदम्—यास्क[15]-पतञ्जलि[16]-कैयट[17]—स्कन्द[18]—सायण[19]—भट्टभास्कर[20]—माधव[21]—दुर्ग[22]—महेश्वर[23]—क्षीरस्वामि[24]—

---

१. किरातार्जुनीयम्—२।१४, चित्रभानुव्याख्या ।
२. ऋ० सं० १।१६५।१४, १।१६५।९ ।
३. काव्यशिक्षा—श्रीविनयचन्द्रसूरिकृता—पृ० ११९—२२ ।
४. ऋ० सं० १।१४०।२ ।
५. छान्दोग्यब्राह्मणम्—२।६।३ ।
६. ऋ० सं० १।१७९।१ ।
७. भट्टिकाव्यम्—६।१८, जयमङ्गला व्याख्या ।
८. ऋ० सं० १।१६५।१४, स्कन्दभाष्यम् ।
९. अव्ययवृत्तिः—त्रिलोचनकृता ।
१०. तदेव ।
११. तदेव ।
१२. तदेव ।
१३. तदेव ।
१४. तदेव ।
१५. निरुक्तम्—१।१ ।
१६. महाभाष्यम्—२।२।२४, ३।२।८४ ।
१७. प्रदीपः—२।३।२ ।
१८. ऋ० सं०—१।६२।८ ।
१९. ऋ० सं०—१।१९।६, १।६३।१३, २।३८।१, ९।७४।७, अथर्ववेदः—८।६।१५ ।
२०. तै० सं० १।२।३, तै० आ० १।८।२८ ।
२१. ऋ० सं० ६।७५।५ ।
२२. निरु० १।१ ।
२३. तदेव ।
२४. गमलिङ्गानुशासनम्—२।८।१०१ ।

उव्वट[१]-अनन्तभट्ट[२]-हरदत्त[३]-जिनेन्द्रबुद्धि[४]-भोज[५]-श्रीधर[६]-राघवभट्ट[७]-नारायण[८]-चित्रभानु[९]-मल्लिनाथ[१०]-शन्तनु[११]-प्रभृतयः स्वतःप्रमाणभूताः शाब्दिकाः ।

निपातसंख्याया निपातार्थस्य च विसंवादेऽनैयत्ये चापरो हेतुरयमस्ति यद् द्वित्राणां वा निपातानामन्योन्यं सन्धिः । प्रायेण दृश्यते संस्कृतवाङ्मये मिथो निपातयोर्निपातां वा सन्धिः। निपातानां सन्धिस्तु विवर्गीयैः पदैरर्थान्नामपदैराख्यातपदैस्तु भवत्येव, सवर्गीयैरर्थान्निपातैर्निपातानामपि स घटते ।

यदि कश्चिन्निपातो भूयो भूयो भाषायामभ्यस्यते, तदाऽर्थस्यातिप्रसवात् स रिक्तार्थतां व्रजति । रिक्तार्थतां भजमानस्य पदस्यार्थस्तु तिरोहितो भवति । पुनस्तस्य सम्मूर्च्छितस्याहोस्विदन्तर्हितस्यार्थस्योज्जीवनाय कश्चित् सवर्गीयो विवर्गीयो वा शब्दस्तस्मिन्नासज्जते । मिथः सन्धीयमानयोः पदयोः स्वस्वार्थसमर्पणात् कश्चित् तृतीयोऽर्थप्रत्ययः समुदेति । पृथक् पृथङ्नियतार्थातिरिक्तार्थबुभुत्सुभिः प्रयोक्तृभिः शब्देषु सन्धिः क्रियते।

अत एव दृश्यते संस्कृतभाषायामन्यासु च भारोपीयार्यभाषासु निपातानां मिथः सन्धिः । सन्धीयमानयोर्निपातयोर्निपातानां वा या रूपप्रतिमा समुदेति, साऽतिरिक्तनिपातत्वेन गण्यते । समर्थयन्ते च निष्कृष्टार्थोऽयम्–यास्क[१२]-पतञ्जलि[१३]-कैयट[१४]-नागेश[१५]-स्कन्द[१६]–सायण[१७]–उव्वट[१८]–भट्टभास्कर[१९]–हरदत्त[२०]–गोविन्द[२१]राजिय-राघवभट्ट[२२]–

---

१. शुक्लयजुर्वेदप्रस्तावनायाम्, वाजस० प्रा० ८।४८ । २. वाजसनेयिप्रा० ८।५२ ।
३. पदमञ्जरी–२।२।२४, २।३।२, २।३।१८, ३।१।१०१, ३।१।१४०, ४।४।६०, ८।३।१ ।
४. न्यासः–२।२।२४, ४।२।१०१, ४।३।५६, ६।३।७० ।
५. शृङ्गारप्रकाशः–३।१२ । ६. श्रीमद्भागवतम्–३।१७।५ ।
७. अभिज्ञानशाकुन्तलम्–५।१५ । ८. कुमारसम्भवम्–२।५४, ७।८२ ।
९. किरातार्जुनीयम्–१।१७, १।४४ । १०. रघुवंशम्–१४।४० ।
११. दुर्गासप्तशती–४।२८ ।
१२. निरुक्तम्–६।६।१ । १३. महाभाष्यम्–६।१।९४ ।
१४. तदेव–६।१।१३५, ७।३।३१ । १५. तदेव–७।३।३१ ।
१६. ऋ० सं०–१।१४।९, १।३८।६, १।३९।४, ६।४८।२, १०।८३।१ ।
१७. (क) ऋ० सं० १।३९।६, १।१०४।२, १।१५०।२, १।१६५।१४, १।१९१।११, २।२४।१२, ३।११।१, ३।५३।५, ५।३४।७, ८।४६।१०, ८।९१।३, ९।८९।१, १०।५०।५, १०।११९।६ ।
(ख) अथर्ववेदः–३।१३।३, १९।८।३, १९।४७।६ ।
(ग) श० ब्रा०–१०।६।१।३, १०।६।१।४ । १८. शुक्लयजुर्वेदः–५।१८ ।
१९. तै० सं०–१।२।१४ । २०. पदमञ्जरी–३।४।६०,६।१।९४ ।
२१. रामायणम्–६।१।१८, ७।५।३ । २२. अभिज्ञानशा०–१।२५ ।

नारायण[१]-शिवराम[२]-गुणरत्न[३]सूरि-अप्पय्यदीक्षितप्रमुखाः शब्दशास्त्रगवेषणव्रतिनः। इमे शेमुषीधुरीणा ऐकमत्येनोररीकुर्वन्ति यत्—निपातयोर्निपातानां वा यो मिथः संश्लेषो भवति, तेन कस्यचिदपरस्य शब्दस्यार्थस्य च प्रसवो जायते। न हि संश्लिष्टानां पदानां प्राक्कालिकी मूर्तिसत्ताऽर्थसत्ता च तदानीं समवतिष्ठते। वस्तुतस्तत्र जहत्स्वार्थ-वृत्तिभाजो भवन्ति संश्लिष्टाः शब्दा इति।

सन्दर्भेऽस्मिन्नाधुनिकभाषाशास्त्रचिन्तकानाम्—मैकडानल[४]–मैक्समूलर[५]-स्पेजर[६]-बरो[७]-डेनिस्टर्न[८]-विधुशेखरभट्टाचार्यप्रभृतीनामपि[९] सिद्धान्तस्तानेव संवदति।

अत्र मिथुनीभूतानां निपातानां कानिचिदुद्धरणान्यवस्तात् प्रस्तूयन्ते, यैः समस्येयं फलाय कल्पेत—

(क) औ[१०] <आ + उ> औ [ = संस्तुतौ]।

(ख) इहो[११] <इह + उ> इहो [ = इहैव]।

(ग) कच्चन[१२] <कत् + चन> कच्चन [ = केचिदपि]।

(घ) कदाचन[१३] <कदा + चन> कदाचन [ = कस्मिन्नहनि]।

(ङ) किंस्वित्[१४] <किम् + स्वित्> किंस्वित् [ = किन्नु खलु]।

(च) क्वस्वित्[१५] <क्व + स्वित्> क्वस्वित् [ = क्वापि]।

(छ) त्वै[१६] <तु + वै> त्वै [ = निश्चये]।

(ज) न्वै[१७] <नु + वै> न्वै [ = निषधार्थे]।

(झ) नेत्[१८] <न + इत्> नेत् [ = परिभये]।

(ञ) माकीम्[१९] <मा + किम्> माकीम् [ = मैव]।

(ट) रात्रिंदिवम्[२०] <रात्रिम् + दिवम्> रात्रिंदिवम् [ = सततम्]।

(ठ) सो[२१] <सा + उ> सो [ = प्रसिद्ध्यर्थे]।

---

१. सुभद्राधनञ्जयनाटकम्–५, पृ० १९९, शिवरामव्याख्या।

२. क्रियारत्नसमुच्चयः–४।५।४०। ३. दि वैदिक ग्रामर–पृ० ३५१।

४. दि लेक्चर्स आन दि साइंस आफ लैंग्वेज–पृ० २४८। ५. संस्कृत सिनटैक्स–पृ० ९३।

६. संस्कृत लैंग्वेज–पृ० ६६। ७. दि ग्रीक पार्टिकल्स–पृ० ३०७।

८. नागरीप्रचारिणी–पत्रिका–भाग–१९, अङ्क–४, पृ० ३७२।

९. प्राकृतमणिदीपः–१।१।२८। १०. ऋ० सं०–१।१०४।२ स्कन्दभाष्यम्।

११. ऋ० सं०–९।६५।५ सायणभाष्यम्। १२. ऋ० सं०–५।८२।२ मुद्गलीयावृत्तिः।

१३. शु० यजुर्वेदः–८।३–उव्वटभाष्यम्। १४. ऋ० सं० १।१६१।१०–सायणः।

१५. ऋ० सं०–१०।३४।१०–सायणः। १६. तै० सं०–३।३।१०–भट्टभास्करभाष्यम्।

१७. शत० ब्रा०–१०।६।१।३–सायणभाष्यम्। १८. शत० ब्रा० ७।४।२।३६–सायणभाष्यम्।

१९. ऋ० सं० ६।५४।७–माधवः। २०. वा० रामायणम्–६।५।८–तिलकव्याख्यां।

२१. ऋ० सं० १।१९१।११–सायणः।

(ड) आनुषक्[1] <अनु + √षज्ज् + क्विप्> आनुषक् [ = आनुपूर्व्येण] ।

(ढ) चन[2] <च + न> चन [ = यद्येव] ।

(ण) कथं[3] वा <कथम् + वा> कथं वा [ = निषेधे] ।

सन्दर्भैरेभिः सिद्धान्तितुं पार्यते यन्निपातानां निपातार्थानाञ्चानन्त्येऽनैयत्ये च सान्धिकानां निपातानामनन्यतमो योगोऽस्ति । यदि निपातानां सन्धिभिरितरनिपात-प्रसवशक्तिः प्रतिबध्येत, तदा निपाताः संख्यया मातुमर्हा भवेयुरिति मन्ये । किन्तु यथाऽनन्तार्थकल्पनाक्षमो मानवमनोभावो नियन्तुं मातुं वा न शक्यते, तथैवानन्तार्था-नपेक्ष्यमाणायां भाषायामप्यभिनवशब्दकल्पना रोद्धुं न पार्यते । यतो हि भाषायाः खनिभूता मानवमनोभूमिरेव ।

विचाराणां तार्किकाभिव्यक्तिषु मनोभावस्य मुख्यः प्रभावो भवति, येन भाषायां वैकल्पिकनियमानां प्रयोगस्तु स्वाभाविक एव । अस्य कारणं तु मानवजीवनस्य तास्ता दशा एव सन्ति, याभिर्मनोभावो रात्रिंदिवं परिवर्तितः परिवर्धितश्च समेधते । इदं स्वाभाविकमस्ति यत् कालप्रभावाद् देशप्रभावाच्च भाषायां केचिच्छब्दाः सबलार्था भवन्ति, केचिच्च दुर्बलार्थाः । किन्त्विदमावश्यकं नास्ति यत् सबलार्थाः शब्दाः सदम्[4] प्राचीनतरा एव भवेयुः । अयं तु प्रयोक्तृसापेक्षो धर्मः । भाषाव्यवहर्तॄणां प्रयोगैरेव कश्चिच्छब्दः सबलार्थतामेति, कश्चिच्च दुर्बलार्थताम् । अत एव भाषास्वर्थसङ्कोचः, अर्थ-विकासः, अर्थादेशश्च सञ्जायते[5] ।

एवमेव यदा कश्चिन्निपातो व्यवहर्तृभिरनभ्यस्तत्वात् कालप्रवाहे स्वीयार्थमूर्तिं सम्मूर्च्छयति, तदा सम्मूर्छितार्थकं ध्वनिग्रामरूपशब्दमूर्तिमुज्जीवनायान्येषु निपातेष्वथ च विवर्गीयेष्वपि शब्देषु स संश्लिष्यते । शब्दयोः संश्लेषणेन प्राक्सम्मूर्च्छितोऽर्थस्तद्-भिन्न इव भासते । अमुमेवाशयं विवृणोति महेश्वरो[6] निरुक्तभाष्ये—

**पूर्वामवस्थामजहत्संस्पृशन् धर्ममुत्तमम् ।**
**सम्मूर्छित इवार्थात्मा जायमानोऽभिधीयते ॥**

इत्थं निपातानां संख्यानिर्धारणेऽर्थनिश्चये च महत्प्रत्यूहभूता इमे सान्धिका निपाताः ।

---

१. ऋ० सं० ३।११।१—'आनुषक् = आनुपूर्व्येण । आसमन्ताद् अनुषजतीत्यानुषक् । षञ्ज् = सङ्गधातुषकारस्य सकारः वपि । 'अनिदितामिति' उपधालोपः 'उपसर्गात्सु' इति षत्वम्' (सायणः) । २. ऋ० सं० २।२४।१२—सायणभाष्यम् ।

३. अभिज्ञानशा०—१।२५—राघवभट्टः ।

४. 'सदम्' इति वैदिकभाषानिपातः सदानिपातपर्यायः ।

५. जो० वान्द्रियैज—भाषा—पृ० १९८ । ६. निरुक्तभाष्यटीका—पृ० २८ ।

प्रायेण दृश्यते यन्निपातयोर्निपातानां वा संश्लेषेण या रूपमूर्तिरुदेति, तस्या निपाताभिख्या स्वाभाविक्येव। यतो हि सवर्गीयः स संश्लेषः; किन्तु देववाण्यामेतादृशा अपि दृष्टान्ता उपलभ्यन्ते, येषु निपातधातोः, निपातनाम्नोर्वा सन्धिर्निपातसंज्ञायां हेतुर्भवति। तत्र विवर्गीयस्य सन्धेरपि निपातसंज्ञा सञ्जायते।

विवर्गीयस्य सन्धेः कुत्रचिद्धातुसंज्ञाऽपि दृश्यते। यथा—√संग्राम[1] [= युद्धे] < सम् + √ग्राम > संग्रामयते, √व्यय[2] [= गतौ] < वि + √अय् > व्येति, √वीर[3] [= विक्रान्तौ] < वि + √इर > वीरयते, √निवास[4] [= आच्छादने] < नि + √वस > निवासयति, √कुस्म[5] [= कुत्सितस्मयने] < कु + √स्म > कुस्मयते, √स्वद[6] [= आस्वादने] < सु + √अद् > स्वदते, √ष्वञ्ज[7] [= परिष्वङ्गे] < सु + √अञ्ज > परिष्वजत इत्यादि। अत्र धातुक्रोडीकृता निपाताः।

बहुत्र नामक्रोडीकृता अपि निपाता दृश्यन्ते। यथा—आशा[8] < आ + √शद्लृ [= शातने] > आशा [= दिक्]; प्लक्षः[9] < प्र + √क्षर > प्रक्षः > प्लक्षः, न्यग्रोधः[10] < नि + अक् + √रुध् > न्यग्रोधः, स्वर्गः[11] < सु + √ऋ [= गतौ] > स्वर्गः, नरकः[12] < नि + √ऋ [= गतौ] > न्यर्कः; व्याघ्रः[13] < वि + आ (ङ्) + √घ्रा [= गन्धोपादाने] > व्याघ्रः = व्याजिघ्रतीति व्याघ्रः, वर्धमानः < अव [= समन्तात्] + √ऋधु [= संसिद्धौ] + मानः > अवर्धमानः > वर्धमानः। तथा चाह धनञ्जयः[14]—'अव = समन्तात्, ऋद्धम् = परमातिशयप्राप्तम्, मानम् = केवलज्ञानं यस्यासौ वर्धमानः। वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः—इत्यवशब्दस्याकारलोपः'। परुषः < अप + √रुष् > अपरुषः > परुषः। निर्वक्ति च धनञ्जयः[15]—'परुष्यति = कुप्यतीति परुषः'। 'वष्टि भागुरिरल्लोपः' इत्यादिना अपोऽकारलोपः। अत्र नामक्रोडीकृता निपाताः। बहुत्र निपातक्रोडीकृता धातवो नामानि चाधिगच्छन्ति। तद्यथा—

---

१. सिद्धान्तकौमुदी—७।३।३२, क्षीरतरङ्गिणी–चुरादिः ३।२९। २. तदेव–६।४।९८।
३. (क) सायणः–अथर्ववेदे–५।८।१, क्षीरतरङ्गिणी–३२९।
(ख) सिद्धान्तकौमुदी—७।४।९७।
४. सिद्धान्तकौमुदी ७।१।१०१, वा० 'उपसर्गाच्च दैर्घ्ये'।
५. सिद्धान्तकौमुदी–१।१।१०१, वा० 'कुस्मनाम्नोर्वा'। ६. सिद्धान्तकौमुदी ६।४।१२६।
७. सिद्धान्तकौमुदी ६।४।२५। ८. निरुक्तम्—६।२।
९. नामलिङ्गानुशासनम्–२।४।३२, प्रक्षरतीति प्लक्षः 'अन्येष्वपि दृश्यते' (पा० ३।२।१०१) इति डः। रलयोरेकत्वस्मरणम्' (सर्वानन्दः)। १०. तदेव।
११. निरुक्त०–६।३–महेश्वरभाष्यम्। १२. तदेव।
१३. दशपाद्युणादिवृत्तिः–सू० १०२,–'व्याङि उपपदे घ्रातेर्धातोः कन्प्रत्ययो भवति। घ्रा = गन्धोपादाने व्याजिघ्रतीति व्याघ्रः = शार्दूलः।'
१४. धनञ्जयनाममाला–श्लो०–११५–अमरकीर्तिभाष्यम्। १५. तदेव—१५५।

(क) आनुषक् < अनु + √षञ्ज् [सङ्गे] > आनुषक् [आनुपूर्व्येण]। तथा चाह सायणः[१]—'आनुषक् = आनुपूर्व्येण। आ = समन्तादनुषजतीत्यानुषक्। षञ्ज सङ्गे धातुषकारस्य सकारः, क्विप्, 'अनिदिताम्' इति उपधालोपः, 'उपसर्गात्सुः' इति षत्वम्' इति।

(ख) विश्वाहा < विषु + अहः > विष्वाहः > विश्वाहा = सर्वेष्वहःस्वित्यर्थः। संवदति च स्कन्दस्वामी[२]—'विश्वाहा निपातोऽयं सर्वेष्वहःस्वित्यस्मिन्नर्थे वर्तते' इति।

(ग) विषूचः < पिषु + √अञ्च् [= गतौ] > विषूचः = नानागामिनः। प्रतिपादयति च स्कन्दस्वामी[३]—'विषु इति निपातो नानात्ववाची, अञ्चतिर्गत्यर्थः। विषूचः = नानागामिनः'।

(घ) स्वगा < सु + √गम् [= गतौ] > सुगाः > स्वगाः = सुखेन गन्तव्यानि। समर्थयते च सायणाचार्यः—'हे देवाः, वः सदनानि = स्थानानि, सुगा = सुगानि = सुलभानि = सुखेन गन्तव्यानीत्यर्थः। सुपूर्वाद् गमेः 'सुदुरोरधिकरणे' इति डः।

'स्वागतम्' इति शोभनागमनवाचकपदमपि 'स्वगाः' इति निपातेनैवात्मस्वरूपमलभत। संवदति महेश्वरः[४]। तद्यथा—'सुगाः = स्वागमनानि = शोभनान्यागमनानि। पुनः पुनः अस्मद्यज्ञे' इति।

(ङ) स्वधा < सु + √अद् [= भक्षणे] > स्वदा > स्वधा = पितृभक्ष्यं कव्यम्। तथा च व्यवस्थापयति कुल्लूकभट्टो मनुस्मृतौ[५]—'पितृमातृदेवताक एकोद्दिष्टश्राद्धे तृप्तिप्रश्नार्थं स्वदितमिति वाच्यम्। तथा च गोभिलसाङ्ख्यायनौ स्वदितमिति तृप्तिप्रश्नः। मेधातिथिगोविन्दराजौ तु श्राद्धकालागतेनान्नेनापि स्वदितमित्येव कर्तव्यमिति व्याचक्षतुः।

**श्राद्धे स्वदितमित्येतद्वाच्यमन्येन केनचित्।**
**नानुरुद्धमिदं विद्वद्वृद्धैर्न श्रद्दधीमहि॥** इति।

इत्थं प्रमाणैरेभिस्तथा स्वधाशब्दार्थसङ्केतितकव्यैरिदं निश्चिनुमो यत् 'स्वधा'-निपाते √अद धातुरेवान्वेति।

(च) स्वस्ति[६] < सु + √अस् [= भुवि] + ति > स्वस्तिः = अभिपूजितार्थे मङ्गलार्थे वा। विवृणोति चामुं शब्दं भट्टभास्करः[७]—'स्वस्तिः = अविनाशहेतुरस्माक-

१. (क) ऋ० सं० १।७२।७, ३।११।१, ८।१२।११, ९।२६।७, १०।८३।१, स्कन्दभाष्यमपि द्रष्टव्यम्। (ख) शब्दरत्नाकरः—६।११०, सुन्दरगणिविरचितः।
२. ऋ० सं० १।२५।१२, १।२५।१५, ४।३३।१०—सायणभाष्यमप्यवलोकनीयम्।
३. ऋ० सं० ६।५९।५, शुक्लय० १९।१०, सिद्धहेमशब्दानु० १।१।३१।
४. निरुक्तम्—१२।४।
५. मनुस्मृतिः—३।२५४, रामायणम्—७।२३।२३, गोविन्दराजियव्याख्या, महाभारतम्—उद्योगप० १०—१०२।१३।
६. ऋ० सं० १।१।९, तै० सं० ३।२।४, निरुक्तम्—३।४, श्रीमद्भागवतपुराणम्—४।२४।३३।
७. तै० सं० ३।२।४।

मयम् । अयं स्वस्तिशब्दो निपातो गुणमात्रे अविनाशे वर्तते । सोमदायिनीं मतुब्लोपाद्-भेदोपचाराद्वा शुक्लादिवदगुणिन्यपि अविनाशहेतौ वर्तते । विघनश्चास्माकं स्वस्तिः = अविनाशहेतुः' ।

आचार्यदुर्गोऽपि[1] संवदति भट्टभास्करस्य मतम्—'अस्तिरयं सुपूर्वः सन्नुच्यते' । अतः स्वस्तीति निपातोऽयं सुनिपातसहकृतास्धातुक्रोडीकृतः सन् निपातसंज्ञाभाग् भवतीति ।

(छ) स्वाहा[2] <सु + √ब्रू (ञ)[ = व्यक्तायां वाचि] > आह > स्वाहा = स्वयमेव सरस्वती आह = ब्रूते ।

यद्यपि बहुविधा व्युत्पत्तीर्यास्काचार्यो निरुवाच स्वाहाशब्दस्य, तथापि साम्प्रतं निपातोऽयं हविरभिधानार्थे प्रयुक्तः । यास्काचार्यस्तु[3] प्रत्याचष्ट—'सु आहेति वा, स्वा वागाहेति वा स्वयं प्राहेति वा स्वाहुतिं हविर्जुहोतीति वेति' । सायणाचार्योऽप्यनुकरोति यास्कमतमथर्ववेदे[4] ।

वस्तुतः स्वाहाकारस्योत्पत्तिः कथमभूदिति तैत्तिरीये[5] स्पष्टमाम्नातम्, तद्यथा—'तद्व्यचिकित्सज्जुहवानी मा हौषामित्युपक्रम्य तं वागभ्यवदज्जुहुधीति सोऽब्रवीत् कस्त्वमसीति ? स्वैव ते वागित्यब्रवीत् । सा जुहोत् स्वाहेति । तत् स्वाहाकारस्य जन्मेति' । नारायणभट्टोऽप्यनुसरति[6] तैत्तिरीयपदवीम् । स व्याख्याति यत् 'स्वाहा' इति तिङ्प्रतिरूपको निपातः । √ब्रू (ञ्) [ = व्यक्तायां वाचि] इति धातोराहादेशो भवति । तथा चाह भोजराजः[7]—

**पञ्चानां ब्रुव आद्यानामाहादेशः स्मृतो लटि ।**

**आहेत्येतदतीते तिङ्प्रतिरूपकमव्ययम् ।।** इति ।

एवं प्रदर्शितं पूर्वं कुत्रचिन्मिथो निपातयोः सन्धिः, कुत्रचिन्मिथो धातुनिपातयोः सन्धिः, कुत्रचिच्च नामनिपातयोः सन्धिः । प्रस्तुतानि चोद्धरणानि सान्धिकनिपातयोर्निपातानां वा निपातसंज्ञानैमित्तिकानि धातुनिपातयोर्निपातसंज्ञायाः, नामनिपातयोर्निपातसंज्ञायाश्च । सर्वविधानां सन्धीनामविशेषेण तत्र निपातसंज्ञा प्रदर्शिता ।

वस्तुतो भाषा द्विविधा भवति—शब्दप्रसविनी, शब्दाहरिणी च । शब्दप्रसविनीषु सर्वासु भाषासु शब्दाः प्रसूयन्ते । आहरिणीषु च शब्दाः शब्दप्रसविनीभ्यो भाषाभ्य आह्रियन्ते । प्रायेण सर्वाः संस्कृत-अवेस्ता-ग्रीक-लैटिन-प्रभृतयः प्राचीनभारो-

---

१. निरुक्तम् ३।४ ।
२. अथर्ववेदः–७।९८।८, तै० सं० १।१।१३, १।२।५, छान्दोग्य ब्रा० १।१।१२ ।
३. निरु० ८।२० ।
४. अथर्व० ७।९७।८ ।
५. तै० ब्रा० २।१।२।२–३ ।
६. कुमारसम्भवम्–७।८२ ।
७. कुमारसम्भवम्–७।८२, नारायणभट्टव्याख्या ।

पीयार्यभाषाः शब्दप्रसविन्यः। तथैवाधुनिका हिन्दी-अंग्रेजी-फारसी-गुजराती-मराठी-नेपाली-जर्मन-फ्रैंचप्रमुखा भारोपीयार्यभाषाः शब्दाहरिण्यः, मधुकरवृत्तयो वा। प्रतिपादयन्ति च विमर्शनमिदमाधुनिकाः—टर्नर[१]-फेरर[२]-मोनियरविलियम्स[३]-मैक्समूलर[४]-बरो[५]-वान्द्रियैज[६]-गुणे[७]-प्रभृतयो भाषाशास्त्रतीर्थदर्शिनः। सर्वे इम उद्घोषयन्ति शब्दप्रसवक्षमायाः संस्कृतभाषाया महत्त्वम्।

गवेषणेनानेन निश्चेतुं शक्यते यन्न केवला निपातपदेन निपातार्थे रूढा एव निपाता बोध्यन्ते, अपि तु यौगिका अपि निपाता बोद्धव्याः।

वस्तुतोऽनन्तार्थाविष्करणक्षमायाः शब्दरूपप्रतिमायाः प्रसवे यथा विजातीययोः शब्दयोर्योगः फलाय कल्पते, न तथा सजातीययोः। अत एव महाभाष्यकारेणोक्तं[८] यदर्थान्यथाकरणं तु सगोत्रीयैः शब्दैः कर्तुं न पार्यते, तत्कृते त्वन्यथाकरणमावश्यकम्—'गुणान्तरं न खल्वपि शिल्पिन उत्पाद्यमाना द्रव्यान्तरेण प्रक्षालयन्ति। अन्येन शुद्धं धौतकं कुर्वन्ति, अन्येन शैफालिकम्, अन्येन माध्यमिकम्' इति। विवर्गीयशब्दयोगेनातिरिक्तार्थलिप्सुना वाजसनेयिप्रातिशाख्यकृता चतुर्विधानि पदगोत्राणि निर्धारितानि। तद्यथा—

**भारद्वाजकमाख्यातं[९] भार्गवं नाम भाष्यते।**
**वासिष्ठ उपसर्गस्तु निपातः काश्यपः स्मृतः॥** इति।

तद्भाष्यकृताऽनन्तभट्टेन श्लोकोऽयं व्याख्यातो यत्—'भारद्वाजेन दृष्टत्वादाख्यातं भारद्वाजगोत्रम्। तथा भृगुणा दृष्टत्वान्नाम भृगुगोत्रम्। वसिष्ठेन दृष्टत्वाद् उपसर्गो वसिष्ठगोत्रः। काश्यपेन निपातो दृष्टः। अतः काश्यपगोत्र इत्युच्यते'। पदगोत्रनिर्धारणानन्तरं स चतुर्विधपददैवत्यनिर्द्धारणं करोति—

**सर्वं तु[१०] सोम्यमाख्यातं नाम वायव्यमिष्यते।**
**आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः॥** इति।

अनन्तभट्टो विवृणोति श्लोकममुम्—'सर्वमाख्यातं सोमदैवत्यम्। सर्वं नाम वायुदैवत्यम्। अग्निदैवत्या उपसर्गाः। निपाता वरुणदैवत्याः। एवं ह्युपास्याः सन्तोऽर्थानभिज्ञस्यापि पुरुषस्य फलप्रदा भवन्ति' इति। इमाः सर्वाः पदगोत्रपददैवत्य-

---

१. ए कम्परैटिव एण्ड एटिमालाजिकल डिक्शनरी आफ दि नेपाली लैंग्वेज–पृ० १०३३।
२. ए कम्परैटिव ग्रामर आफ दि संस्कृत, ग्रीक एण्ड लैटिन–पृ० १३८।
३. संस्कृत इङ्गलिश डिक्शनरी–पृ० २१५।
४. लेक्चर्स आन दि साइन्स आफ लैंग्वेज–पृ० २७३। ५. संस्कृत लैंग्वेज–पृ० ४९।
६. भाषा–पृ० ४००। ७. तुलनात्मक भाषाविज्ञान–पृ० २१८।
८. महाभाष्यम्—५।३।५५।
९. वाजसनेयिप्रातिशाख्यम्—८।५१। १०. तदेव ८।५२।

विभागप्रक्रियास्त्वौपलाक्षणिका यौगिकशब्दप्रतिमानिर्माणपराः प्रतिभान्ति। यतो हि भौतिकदेहनिर्माणे यथा पाञ्चभौतिकतत्त्वान्यपेक्षितानि, तथैव शब्ददेहस्य निर्माणे चतुर्विधपदगोत्राणि पददैवतानि च सापेक्षाणि भवन्ति। सृष्टिक्रमानुरोधिनीयं शब्द-सृष्टिप्रक्रिया विवर्तिता।

प्रतिपादनस्यास्यात्रेदमेव तात्पर्यं यच्छब्दप्रतिमानिर्माणपराया भाषायाः कृते कोऽपि शब्दो विजातीयो नास्ति। यथा कथा वा भवेच्छब्दानां सृष्टिरित्येव तस्या अभिप्रेतम्। सा शब्दप्रतिमानिपातैर्निपातानां संश्लेषेणोदीयात्, निपातैरुपसर्गाणां संश्लेषेणोदीयात्, निपातैर्धातूनां संश्लेषेणोदीयात्, आहोस्विन्निपातैर्नाम्नां वा संश्लेषेणो-दीयात्। निपातयोर्निपातानां वा निपातधातूनां वा निपातोपसर्गाणां वा निपातनाम्नां वा योगेन निष्पन्ना निपाता निपातसंख्याया मानमतिमानतामातन्वन्ति। अत एव सायण[1]-व्यङ्कटमाधव[2]-त्रिलोचन[3]-विट्ठल[4]-विनयसागर[5]-प्रभृतिभिः शाब्दिकैरभाषि यत्—'निपातगणे चादिप्रकरणे वा संख्याता निपाता एवेयत्तया न निश्चेतव्याः। तत इतरेऽपि निपाता अन्वेष्टव्याः'। तथा च विनयसागरः—

**निपातगणतो ग्राह्या निपाता अपरेऽपि च।**
**अव्ययान्यपराण्येव ग्राह्याण्यव्ययकामतः॥** इति।

आचार्यविट्ठलस्तु सङ्गिरते यत्—'प्रयोगवशादित्यनेनापठिता अपि सुदि-वदि-रोदसीचिरायेत्यादयो लोके प्रयुज्यमाना निपातत्वेन ज्ञेयाः' इति। पदमञ्जरीकारो हरदत्तमिश्रो[6] ब्रवीति यत् सौत्रा अपि निपाता भवन्तीति—'तस्मात् सौत्रा एते भोस्-भगोस्-अघोस्-निपाताः', 'भो[7] भगो-अघो' इति सूत्रे निर्दिष्टा चादिषु वा पठितव्याः' इति। एतेन सिद्ध्यति यन्न केवला धातव एव सौत्रा भवन्त्यपि तु निपातोपसर्गावपि। एवं यौगिकनिपातानां विमर्शनानन्तरमुपरिष्टान्मनोभावरूपरूषितानां निपातानां संख्यापार्यवसानिकान्यर्थपार्यवसानिकानि च निदर्शनानि समुपस्थाप्यन्ते।

**मनोभावमूलका निपाताः**

प्रायेण मानवो जीवनव्यापारेषु मनोभावेनोद्बोधितः सन्नग्रेसरति। सर्वे सङ्कल्पविकल्पाः, निश्चयवितर्काः, हानोपादानानि च मनोभावैरेव संवर्धन्ते विकसन्ति च। स मनोभावः स्वीयामर्थमूर्तिं विविधैरुपादानकारणैरभिव्यनक्ति। क्वचिदक्षि-निकोचैः, क्वचित् पाणिविहारैः, क्वचिदभिनयैः, क्वचिदनुकरणशब्दैः, क्वचिच्च निपातै-रिति। चतुर्विधपदविभागेषु निपाता एव मनोभावानां सर्वोत्कृष्टरूपेण प्रातिनिध्यं

१. ऋ० सं० ८।४६।१०। २. ऋग्वेदानुक्रमणी–३।१४४।
३. अव्ययशब्दवृत्तिः–१।७। ४. प्रक्रियाकौमुदी–भूमिका–पृ० ३१।
५. भोजव्याकरणम्–निपातप्रकरणम्–५।
६. पदमञ्जरी–८।३।१। ७. पाणिनिः–८।३।१७।

भजन्ते। अनेकानि वाक्यानि यमर्थमाविष्कर्तुं न शक्नुवन्ति, तदर्थं एकेन निपातेनैवाविष्क्रियते। प्रायेण गभीराणां विचाराणामभिव्यक्तिर्निपातैरेव साध्यते। महाकविना भवभूतिनोत्तररामचरितनाटके लिखितं यत्—

**पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया।**

**शोकक्षोभे च हृदयं प्रलापैरेव धार्यते[1]॥** इति।

श्लोकस्यास्य प्रलापैरेवेति पदमन्यथाकृत्य पठितुं शक्यते यत् 'शोकक्षोभे च हृदयं निपातैरेव धार्य्यते' इति। यदा मनुष्यः शोकस्य क्षोभस्य च परां कोटिमारोहति, तदा तस्य भावा निपातैरेव निवृत्तिमाप्नुवन्ति। यतो हि जीवनस्य साधारणदशायां मनोभावो निरुद्विग्न इव तिष्ठति। स एवासाधारणदशायां सोद्विग्नस्सन् निपातमुखेनाभिव्यक्तिमेति। अत एव महाकविना कालिदासेनाप्युक्तं यत्—

**ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते।**

**प्रायः स्वं महिमानं क्षोभात् प्रतिपद्यते हि जनः[2]॥** इति।

अर्थात् प्रकृतिस्थेन जनेन स्वमहिमा न प्रत्यभिज्ञायते, अप्रकृतिस्थेन = संक्षुब्धेनैव जनेनान्तर्निगूढस्तेजः प्रत्यभिज्ञायते।

शब्दानां व्यवहारे या वीप्सा क्रियते, साऽपि मनोभावमूलिकाऽर्थभूयस्त्वमूलिका च भवति। विशेषेण निपातवर्गीया एव शब्दा वाक्येष्वभ्यस्यन्ते। न ह्यकस्माच्छब्दोऽभ्यस्यते। शब्दाभ्यासोऽर्थभूयस्त्वायैव भवति। समर्थ्यन्तेऽयं सिद्धान्तः—आचार्ययास्क[3]-पतञ्जलि[4]-स्कन्द[5]-सायण[6]-व्येङ्कटमाधव[7]-दुर्ग[8]-श्रीधर[9]-चतुर्धर[10]-राजाराम[11]-शन्तनु[12]-जयचन्द्रप्रमुखैः[13] पदपदार्थगवेषणपरायणैः।

यास्काचार्योऽपि न्यभालीत्—'अभ्यासे भूयांसमर्थं मन्यन्ते। यथाहो दर्शनीयाहो दर्शनीयेति। तत्परुच्छेपस्य शीलम्' इति। यास्कवाक्यं व्याकुर्वन्नाचार्यदुर्गो विशदयति यत्—'शब्दाभ्यासे यत्रान्यो विशेषो नास्ति, तत्रैवं विशेषमाचार्या मन्त्रार्थतत्त्वविदो मन्यन्ते—यदुतार्थभूयस्त्वमिति। नह्यकस्मात् स एव शब्दः पुनरभ्यस्यते। लोकेऽपि चैतद् दृष्टम्—शब्दाभ्यासेऽर्थभूयस्त्वमिति। यथा—अहो दर्शनीयः, अहो दर्शनीय इति, गुणातिशये हि खियाः शब्दाभ्यासः। तस्मान्मन्त्रेष्वपि तद्वदेवेति न्याय्यम्'। अत्र

---

१. उत्तररामचरितम्–३।२९।

२. अभिज्ञानशाकुन्तलम्–६।११। ३. निरुक्तम्–१०।४२। ४. महाभाष्यम्–८।१।४।

५ ऋ० सं०–१०।६४।१६। ६. ऋ० सं०–८।४६।१०।

७. ऋग्वेदानुक्रमणी–२।२६–२७। ८. निरुक्तम्–१०।४२, दुर्गव्याख्या।

९. श्रीमद्भागवतम्–५।१८।८। १०. दुर्गासप्तशती–५।१२, चतुर्धरीव्याख्या।

११. तदेव–दंशोद्धारव्याख्या। १२. तदेव–शान्तनवीव्याख्या।

१३. कुन्दमाला–अङ्कः–१, पृ० ७; जयचन्द्रकृता सञ्जीविनी व्याख्या।

यास्काचार्योद्धरणेऽपि 'अहो' = आश्चर्ये इति निपात एवाभ्यतो दृश्यते। न हि दृशिक्रियायामभ्यासेन किमपि किञ्चिदप्यर्थप्रकर्षमुपलब्धुं शक्यते।

तीर्थदर्शिना[1] गुरुणाऽपि यास्कमतमेवानुसृतम्, तद्यथा—'अनेकाश्रयत्वाच्च वीप्सायाः। अनेकाश्रया च पुनर्वीप्सा। अनेकमर्थं संप्रत्याययिष्यामीति वीप्सा प्रयुज्यते। तदेत् प्रयोक्त्र्यधीनं भवति। एतस्मिंश्च प्रयोक्त्र्यधीने क्वचित् काचित् प्रसृततरा गतिर्भवति' इति।

मनोभावानां निपातमुखेनाविष्करणप्रतिपादनमनु निपाताः कथं मनोभावाविकरणक्षमा भवन्तीति विवेचनमत्र प्रासङ्गिकं प्रतिभाति। अत्र चतुर्भिर्मनोविश्लेषणक्षमैराचार्यैः—शन्तनु[2]-चतुर्धर[3]-राजाराम[4]-जयचन्द्र[5]-पठिताश्चत्वारः श्लोका उद्ध्रियन्ते, यैर्भाषायां मनोभावरूपरूषितानां निपातानां प्रयोगविषये राद्धान्तिको निर्णयो भाव्यते। तथा च निदर्शनानि—

(क) प्रकर्षकोपहर्षेषु स्वप्नदैन्यभयेषु च।
स्तुत्यभ्यासानुवादेषु पौनरुक्त्यं न दुष्यति॥

(ख) विषादे विस्मये हर्षे खेदे दैन्येऽवधारणे।
प्रसादने सम्भ्रमेऽपि द्विस्त्रिरुक्तं न दुष्यति॥

(ग) विशेषे विस्मये हर्षे खेदे दैन्येऽवधारणे।
प्रसादने सम्भ्रमे च द्विस्त्रिरुक्तं न दुष्यति॥

(घ) विवादे विस्मये हर्षे खेदे दैन्येऽवधारणे।
प्रसादने सम्भ्रमे वा द्विस्त्रिरुक्तिर्न दुष्यति॥

श्लोकेष्वेषु दृश्यन्ते हि पाठभेदाः। भवतु नाम किं तेन? प्रायेण सर्वेषु श्लोकेषु निपातवीप्साविषयेऽभ्यासविषये चातिगभीराणि कानिचित् तथ्यान्यन्तर्निगूढानीति प्रतीयते, यैस्तथ्यैर्निपातानां व्यवहारे तत्त्वनिर्णायकः पन्थाः प्रशस्ततरो भविष्यतीति मन्ये।

कथं वा निपाता अभ्यस्य प्रयुज्यन्ते? को वाऽभिप्रायस्तेषामभ्यासे? वाक्यार्थवैशद्ये कस्तेषां योगः? मनोभावरूपरूषितानां निपातानामभ्यासो मानवः कस्यां कस्यां मनोभावदशायं करोति? कतिविधास्ता मनोदशा भवन्तीति दृष्टान्तपुरस्सरं विश्लेषणमत्र प्रतयन्ते।

पुरस्ताद् ये चत्वारः श्लोकाः कीर्तितास्तेषां तुलनात्मकेन गवेषणेन निर्धार्यते यत्—हर्षातिरेके, वितर्कातिरेके, आदरातिरेके, ससम्भ्रमातिरेके, विषादातिरेके, क्रोधा-

---

१. महाभाष्यम्—८।१।४। २. दुर्गासप्तशती—५।१२। ३. तदेव।
४. तदेव। ५. कुन्दमाला—अङ्कः—१, पृ० ७।

तिरेके, विस्मयातिरेके, दैन्यातिरेके, जिज्ञासातिरेके, स्तुत्यतिरेके, प्रसादातिरेके, अर्थप्रकर्षातिरेके, न्यक्कारातिशये, प्रलापातिशये च मनुष्यैः स्वाभिप्रायमाविष्कर्तुं वीप्सापूर्वकनिपाता व्यवह्रियन्ते। नह्येतासु दशासु मानवः प्रेक्षापूर्वकारी भवतीति। यतो हि पुटपाकप्रतीकाशेनान्तरेण भावसम्मर्देन स तदानीं परिचाल्यते। न हि तादीत्ना मनोभावा निपातेतरवर्गीयैः शब्दैर्वोढुं पार्यन्ते। अतो निःसीमार्थान्निपातानाधारीकृत्य स मनोभावः परीवाहरूपेण स्वीयप्रतिक्रियामेति। अत एव मानवमनोभावमर्मज्ञेन भवभूतिनोद्घुष्यते यत्—शोकक्रोधक्षोभविषादप्रहर्षादिदशायां मानुषाणां दुःसहानि दुःखानि सुखानि च निमित्तभेदात् सहस्रैः स्रोतोभिर्निपातं द्वारीकृत्य सम्प्लवन्ते—

**सन्तानवाहीन्यपि मानुषाणां दुःखानि सद्बन्धुवियोगजानि।**
**दृष्टे जने प्रेयसि दुःसहानि स्रोतैः सहस्रैरिव सम्प्लवन्ते[1] ॥**

एतादृशीष्वेवावस्थासु निपाताः सम्भूय निपतन्ति। तथा चोक्तं नारायण-दण्डनाथेन[2] यत्—

**केऽप्येषां द्योतकाः केऽपि वाचकाः केऽप्यनर्थकाः।**
**आगमा अपि केऽपि स्युः सम्भूयार्थस्य साधकाः ॥**

डेनिस्टनोऽप्यनुहरति[3] संवदति दण्डनाथमतम्—'शोकक्षोभप्रकर्षप्रहर्षाद्यवस्थासु निपाता यूथचरा इव निपतन्तीति'।

एतदेव हि निपातानां निपातत्वम्। निपातलक्षणनिर्धारणप्रसङ्गे शौनकेन साधूक्तम्—

**इयन्त इति संख्यानं निपातानां न विद्यते।**
**प्रयोजनवशा ह्येते निपात्यन्ते पदे पदे[4] ॥**

सहस्रैः स्रोतोभिः सम्प्लवमानमानसः कथमियत्तया मातव्यैः पदैर्वोढुं शक्यते? अस्मादेव निपाताः संख्यया इयन्तातीताः।

परम्परायामस्यां प्राक्कीर्तितस्यैकैकस्यातिरेकीयस्य संवादपुरःसराण्युद्धरणानि आ ऋग्वेदसंहितातो निपाताभ्यासस्य प्रस्तूयन्ते—

**(१) हर्षातिरेकीयाः**

प्रश्च्योतनं[5] नु हरिचन्दनपल्लवानां
निष्पीडितेन्दुकरकन्दलजोऽनुसेकः।
आतप्तजीवनमनःपरितर्पणो मे
सञ्जीवनौषधिरसो हृदि नु प्रसिक्तः ॥

अस्मिन् श्लोके 'नु' इति निपातेन हर्षातिशयो बोध्यते।

---

१. उत्तररामचरितम्—४।८।
२. बृहद्देवता—२।९५।
३. सरस्वतीकण्ठाभरणम्—१।१।११८।
४. दि ग्रीक पार्टिकल्स्, पृ० १०४।
५. उत्तररामचरितम्—३।११।

**(२) वितर्कातिरेकीयाः**

(क) किं स्विदासीदधिष्ठानमारम्भणं[1] कतमत्स्वित्कथासीत् ।
यतो भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥

(ख) किं स्विद्वनं[2] क उ सवृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।

(ग) किं तावद् व्रतिनामुपोढतपसां[3] विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।
आहोस्वित् प्रसवो ममापरिचितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ इति ।

एषु छन्दःसु विविधैर्निपातैर्वितर्कातिशयो निभाल्यते ।

**(३) आदरातिरेकीयाः**

'हा अम्ब[4] अरुन्धति ! हा भगवन्तौ वसिष्ठविश्वामित्रौ ! हा भगवन् पावक ! हा देवि भूतधात्रि ! हा तात जनक ! हा तात ! हा मातरः ! हा प्रियसखमहाराजसुग्रीव ! हा सौम्य हनूमन् ! हा परमोपकारिन् लङ्काधिपते विभीषण ! हा सखि त्रिजटे ! दूषिताः स्थ, परिभूताः स्थ, रामहतकेन' ।

अत्र 'हा' इति निपातेन आदरातिशयो ध्वन्यते ।

**(४) सम्भ्रमातिरेकीयाः**

(क) किं[5] किं किं चु चु चुम्बनैर्म म मुधा वक्त्राम्बुजस्याग्रतो
दे दे देहि पि पि प्रिये सु सु सुरां पात्रे नि रे रेवति ।
मा मा मा वि विलम्बनं कु कु कुरु प्रेम्णा हरिर्याचते
यस्येत्थं मदघूर्णितस्य तरसा वाचः स्खलन्त्याकुलाः ॥

(ख) किं नन्दी[6] किं मुरारिः किमु रतिरमणः किं हरः किं कुबेरः
किं वा विद्याधरोऽसौ किमुत सुरपतिः किं नलः किं कुमारः ।
नायं नायं न चायं न खलु नहि न वा नापि नाऽसौ न चैव
क्रीडां कर्तुं प्रवृत्तः स्वयमिह हि हले ! भूपतिर्भोजदेवः ॥

श्लोकाविमौ निपातद्वारेण साङ्गीतिकं लयात्मकं च सम्भ्रमानन्दमातनुतः ।

**(५) विषादातिरेकीयाः**

(क) अहो दुःखमहो[7] कृच्छ्रं यत्र वाचः क्षमे तव ।
दुःखमेवंविधं प्राप्तं पुराकृतमिवाशुभम् ॥

---

१. ऋ० सं०–१०।८१।२ । २. ऋ० सं०–१०।८१।४ । ३. अभिज्ञानशाकुन्तलम्–५।९ ।
४. उत्तररामचरितम्–१, पृ० १०७ । ५. महाकविराजशेखरविरचितम्–बालभारतम्–१।५२ ।
६. हेमचन्द्रसूरिप्रणीतानेकार्थसङ्ग्रहः–पृ० १४३, महेन्द्रसूरिकृतव्याख्या ।
७. वाल्मीकिरामायणम्–१।२।१५ ।

(ख) मा निषाद[1] ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

(ग) अहह[2] ! तीव्रसंवेगो वाग्वज्रः ।
हा हा धिक् परगृहवासदूषणं यद्
वैदेह्याः प्रशमितमद्भुतैरुपायैः ॥

(घ) धिगस्तु खलु[3] दारिद्र्यमनिर्वेदितपौरुषम् ।
यदेतद्गर्हितं कर्म निन्दामि च करोमि च ॥

(ङ) स्वयमागतैव[4] माहा हा हा मोहान्न चिन्तिता न मया ।
स्वप्नेऽपि नापि गोपैर्मयापि मुषितेति सोऽपतत्पादयोः ॥

एतेषु स्थलेषु पठिता निपाताः सान्द्रविषादमाविष्कुर्वन्ति ।

**(६) क्रोधातिरेकीयाः**

(क) आः तिष्ठेदानीम् ! कथं न दृष्टः केशवः । अयं केशवः । अहो ह्रस्वत्वं केशवस्य ! आः तिष्ठेदानीम् । अहो दीर्घत्वं केशवस्य ! भो भो राजानः ! एकेनैकः केशवो बध्यताम्[5]' इति ।

(ख) अहो दुर्मर्यादता दुरात्मनां पौराणाम् । अहो रामस्य राज्ञः क्षिप्रकारिता !

**एतद्वैशसघोरवज्रपतनं शश्वन्ममोत्पश्यतः ।**
**क्रोधस्य ज्वलितुं धगित्यवसरश्चापेन शापेन वा[6] ॥**

(ग) प्रहर[7] नमतु चापं प्राक्प्रहारप्रियोऽहं
मयि तु कृतनिघाते किं विदध्याः परेण ।
धगिति विततवल्गयुद्गारभास्वत्कुठारः
प्रविघटितकठोरस्कन्धबन्धः कबन्धः ॥

(घ) 'भोस्तिरस्करिणीगर्वित[8] ! मदीयं शस्त्रं त्वां द्रक्ष्यति' ।

(ङ) 'आः[9] अतिथिपरिभाविनि' ।

(च) 'किं[10] पुरोभागे ! स्वातन्त्र्यमवलम्बसे' ।

(छ) 'आः[11] ! क एष मयि स्थिते चन्द्रमभिभवितुमिच्छति बलात्' ।

एतेषु मिताक्षरामिताक्षरमयेषु स्थलेषु विविधा निपाताः क्रोधं व्यञ्जयन्ति ।

---

१. वा० रा०–३।१२।७९ ।
२. उत्तररामचरितम्–१।४० ।
३. मृच्छकटिकम्–३।१९ ।
४. नारायणभट्टप्रणीतो नृगमोक्षप्रबन्धः–१५ ।
५. दूतवाक्यम्–१।४० ।
६. उत्तररामचरितम्–४।२४ ।
७. महावीरचरितम्–२।४९ ।
८. अभिज्ञानशाकुन्तलम्–६।२७ ।
९. तदेव–४।१ ।
१०. तदेव–५।२७ ।
११. मुद्राराक्षसनाटकम्–१।६ ।

**(७) विस्मयातिरेकीयाः**

(क) 'एतत्[1] सामगायन्नास्ते हा वु हा वु हा ३ वु'।

(ख) 'अहो[2] ! दर्शनीयोऽयं सन्धिः'।

(ग) 'अहो नु[3] खलु भोः।

वन्द्या विश्वसृजो युगादिगुरवः स्वायम्भुवा सप्त ये।
वैदेहस्य वयं च तर्हि किमहो ! सम्बन्धिनो न प्रियाः ॥

(घ) 'हंहो[4] वेदा यदि मता धर्माः केनापरे मताः'।

एतेषु प्रसङ्गेषु पठिता निपाता विस्मयं द्योतयन्ति।

**(८) दैन्यातिरेकव्यञ्जका निपाताः**

(क) 'स्वगा[5] त्वा देवेभ्य इत्याहा देवेभ्य एवैनं स्वगाकरोति'।

(ख) 'अह[6] नेत सन्नविचेतनानीत्येष ह वा अह्नां विचेतयिता'।

(ग) 'मा[7] नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः'।
वीरान् मा नो रुद्रभामिनो वधीर्हविष्मन्तः सदमित्वा हवामहे ॥

(घ) न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो
न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथाः।
न जाने मुद्रास्ते तदपि च न जाने विलपनं
परं जाने मातस्त्वदनुसरणं क्लेशहरणम्[8] ॥

सन्दर्भेष्वेषु पतिता निपाता दैन्यातिशयव्यञ्जकाः।

**(९) जिज्ञासातिरेकव्यञ्जका निपाताः**

(क) क उ[9] नु ते महिमानः समस्यास्मत्पूर्वं ऋषयोऽन्तमायुः।
यन्मातरं च पितरं च साकमजनयथास्तन्वः स्वायाः ॥

(ख) 'क[10] उ स्विज्जायते पुनरित्याह। चन्द्रमा वै जायते पुनः'।

(ग) वैखान[11]सं किमनया व्रतमाप्रदानाद्
व्यापाररोधिमदनस्य निषेवितव्यम्।
अत्यन्तमेव मदिरेक्षणवल्लभाभि-
राहो निवत्स्यति समं हरिणाङ्गनाभिः ॥

'राजा[12]-शृणुमस्तावत्। ततस्ततः' इति।

---

१. तैत्तिरीयोपनिषद्–३।१०।५ शाङ्करभाष्यम्। २. मृच्छकटिकम्–३।२२।
३. महावीरचरितम्–२।८। ४. महाभारतम्–शान्तिप० ५६८।९।
५. तै० ब्रा० ३।३।६। ६. ऐ० ब्रा० ३०।९।
७. छा० ब्रा० २।१।८। ८. दुर्गासप्तशती–देव्यपराधक्षमापनस्तोत्रम्–१।
९. ऋ० सं० १०।५४।३। १०. तै० ब्रा० ३।५।४।
११. अभिज्ञानशाकुन्तलम्–१।२३। १२. तदेव–५, पृ० १७८।

(घ) 'अथ हैनं शैव्यः सत्यकामः पप्रच्छ। स यो ह वै तद्भगवन्मनुष्येषु प्रायेणान्तमोङ्कारमभिध्यायीत्। कतमं वाव स तेन लोकं जयतीति'[१]।

**(१०) स्तुत्यतिरेकव्यञ्जका निपाताः**

(क) मा[२] प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिनः। मान्तः स्थुर्नो अरातयः'।

(ख) हये[३] राके सिनीवलि सिनीवलि पृथुष्टुके।
समुद्रे पथ्ये रेवति पथा नो यश आ वह स्वाहा॥

(ग) 'इंकाराय[४] स्वाहेकृताय स्वाहेत्याह'।

(घ) हुँहुँहूँकारपाराय हूँहूँकारप्रियाय च।
नमः शमशमे नित्यं गिरिवृक्षालयाय च॥

(ङ) न[५] खलु न खलु बाणः सन्निपात्योऽयमस्मि-
न्मृदुनि मृगशरीरे तूलराशाविवाग्निः।
क्व बत हरिणकानां जीवितं चातिलोलं
क्व च निशितनिपाता वज्रसाराः शरास्ते॥

उपर्युद्धृतेषु छन्दःसु व्यवहृता निपाताः स्तुत्यर्थमाविष्कुर्वन्ति।

**(११) प्रसादातिरेकव्यञ्जका निपाताः**

(क) 'सूत्रधारः—आर्ये। साधु[६] गीतम्। अहो रागबद्धचित्तवृत्तिरालिखित इव सर्वतो रङ्गः' इति।

(ख) 'ही[७] ही षुद्दु ईगं। षु द्दु वाइदं'।

(ग) 'अहो[८] अहो। साधु साधु, रेभिलेन गीतम्। वीणा हि नामासमुद्रोत्थितं रत्नम्'।

**(१२) अर्थप्रकर्षातिरेकव्यञ्जका निपाताः**

(क) प्रतिक्षेत्रे[९] प्रति तिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु।
प्रति प्राणे प्रति तिष्ठामि पुष्टौ प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मनि॥

(ख) अपि[१०] त्वां न लभेत् कर्णं राज्यलम्भोपपादनम्'।

(ग) नमो[११] भगवते नरसिंहाय नमस्तेजस्तेजसे आविराविर्भव'।

(घ) 'न[१२] न अभिन्नो नः शङ्कातः'।

---

१. प्रश्नोपनिषत्–५।१।
२. ऋ० सं० १०।५७।१।
३. छा० ब्रा० २।६।२।
४. तै० ब्रा० ३।८।१।
५. अभिज्ञानशाकुन्तलम्–१।१०।
६. तदेव–१, पृ० १३।
७. बालचरितम्, भासकृतम्–३, पृ० ४२।
८. मृच्छकटिकम्–३, पृ० ७८।
९. छा० ब्रा० २।२।२।
१०. महाभारतम्–उद्योगपर्वणि–१४२।२।
११. श्रीमद्भागवतम्–५।१८।७।
१२. प्रतिज्ञायौगन्धरायणम्–३, पृ० ९९।

(ङ) अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधुनवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति भुवि[1] ॥

(च) न नो न नुन्नो नुन्नो नो नानानानाननना ननु ।
नुन्नोऽनुन्नो न नुन्नेनो नानेना नुन्ननुन्ननुत्[2] ॥

एतेषु काव्यबन्धेषूपवर्णिता निपाता अर्थप्रकर्षातिशयमुत्तम्भयन्ति ।

**(१३) न्यक्कारातिरेकव्यञ्जका निपाताः**

(क) हद्धि उम्मत्तअस्स हत्थे ईहामत्तएण समणएण थुथूकिदा हा धिक्[3] ।

(ख) वृद्धास्तेन विचारणीयचरितास्तिष्ठन्तु हुँ वर्ण्यते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
यानि त्रीण्यपराङ्मुखान्यपि पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः[4] ॥

(ग) धिक् सानुजं[5] कुरुपतिं धिगजातशत्रुं
धिग् भूपतीन् विफलशस्त्रभृतो धिगस्मान् ॥

(घ) धिग् धार्मिकत्वमिह[6] धिङ्नृपतिश्च यं मे
धिक् क्षोणिरक्षणविचक्षणतां निरर्थाम् ।
यद्विप्रशापमपि हन्त दुरन्तमन्ते
कष्टां जुगुप्सितमलप्सि च जन्तुभावम् ॥

पुरस्तादुद्धृतेषु सन्दर्भेष्वागतैर्निपातैर्न्यक्कारातिशयो ध्वन्यते ।

**(१४) प्रलापातिरेकीयाः**

(क) रुदिताश्रुपरिद्यूनं हाहाकृतमचेतनम् ।
प्रयाणे राघवस्यासीत् पुरं परमपीडितम् ॥
ततो हलहलाशब्दो जज्ञे रामस्य पृष्ठतः ।
नराणां प्रेक्ष्य राजानं सीदन्तं भृशदुःखितम्[7] ॥

(ख) हा वत्स राम ! जगतां नयनाभिराम !
हा वत्स लक्ष्मण ! सलक्षणसर्वगात्र ।
हा साध्वि मैथिलि ! पतिस्थितचित्तवृते !
हा हा गताः किल वनं बत मे तनूजाः[8] ॥

---

१. अभिज्ञानशाकुन्तलम्–२।१० । २. किरातार्जुनीयम्–१५।१४ । ३. प्र० यौ०–३, पृ० ८१ ।
४. उत्तररामचरितम्–५।३५ । ५. वेणीसंहारम्–३।१३ । ६. नृगमोक्षप्रबन्धः–२३ ।
७. वा० रा०–२।४०।३४,३७ । ८. प्रतिमानाटकम्–२।४ ।

(ग) हा हा देवि स्फुटति हृदयं स्रंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि[1] ॥

(घ) दाक्षिण्योकदवाहिनी विगलिता याता स्वदेशं रति-
र्हाहालङ्कृतभूषणे सुवदने क्रीडारसोद्भासिनी ।
हा सौजन्यनदि ! प्रहासपुलिने ! हा मादृशामाश्रये ।
हा हा नश्यति मन्मथस्य विपणिः सौभाग्यपण्याकरः[2] ॥

(ङ) आजन्मनो नु वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रुः ।
ताते गुरौ द्विजवरे मम भाग्यदोषात्
सर्वं तदेकपद एव कथं निरस्तम्[3] ॥

इत्थमूर्ध्वमुद्धृतेषु मिताक्षरेषु सन्निपतिता निपाता अन्तर्निगूढपरीवाहरूपं शोकमुपश्लोकयन्ति ।

प्रायेण शोकानुविद्धं मानसं 'हा-हा' इति शब्दं करोति । अत्र ध्यातव्यमस्ति यत् करुण-वीर-रौद्र-वीभत्सप्रभृतयो रसाः, उपमा-उत्प्रेक्षा-वाक्यालङ्कार-सादृश्यप्रभृतयोऽलङ्काराश्च निपातबलेनैव काव्यमलङ्कुर्वन्ति । रसाभिव्यक्तौ निपातानामनन्यसाधारणो योगो नान्यथासिद्धः । अत एव हेमचन्द्राचार्यः[4] सभाजयति—**अनेकस्य निपातस्योपसर्गस्य चैकत्र पदे यः प्रयोगः, सोऽपि रसव्यक्त्यर्थः । यदाह—अहो बतासि स्पृहणीयवीर्यः । अत्राहो बतेत्यनेन श्लाघातिशयो ध्वन्यते'** इति । वस्तुतस्तु रसव्यक्तिरपि गाढतरानुभवैकगम्य एव । गाढतरा अनुभवा अपि निपातैरेवोत्तभ्यन्ते ।

भाषायां निपातानामाम्रेडनं यङन्त-सन्नन्तक्रियारूपाणामभ्यसनमपि मनोभावमूलकमेव । भावोद्रेकस्य सावेशमनोभूमौ मनुष्यैर्निपाता अन्ये च शब्दा अभ्यस्य प्रयुज्यन्ते । विशेषतो नाट्यभाषायां मनोभावरूपार्थस्यातितैक्ष्ण्याय वीप्सया निपाताः प्रयुज्यन्ते । तत्र साभ्यासप्रयुज्यमानेषु शब्देषु प्रयोक्तुर्वैरीवर्ति कश्चिदभिलषितो मनोरागः । मनोरागोऽयं साम्रेडितपदेष्वनुविद्ध इव कञ्चित् कालमनुधावति । कुवित्[5] पर्युषिते च काले ततो मनोरागः शिथिलतामेति । तदन्वेतादृशा वीप्साप्रयोगा नीरसा इव भान्ति । केवलं तेषां ध्वनिग्राम एव वाक्येष्वापतति । अत एवार्थविप्रयोगमथ चार्थ-

---

१. उत्तररामचरितम्–३।३८ ।
२. मृच्छकटिकम्–८।३८ ।
३. वेणीसंहारनाटकम्–३।१५ ।
४. काव्यानुशासनम्—२, पृ० ६६ ।
५. 'कुवित्' इति निपातो 'बहु'शब्दार्थे व्यवह्रितो वैदिकभाषायाम् ।

रिक्ततामपि तेष्वारोप्यन्ते। अस्मादेव संस्कृतभाषायां मनोरागाभिनिवेशानुविद्धाः साभ्यासनिपातप्रयोगाः क्वचिद् द्योतकाः, क्वचित् पूरणार्थकाः, क्वचिच्चानर्थका व्यपदिश्यन्ते। निपातोपसर्गद्योतकतावादस्येदमेव बीजम्। एवं प्रारम्भे सार्थकाः, तदनु मनोरागव्यञ्जकाः, तदनु च निरर्थकाः पदपूरणाश्च सञ्जाता इत्याधुनिकमनोविश्लेषण-शास्त्रिणो[1] भाषाविश्लेषणशास्त्रिणश्च समामनन्ति।

मनोरागरूपरूपितानां समानध्वनिमतां निपातानां साभ्यासप्रयोगा अपि निपात-संख्याऽनैयत्ये हेतुत्वेनावधारणीयाः। यतो हि साभ्यासप्रयोगैरपि नूतनध्वनिमन्तो नूतनार्थाश्च निपाताः प्रादुर्भवन्ति। एकैकस्य निपातस्य वीप्साप्रयोग ऐतिहासिक-कालानुधावने, दैशिकप्रभावाङ्गीकारे च निपातान्तरस्योदये निमित्तभूता इति संस्कृत-भाषाया अविच्छिन्नकालिकप्रवाहस्य प्रसारस्य चान्वेषणेन च निर्द्धारितुं शक्यते। न ह्येतादृशो लम्बायमानभाषैतिहासो दृश्यते समस्ते वसुधातले कासाञ्चिदपि भाषाणाम्। यस्याः कस्या अपि भाषाया ऐतिहासिकायामो यावान् दीर्घतरो भवति, तस्यां पदानां तेषामर्थानां व्याकरणस्य नियमानाञ्चानैयत्ये वैविध्ये च भूयान् अवसरो भवति। मन्ये यत् संस्कृतभाषाया निपातानां संख्याऽनैयत्येऽर्थात्मनोऽनवबोधे च भाषाप्रसारस्यै-तिहासिकोऽनवबोध एव हेतुः। अत एव महाभारतव्याख्यातुर्देवबोधाचार्यस्य सङ्केतो मानास्पदतामेति यत्—'यानि शब्दरत्नानि माहेन्द्राद् व्याकरणार्णवाद् व्यास उज्जहार, तानि रत्नानि किं गोष्पदायमाने महर्षिपाणिनिव्याकरणे सन्ति ? तथा च—

**न दृष्ट इति वैयासे शब्दे मा संशयं कृथाः।**
**अज्ञैरज्ञातमित्येव पदं न हि न विद्यते॥**
**यान्युज्जहार माहेन्द्राद् व्यासो व्याकरणार्णवात्।**
**शब्दरत्नानि किं तानि सन्ति पाणिनिगोष्पदे[2]॥**

भवतु नामात्र साभ्यासप्रयोगैरुदिता केचन नूत्ना नूत्नार्थकाश्च निपाताः प्रस्तोष्यन्ते। तथा हि—

(क) कथम् = हेतौ, जिज्ञासायाम्, प्रश्ने च—कथम् + कथम् > कथंकथा[3] = ससम्भ्रमे।

(ख) न (नञ् = निषेधार्थे—न + न > नन[4] = सम्भावनायाम्।

---

१. जो० वान्द्रियैज—भाषा, पृ० १८३-८४।

२. महाभारतम्—शान्तिप० ११८।२३।

३. तदेव—उद्योगप० १९७–५, नीलकण्ठव्याख्या।

४. ऋ० सं० ६।४४।३, स्कन्दभाष्यम्, अभिज्ञानशाकुन्तलम्—१, पृ० ७३, वामनाचार्यस्योक्तिः।

(ग) नु[१] = क्षिप्रार्थे—नु + नु > नूनु > ननु = निश्चये, वितर्के वा ।

(घ) वा[२] = विकल्पे—वा + वा > वाव = प्रसिद्धौ > वव = रक्तनिःसरणध्वन्यर्थे > व्व > व = इवार्थे ।

(ङ) मस्[३] = आह्वाने—मस् + मस् > मस्मसा = भक्षणकालकृतध्वन्यर्थे ।

(च) हा[४] = प्रसिद्धौ, विलापे च—हा + हा > हाहा = स्फुटविलापे > ह् हा > ह् ह् = खेदे ।

(छ) हि[५] = निश्चये, प्रसिद्धौ च—हि + हि > ही ही = आश्चर्ये, आह्वाने च ।

इत्थं[६] दृश्यते हि देववाण्यां समध्वनिमतां निपातानामभ्यासेनाभिनवस्य निपातस्य जन्म । आधुनिकभाषाशास्त्रचिन्तकेन मैक्समूलरमहानुभावेनापि[७] सिद्धान्तितं यत्—'भाषायामजस्रव्यवहारेण कस्यचिदपि धातोर्नाम्नोर्निपातस्य चार्थस्तिरोहितः सम्मूर्च्छित इव वा घटते, तदा प्रौढतमविचाराणां तार्किकाभिव्यक्तौ जनाः सम्मूर्च्छितार्थकान् शब्दान् अर्थाभिव्यक्तावपर्याप्तान् मन्यन्ते । अतो भूयोऽन्तर्हितानामर्थानां जीवातवे, उत्तम्भने वा तेषु शब्देषु मौक्तिकमयानि शब्दान्तराणि संयोज्यन्ते, उत वा त एवाभ्यस्य प्रयुज्यन्ते, आहोस्विल्लोपागमवर्णविकारैस्त एव ध्वनयोऽन्यथा प्रयुज्यन्ते । अनेनैव विधिनैतिहासिकप्रवाहे विपर्यस्तेषु शब्देषु सामर्थ्यमपोह्यते । ऋते ध्वन्यन्यथाकरणं कालान्तरे सम्मूर्च्छितार्थानां शब्दानामुत्तम्भनमसम्भवप्रायमेव' । वान्द्रियैजमहोदयस्याप्ययमेवाशयः ।

### वैदिक-शास्त्रीयभाषयोर्निपातकृतभेदनिरूपणम्

एवं मनोरागरूपरूषितानां निपातानां विमर्शनानन्तरमत्रैतदपि विचारणीयमस्ति यद् यावन्त उपलभ्यमाना निपाताः सन्ति संस्कृतभाषायाम्, किं तेऽजस्ररूपेण वैदिक-वैदिकोत्तरसंस्कृतभाषामलङ्कुर्वन्ति ? आहोस्वित् केचनैतादृशा अपि सन्ति येषां प्रयोगा वैदिकभाषायामेव स्थगिताः ? किं वैदिकभाषाया निपातप्रवाहो वैदिकोत्तरसंस्कृतभाषायामेव प्रवहति, उदस्वित्तस्य स्रोतोवहता अन्यास्वपि प्राकृत-पालि-अपभ्रंशादिभाषासूपलब्धुं शक्यते ?

---

१. ऋ० सं० १।१७।८, ६।४८।१६, स्कन्दभाष्यम्, प्रदीपः–५।२।३९, क्रियारत्नसमुच्चयः–५।२।१७ ।

२. छान्दोग्योपनिषद्–७।१२।१, शाङ्करभा०, महाभारतम्–उद्योगप० २७।२१, श्रीमद्भागवतम्–५।१।६, दुर्गासप्तश० ८।४५, देशीनाममालापरिशिष्टम्–३ ।

३. शतपथब्रा० ६।६।३।१० ।

४. नृगमोक्षप्रबन्धः–२ ।

५. मृच्छकटिकम्–१, पृ० ४७, शुक्लयजुर्वेदः–११।५० ।

६. दि लेक्चर्स आन साइंस आफ लैंग्वेज–पृ० २८२–८३ ।

७. भाषा–पृ० २३८–३९ ।

प्रसङ्गेऽस्मिन् बरोमहोदयो[1] विवृणोति यत्—वैदिक-वैदिकोत्तरसंस्कृतभाषयोर्भेदे पार्थक्ये च निपातप्रयोगा एव हेतुत्त्वेनाङ्गीकरणीया इति। वैदिकभाषायां शब्दानां तेषामर्थानां च सङ्कोच-विकासे यथा निपातकृतयोगा उपलभ्यन्ते, न तथाऽर्वाक्काले। वस्तुतस्तु विविधार्थच्छटोपेतानां निपातानां दृशा वैदिकोत्तरसंस्कृतभाषाऽनुर्वरा दरिद्रा च दृश्यते।' बरोमहोदयस्य प्रतिपादनं समीचीनतरं प्रतिभाति, यतो हि यदा भाषायां कृत्रिमसमस्तपदानि निर्मीयन्ते, अथ च छन्दस्सु स्वरवर्णगणनया पदानि सन्निवेश्यन्ते। एवं च शब्दार्थसंश्लेषेण समुदिता भाषासन्तोलनसौन्दर्यविधायकाः केचन वर्गा न परामृश्यन्ते, तदा सूक्ष्मार्थसंवाहका भाषाप्राणसदृशा निपातोपसर्गा भाषाशरीर उपेक्ष्यन्ते। यथा मानवजीवनं यान्त्रिकसभ्यतायाः प्रभावेणातिप्रभावितं सदेकरसतां नीरसतां च प्राप्नोति, तथा भाषाऽपि कृत्रिमलम्बायमानसमस्तपदानां वाहिकाऽथ च पिङ्गलशास्त्रनियमानुरोधिनी सती कृत्रिमतां दुरूहताञ्च गच्छति। प्रमाणितो भवत्ययं सिद्धान्तो निरुक्त[2]-ऋक्प्रातिशाख्याभ्याम्—**'नेयन्त इत्यस्ति सङ्ख्येह वाङ्मये मिताक्षरे चाप्यमिताक्षरे च ये[3]'** इति।

प्रातिशाख्यस्यास्य भाष्यकार उव्वटाचार्यः प्रोवाच यत्—'ते = निपातोपसर्गाः, मिताक्षरे = पद्ये, अमिताक्षरे = गद्ये च सङ्ख्यातुमशक्याः' इति। इदं प्रातिशाख्यं तद्भाष्यवचनं च सङ्केतयति यद् अमिताक्षरे = गद्ये निपातोपसर्गा आप्नुवन्ति किञ्चित् प्रयोगस्वातन्त्र्यम्। तथ्यमिदमाधुनिकभाषाशास्त्रविद्भिः—मैकडानल[4]-बरो[5]-वान्द्रियैज[6]-ब्लाख[7]-प्रभृतिभिरपि संवाद्यते। इमे सर्वे मन्यन्ते यत् समस्तपदानां वाहिकासु, अथ च छन्दोमयीषु भाषासूपसर्गनिपातादयश्छन्दःपरिपूर्तिकरत्वेन, पदपूरकत्वेन च प्रयुज्यन्ते। अतो निष्कर्षरूपेणेदं निष्कृष्यते यत् कामं वैदिकोत्तरसंस्कृतभाषा निपातप्रयोगाणां दृष्ट्या वैदिकभाषापेक्षया सङ्कीर्णेनाथ चास्वाभाविकेन पथाऽनुधावति।

**वैदिक-शास्त्रीयभाषयोः सन्धिकालः**

अत्र पुनः केचनैतादृशा निपाता अवस्तादुपन्यस्यन्ते, येषां व्यवहारा वैदिकभाषामात्रव्यवहारविषयाः सञ्जाताः। पूर्वं तावदत्रेदमपि विचारणीयमस्ति यद् वैदिकभाषायाश्चरमः कालोऽथ लौकिकभाषाया आद्यः कालः कः? संस्कृतभाषोत्कर्षदृष्ट्या, भाषाशास्त्रदृष्ट्या, साहित्यदृष्ट्या, विज्ञानदृष्ट्या च महामुनिपाणिनेः प्रतिभाकालो भारतीयसाहित्ये यादृश उत्कर्षभूत आसीत्, न तादृशो भाषिकः, साहित्यिको वैज्ञानिकश्च प्रतिभाकालः कदाचिदपि भारतीयवाङ्मयेतिहासे प्रादुरभूत्। शब्दशास्त्रविषये भाषा-

---

१. संस्कृत लैंग्वेज—पृ० ४७।
२. निरुक्तम्—१।९।
३. ऋक्प्रातिशाख्यम्—१२।९।
४. वैदिक ग्रामर—पृ० १, ३२२।
५. संस्कृत लैंग्वेज—पृ० २८३।
६. भाषा—पृ० २०१।
७. भारतीय आर्यभाषा—पृ० २४०।

शास्त्रविषये च यादृश्या प्रतिभया यादृशं विज्ञानराशिमयं मुनिः प्रस्तौति, नोपलभ्यते तादृशी विमर्शप्रधाना प्रतिभा विश्वसाहित्ये।

आधुनिकभाषाशास्त्रगवेषको बरोमहोदयो[१] महामुनिपाणिनेः कालं ख्रीष्टाब्दात्पूर्वं पञ्चमशताब्द्यां प्रतिष्ठापयति। अन्यैराधुनिकानुसन्धातृभिरपि तत् समर्थितम्। पाणिनि-समये संस्कृतभाषायां ते सर्वेऽपि गुणा आसन्, ये जीवन्तीषु भाषास्वपेक्ष्यन्ते। शब्द-शास्त्रीयाऽपि परम्परा पाणिनेः पूर्वं प्रौढतमा विशालतमा चासीत्। मुनिनाऽष्टाध्याय्यां भूयांसः शब्दशास्त्रपारङ्गताः शाब्दिका नामोल्लेखपुरस्सरं सादरं स्मृताः। तद्यथा—'वा सुप्यापिशलेः[२]', 'तृषिमृषिकृषेः काश्यपस्य[३]', 'ओतो गार्ग्यस्य[४]', 'इको ह्रस्वोऽङ्यो गालवस्य[५]', 'ई चाक्रवर्मणस्य', 'ऋतो भारद्वाजस्य[६]', 'लङः शाकटायनस्यैव[७]', 'सर्वत्र शाकल्यस्य[८]', 'गिरेश्च सेनकस्य[९]', 'अवङ् स्फोटायनस्य[१०]' इत्यादि। अष्टाध्याय्याः पर्यालोचनेनापि निष्क्रष्टुं शक्यते यद् विना विशालवैय्याकरणपरम्परया एतादृशस्य प्रौढतमस्य विज्ञानसम्मतस्य च ग्रन्थरत्नस्य रचनायां कोऽपि शेमुषीधुरीण-स्तथा साफल्यमधिगन्तुं न शक्नोति, यथाऽयं लब्धवान्। वस्तुतोऽष्टाध्यायीसदृशस्य ग्रन्थरत्नस्य प्रणयनं निरन्तरमनेकसहस्राब्दीपर्यन्तं विकसन्त्याः प्रवहन्त्याश्च भाषायाः परिणतिर्गण्यते।

वैदिकव्याकरणभूतानां तत्तत्प्रातिशाख्यानां कालनिर्णयेऽधुनाप्याधुनिकगवेषका विवदन्ते। भाषादृष्ट्या च प्रातिशाख्यानां कालः पाणिनेः पश्चादायाति, किन्तु विषय-दृष्ट्या भाषाविश्लेषणदृष्ट्या च ते तद्वदेव प्राचीना भवितुमर्हन्ति, यद्वद् वैदिकसंहिताः। विश्लेषणेनैतेन निष्क्रष्टुं शक्यते यत् पाणिनेः पूर्वं लौकिकसंस्कृतभाषाया व्याकरणा-तिरिक्तस्य वैदिकव्याकरणस्यापि वैज्ञानिकः प्रवाहश्चासीत्, येनाष्टाध्याय्याः प्रणयने पाणिनिः साफल्यमलभत। वस्तुतो लौकिकसंस्कृतभाषाव्याकरणस्यान्तिमः सम्पादकः पाणिनिरासीत्। समर्थ्यत इदं तथ्यं बरोमहोदयेन[११]। अत एवाष्टाध्याय्यां तत्तत्प्रसङ्गेषु पाणिनिः—'बहुलं[१२] छन्दसि', 'छन्दस्युभयथा[१३]', 'छन्दसि[१४] परेऽपि', 'लुङ्लङ्लृङ्क्ष्व-डुदात्तः[१५]', न माङ्योगे[१६]', 'लोपः[१७] शाकल्यस्य', 'अङ् गार्ग्यगालवयोः[१८]'—इत्यादि-सूत्राणां प्रणयने वैवश्यमन्वभूत्।

---

१. दि संस्कृत लैंग्वेज—पृ० ४८। २. अष्टाध्यायी—६।१।९२। ३. तदेव—१।२।२५। ४. तदेव—८।३।२०। ५. तदेव—६।३।६१। ६. तदेव—६।१।१३०। ७. अष्टाध्यायी—३।४।१११। ८. तदेव—८।४।५१। ९. तदेव—५।४।११। १०. तदेव—६।१।१२३। ११. संस्कृत लैंग्वेज–पृ० ४९। १२. अष्टाध्यायी—२।४।३९, २।४।७३, २।४।७६, ३।२।८८। १३. तदेव—३।४।११७। १४. तदेव—१।४।८१। १५. तदेव—६।४।७१। १६. तदेव—६।४।७४। १७. तदेव—८।३।१९। १८. तदेव—७।३।९९।

वस्तुतो भाषाया याऽविच्छिन्नपरम्परा तदानीमासीत्, तां परम्परां सर्वथाऽपाकर्तुमवरोद्धुं वा नायं मुनिः क्षम आसीत्। अस्मादेव पदे पदे दर्भपवित्रपाणिना पाणिनिना स्वपूर्ववर्तिनः शाब्दिका आदरातिशयेन स्मृताः। एवं खीष्टशताब्दीतः पूर्वं पञ्चमशताब्द्यां वर्तमानस्यास्यर्षेः, ततोऽपि प्रागाचार्ययास्कस्य समय आसीदित्याधुनिकगवेषका मन्यन्ते। बरोमहोदयो[1] ब्रवीति यन्नातिप्राचीनः पाणिनेरासीत् समयो यास्कस्य, तथापि नैतौ द्वौ समानकालिकौ। एकस्यावसानकालोऽपरस्याविर्भावकालत्वेन मन्यन्त आधुनिकविद्वद्भिः।

यास्कीयनिरुक्ते प्रतिपादिता निर्वचनप्रणाल्यथ च शब्दशास्त्रीयाः सिद्धान्ता उपादानरूपेण गृहीता महामुनिपाणिनिना। इत्थं संस्कृतभाषाया अविच्छिन्नप्रवाहे शब्दशास्त्रीया विज्ञानसम्मता च या प्रोज्ज्वलतमा परम्परा दृश्यते, तस्याः प्रतिष्ठापकत्वेन महामुनिर्यास्कपाणिनी गण्येते। अयमेवासीत् स कालः, यस्मिन् भाषाया ऐतिहासिकप्रवाहेऽविच्छिन्नरूपेण स्वातन्त्र्यं भजमानानां निपातोपसर्गाणां स्वातन्त्र्यमपहृतं पाणिनिना। अस्यामेव भाषायाः सन्धिवेलायां वैदिकभाषाया आर्णविकः प्रवाहो लौकिकसंस्कृतनदीरूपेण विवर्तितः सङ्कुचितश्च।

महाकविकालिदासेन लिखितं यत्—**'लिपेर्यथावद् ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत्'** इति, तद्विपरीतमत्र घटितम्। वैदिकीभाषायाः प्रवाहः समुद्रमुखेन नदीमाविशदिति काकुः। दृश्यते च प्रायेण यदा कश्चिद् विस्तृतः परिसरः सङ्कुचितो भवति, तदा तस्मिन् कानिचित् तत्त्वान्यामृश्यन्ते, कानिचिच्च हीयन्ते। अनयैव हानोपादानपरिपाट्याऽतिप्रभाविताः सन्तो दृश्यन्ते निपातोपसर्गाः।

भवतु नामात्र केचन वैदिकभाषायामेव हापिता निपाताः प्रस्तूयन्ते, येषां प्रयोगाः प्रायेण पाणिनितन्त्रनियन्त्रितायां संस्कृतभाषायामसुलभाः सञ्जाताः। अत्रैकैकस्यैकैकमुदाहरणं प्रस्तूयते। संख्यया निर्दिष्टाः सन्दर्भास्तु टिप्पणीभागे बहुश उदाहृताः—

(१) अद्धा[2] = सत्यार्थे, प्रत्यक्षार्थे च।

(क) 'को अद्धा वेद क इह प्रवोचत्.......'।

(२) अन[3] = अनेकवचनार्थे।

(क) 'अनवर्णे इमे भूमी'।

(३) अपु[4] = पवित्रीकरणार्थे।

(क) 'एवास्यापुवायते यन्मीयते....।'

---

१. संस्कृत लैंग्वेज–पृ० ४८। २. ऋ० सं० ३।४५।५, शतपथब्रा० ३।१।४।११।

३. तैत्तिरीयारण्यकम्–१।८।२८।

४. तै० सं० ६।२।२–भट्टभास्करभाष्यम्।

(४) अमा[१] = साहित्यार्थे = सहार्थे ।

(क) 'अमेव नः सुहवा आ हि गन्तन ।'

(५) अरम्[२] > अलम् = भूषणार्थे, पर्याप्त्यर्थे, अतिशयार्थे, शीघ्रार्थे च ।

(क) 'वायवा याहि दर्शतेमे सोमा अरंकृताः ।'

(६) आनुषक्[३] = आनुपूर्व्यर्थे ।

(क) 'स वेद यज्ञमानुषक्.....।'

(७) आयुषक्[४] = अनुषक्तार्थे ।

(क) 'अरुषो जनयन् गिरः सोमः पवत आयुषक् ।'

(८) आवत्[५] = तादृशार्थे ।

(क) 'आवदिति निपातः तादृशार्थे ।'

(९) आवह्[६] = प्रापणार्थे ।

(क) 'केचित्तु आवहशब्दोऽपि निपात इत्याहुः ।'

(१०) इत्था[७] = इत्थमित्यर्थे ।

(क) इत्था इत्येष निपातः अमुत्थेत्यनेन व्याख्यातः ।'

(११) ईम्[८] = स्तुत्यर्थे ।

(क) ईंकाराय स्वाहेङ्कृताय स्वाहेत्याह ।'

(१२) उव[९] = स्त्रीणामभिमुखीकरणार्थे ।

(क) 'उवे अम्ब सुलाभिके यथेवाङ्ग भविष्यति' ।

(१३) कत्[१०] = किमर्थे ।

(क) 'कदून्वस्याकृतमिन्द्रस्यास्ति पौंस्यम्' ।

(१४) कीज[११] = अद्भुतार्थे ।

(क) 'यः शक्रो अश्यो मृक्षो यो वा कीजो हिरण्ययः' ।

---

१. ऋ० सं० २।३६।३, ५।४५।३–सायणभाष्यम् ।
२. ऋ० सं०–१।२१, २।६।८, ५।६६।५, ६।६३।२, ८।५।१७, १०।९।३ ।
३. ऋ० सं०–३।११।१, १।७२।७, ८।१२।११, १०।८३।१ ।
४. ऋ० सं०–९।२४।५ । ५. कैयटकृते प्रदीपे–६।१।९४ ।
६. न्यासः–८।२।९१ । ७. निरुक्तम्–५।६।५ ।
८. ऋ० सं०–१।१०४।२; तै० ब्रा०–३।८।१ ।
९. ऋ० सं० १०।८६।७ । १०. ऋ० सं० ८।६६।९ ।
११. ऋ० सं० ८।६६।३ ।

(१५) कुवित्[1] = बहुशब्दार्थे ।

(क) 'अनामृणः कुविदादस्य रायो गवां केतं·····' ।

(१६) कुह[2] = कुत्रशब्दार्थे क्वशब्दार्थे वा ।

(क) 'अभीय ऋक्षा कुहचिद् दिवेयुः' ।

(१७) चिश्चा[3] = हासार्थे ।

(क) 'बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य' ।

(१८) ज्योक्[4] = दीर्घकालार्थे ।

(क) 'ज्योक् च सूर्यं दृशे' ।

(१९) ताजक्[5] = तदानीं शब्दार्थे ।

(क) 'श्रोत्राभ्यामात्मनोऽङ्केभ्य आयुषोऽन्तरेति ताजक् प्रधावति' ।

(२०) दोषावस्तः[6] = दीप्त्यर्थे ।

(क) 'इह त्वा भूर्याचरेदुपत्मन् दोषावस्तर्दीदिवांसमनुद्यूना' ।

(२०) नुकम्[7] = अवधारणार्थे, क्षिप्रार्थे च ।

(क) 'विष्णोर्नुकं वीर्याणि प्रवोचं····विष्णवे त्वा' ।

(२२) फट्[8] = क्रौर्यार्थे ।

(क) 'प्रदरे वा फडिति वषट् करोति' ।

(२३) बट्[9] = सत्यार्थे ।

(क) 'बडित्था तद्वपुषे धायिदर्शनम्' ।

(२४) वस्ति[10] = क्षिप्रार्थे ।

(क) 'उभा ता वस्ति नश्यतः' ।

(२५) बे[11] = उभयार्थे = द्विशब्दार्थे ।

(क) 'इन्द्रो विश्वान् बेकनाटान् अहर्दृश उत क्रत्वा·····' ।

---

१. ऋ० सं० १।१३।१, २।६।५, ६।४५।२४, ७।९१।१, ८।२६।१०; श० ब्रा० ५।५।४।२४ ।

२. ऋ० सं०—१।२४।१०, ५।७४।२, ८।२४।३० ।

३. ऋ० सं०—६।७५।५ स्कन्दभाष्यम् । ४. वाररुचनिरुक्तसमुच्चयः—२।२० ।

५. तै० सं०—३।२।३—भट्टभास्करभाष्यम् । ६. तदेव—१।२।१४ ।

७. शुक्लयजुर्वेदः—५।१८; तै० सं०—१।२।१३ ।

८. सत्याषाढश्रौतसूत्रम्—१०।७।२२ ।

९. ऋ० सं०—१।१४१।१ । १०. ऋ० सं०—१।२०।१२ ।

११. ऋ० सं०—८।६६।१०; तै० सं०—३।:।७; निरुक्तम्—६।५।४ ।

(२६) मनाक्[1] > मनानक् = अल्पार्थे ।

(क) 'मनानग्रेतो जहतुर्वियन्ता सानौ निषिक्तम्' ।

(२७) ममत्[2] = बलवदित्यर्थे ।

(क) 'यदा विराटः परवीरघाती ममत्तरे शत्रुचमूं प्रवेष्टा' ।

(२८) मस्मसा[3] = भक्षणक्रियाजनितशब्दार्थे ।

(क) 'सर्वं च मस्मसा कुर्विति' ।

(२९) माकिः[4] = मा काचिदर्थे ।

(क) 'माकिर्नेशन्माकीं ....गहि' ।

(३०) वषट्[5] = स्वाहाकारार्थे ।

(क) '....पत्नीवन्तो वषट्कृताः' ।

(३१) वाट्[6] = परोक्षार्थे ।

(क) 'यजत वाडिति तद्यथा वषट्कृतम्' ।

(३२) वाव[7] = प्रसिद्ध्यर्थे ।

(क) 'यर्हि वाव ह राजन् स राजपुत्रः प्रियव्रतः' ।

(३३) वृथक्[8] > वृथा = पृथगर्थे ।

(क) '........यतन्ते वृथगग्नयः' ।

(३४) वेट्[9] = स्वाहाकारार्थे वषट्कारार्थे च ।

(क) 'वेट् स्वाहेति वषट्कारो हैष परोक्षं यद्वेट्कारो' ।

(३५) वौझक्[10] = वाङ्निमित्तकस्वाहाकारार्थे ।

(क) 'अग्न आज्यस्य व्यन्तु व्वौझगग्निज्यस्य व्वेतु' ।

(३६) वौषट्[11] = वषट्कारार्थे ।

(क) 'वौषडिति वषट् करोति' ।

(३७) शीभम्[12] = क्षिप्रार्थे ।

(क) 'प्रयात शीभमाशुभिः....मादयध्वे' ।

---

१. ऋ० सं०–१०।६१।६ । २. महाभारतम्–उद्योगप० ४८।३७ ।
३. शतपथब्रा०–६।३।१० । ४. ऋ० सं०–६।५४।७, ८।७१।८ ।
५. ऋ० सं०–८।२८।२, शतपथब्रा०–१।५।२।२६; सत्याषाढश्रौतसू०–२१।२।२३ ।
६. शतपथब्रा०–१४।२।१।२० । ७. श्रीमद्भागवतम्–५।१।६–श्रीधरभाष्यम् ।
८. ऋ० सं०–८।३४।४–५ । ९. शतपथब्रा० ९।३।३।१४ । १०. शतपथब्रा०–२।२।३।१९ ।
११. शतपथब्रा०–१०।४।१।३ । १२. ऋ० सं०–१।३७।१४–स्कन्दभाष्यम् ।

(३८) श्रौषट्[1] = अनुमत्यर्थे ।

(क) 'अस्तु श्रौषडित्याग्नीध्रः प्रत्याश्रावयति' ।

(३९) सदम्[2] = सदाशब्दार्थे ।

(क) 'मा वस्य यक्षं सदमिद्धुरो' ।

(४०) सनुतर्[3] = अन्तर्हितार्थे ।

(क) 'यूयं द्वेषांसि सनुतर्युयोत' ।

(४१) सा[4] = प्रसिद्ध्यर्थे ।

(क) 'सो चिन्नु मराति न वयं मरामरे' ।

(४२) सामि[5] = अर्धशब्दार्थे, संस्कारार्थे, मध्यशब्दार्थे च ।

(क) 'उत यो मानुषेष्वा यशश्चक्रे असाम्याः' ।

(४३) सीम्[6] > सिम् = सर्वतोभावेनेत्यर्थे ।

(क) 'यत्सीमागश्चकृमा तत्सुमृल.....' ।

(४४) सुकम्[7] = सुखशब्दार्थे ।

(क) 'तिष्ठा सुकं मघवन्मापरागाः' ।

(४५) सुमत्[8] = स्वयमित्यर्थे ।

(क) 'अचेत्यग्निश्चिकितुर्हव्यवाट् स सुमद्रथः' ।

(४६) स्मत्[9] = शोभनार्थे, सहार्थे, प्राशस्त्ये, कल्याणार्थे च ।

(क) 'अस्मिन्निन्द्र वृजने सर्ववीराः स्मत्सूरिभिः' ।

(४७) ह[10] = चार्थे, वार्थे, एवार्थे, पुराशब्दार्थे, खेदे, आवृत्त्यर्थे, ऐतिह्यार्थे, आश्चर्ये, स्फुटार्थे च ।

(क) 'को ह कस्मिन्नसि श्रितः' ।

---

१. सत्याषाढश्रौतसूत्रम्–२।१, महादेवकृतवैजयन्तीव्याख्या ।

२. ऋ० सं०–१।३६।२०, १।११६।६, ४।४।१३; शत० ब्रा० ३।४।२।२५ ।

३. ऋ० सं०–२।२९।२, १०।७७।६–स्कन्द–सायणभाष्यम् ।

४. ऋ० सं०–१।१९१।११–सायणभाष्यम् ।

५. ऋ० सं०–१।२५।१५, १।३९।९; श० ब्रा० १।३।१।२०, २।३।३।४; कुमारसम्भवम्–८।६४ ।

६. ऋ० सं० १।३६।१, १।९५।७, १।११६।२०, ३।३८।३, ६।२०।८, ७।९४।७, १०।२५।९ ।

७. ऋ० सं० ३।५३।२ । ८. ऋ० सं० ८।५७।२७; शुक्लयजुर्वेदः–२५।३० ।

९. ऋ० सं० १।५१।१४, १।१८६।६, ७।३।७, ८।२८।२ ।

१०. ऋ० सं० १।६३।१, १।७५।३, ६।४८।२५, ६।६४।५; शुक्लयजु० २७।२५; श० ब्रा०–१।१।४।१४, १४।२।१।१; गीता–२।९; भागवतम्–११।२०।५ ।

(४८) हये[1] = आभिमुख्यार्थे, हेयशब्दार्थे, हेशब्दार्थे च ।

(क) 'हये देवा यूयमिदापयः स्थ.....' ।

(४९) हवा[2] = प्रसिद्ध्यर्थे ।

(क) 'रक्षांसि हवा पुरोऽनुवाके तपोग्रमतिष्ठन्त' ।

(५०) हावु[3] = अहोशब्दार्थे ।

(क) 'एतत्साम गायन्नास्ते हावु हावु हावु' ।

(५१) हिकम्[4] = हिशब्दार्थे, जिज्ञासायाम्, प्रसिद्ध्यर्थे च ।

(क) 'ग्रावाणः सोम नो हिकम्.....' ।

(५२) हुरुक्[5] = कुटिलार्थे ।

(क) 'महां अदब्धो वरुणो हुरुग्यते' ।

पुरस्ताद् विमर्शिता निपाता वैदिकभाषायाः प्राणभूता दृश्यन्ते । प्रायेणैतेषां प्रयोगा मिताक्षरमयेष्वथ चामिताक्षरमयेषु वैदिकग्रन्थेष्वविशेषेणामृश्यन्ते । न ह्येतेषां प्रयोगे तत्र कश्चिदाग्रहो दुराग्रहो वाऽवलोक्यते । यथा तत्र नामशब्दा आख्यातशब्दाश्च प्रयोक्तृभिः स्वाभाविकतया व्यवहृताः, तथैव निपातशब्दा उपसर्गशब्दा अपि । न हि तत्र निपातोपसर्गाणां प्रयोगे कश्चित् सङ्कुचितः पन्था निभाल्यते ।

श्रुतिवाङ्मये प्रयुक्तानां निपातोपसर्गाणां तत्तत्सांदर्भिकेण तत्त्वार्थपार्यवसानिकेन गवेषणेनैकमपरमपि तथ्यं समुद्घाटितं भवति यद् वैदिकीभाषा कामं तदानीं लोकभाषाऽऽसीदिति । न हि लोकभाषां विना निपातोपसर्गाणां व्यवहाराः सावकाशा भवन्ति, यस्यां कस्यामपि शास्त्रीयसंयमसंयमितायां भाषायाम् । लोकभाषायामेते सुलभप्रयोगा भवन्तीति । या काऽपि भाषा यदा लोकैरनुप्राणिताऽजस्रमभ्यस्ता च भवति, तदाऽहैतुकास्तस्या वाक्येषु निपातानां निपाता भवन्ति । अत एव प्राकृत-पालि-अपभ्रंशादिभाषासु दृश्यन्ते हि निपातानामक्षपणाः प्रयोगाः । वस्तुतो मानवजीवनस्यान्तःसंश्लेषाधाने सामीप्यापादने च निपाता महोपकारका भवन्ति ।

यदा कस्यचिदप्यखण्डस्य भूवलयस्य समस्ताभिर्जातिभिरेकस्या एव भाषायाः स्वीया हास्य-विनोद-शोक-प्रलाप-आह्वान-उपाख्यान-कृषि-व्यवसाय-दर्शन-विज्ञान-गणित-प्रभृतिविषयाणां वाहकाः शब्दा आह्रियन्ते, तदा नूनमेव भाषायाश्चित्रा लोकमानसरूपरूषिताश्च प्रयोगा अनायासेन समापतन्ति । इमान्येव कारणान्यासन्

---

१. ऋ० सं० २।२९।४, ५।५७।८; श० ब्रा० ११।५।१।६ । २. तै० आ०–२।२ ।
३. तैत्तिरीयोपनिषद्–३।१०।५ । ४. ऋ० सं०–६।५१।१४, १०।५०।५; अथर्ववेद–३।१३।३ ।
५. ऋ० सं०–९।७७।५–सायण-स्कन्दभाष्यम् ।

वैदिकभाषायां चित्रात्मकानां निपातानां विनियोगे। भाषया यदा लोकमानसं न्यक्क्रियतेऽथ च विद्वत्समुदाय एवामृश्यते तदा कामं सा शिल्पप्रधानतामेति। अस्यां च दशायां सा समस्तपदानां संवाहिका भवति। अत एव महाकविना श्रीहर्षेणोक्तं यत्—'अन्योन्यसंश्लेषिणी लोकभाषा यदा प्रवुद्धैः प्रयोक्तृभिरनामृश्यते, तदा शिल्पप्रधाना कृत्रिमा वा भाषा व्यवहारपथमवतरति' इति।

**अन्योन्यभाषानवबोधभीतेः संस्कृतिमाभिर्व्यवहारवत्सु।**
**दिग्भ्यः समेतेषु नृपेषु वाग्भिः सौवर्गवर्गो न जनैरचिह्नि[1]॥**

एवम् उपसर्ग-विभक्ति-स्वर-प्रत्ययप्रतिरूपकाणामथ च सान्धिक-मनोरागरूषित-प्रतिष्टम्भप्रयोगविधानां निपातानामैतिहासिके भाषाशास्त्रीयतोलनात्मके च विमर्शने सम्पन्ने सति, निपाता व्ययवन्त उताहो अव्ययवन्त इति प्रश्नः[2] स्वयमेव समुदेति, अर्थात् किं निपाताः प्रत्ययभाजो भवन्ति, विभक्तिभाजो भवन्ति, वचनभाजो भवन्ति, लिङ्गभाजो भवन्तीति? गोपथब्राह्मणीयोऽयं श्लोको महामुनिपतञ्जलेरर्वाक्संस्कृत-वाङ्मय आधुनिकासु च भाषासु सादरं लब्धप्रसरो दृश्यते—

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्[3]॥**

अत्राव्ययशब्द औपलाक्षणिकः। वस्तुतस्तु निपाता उपसर्गा अव्ययाश्च तेनामृश्यन्ते।

पाणिनेरथ च तदर्वाक्कालिकानां शाब्दिकानां गणपाठे स्वरादि-चादि-प्रादीनां यो विभागो दृश्यते, न हि तत्र काचिच्छब्दशास्त्रीया, ऐतिहासिकी, तोलनात्मिका चात्मदृष्टिरवलोक्यते। पाणिनीया यान् निपातान् चादिगणे पठन्ति, व्याख्यातुकामा-स्तेऽन्यत्र स्वरादिशब्देन निरूपयन्ति। यान् स्वरादिगणे पठन्ति, तान् कुत्रचिन्निपात-संज्ञयोपसर्गसंज्ञया वा व्याकुर्वन्ति। एवमेव सारस्वतव्याकरण[5]-गणरत्नमहोदधि[6]-सरस्वतीकण्ठाभरण[7]-प्रक्रियासर्वस्व[8]-प्रक्रियाकौमुदी[9]-सिद्धशब्दानुशासनकाराश्चान्यथा[10] पठित्वाऽन्यथा व्याकुर्वन्।

---

१. नैषधमहाकाव्यम्–१०।३४।
२. 'सुमत्' इत्ययं निपातो वैदिकः 'स्वयम्' शब्दार्थे तत्र प्रयुक्तः।
३. गोपथब्राह्मणम्–१।१।२६।
४. शृङ्गारप्रकाशः–१, पृ० ६।
५. सारस्वतव्याकरणम्–अव्ययप्रकरणम्–१५।
६. गणरत्नमहोदधिः–अव्ययप्रकरणम्–१२।
७. सरस्वतीकण्ठाभरणम्–१।१।११८।
८. प्रक्रियासर्वस्वम्–सुब्विधिखण्डः, पृ० १८२-९१।
९. प्रक्रियाकौमुदी–१।१।३७।
१०. सिद्धहेमश०–१।१।३०, १।१।३१, १।१।३२।

प्रयोगेऽपि निपाताव्ययानां दृश्यते मिथो विसंवादः। नावलोक्यते संस्कृतवाङ्मये काचिदेतादृशी विसंवादरहिता सीमा, यथा प्रयोगकाले निपाताव्ययानां व्यवहारक्षेत्राणि पृथक् पृथग् निर्द्धार्य्येरन्। परिभाषाकाले सूत्रेषु यथा कथा समर्यादास्ते प्रयोगकाले निर्मर्यादितामवलम्बन्ते। निरुक्तव्याख्यात्रा स्कन्दस्वामिनाऽव्ययलक्षणं कुर्वता प्रत्यभाषि यत्—ये शब्दा व्ययवन्तो न भवन्ति, अर्थाद् कारकान्तरं संख्यान्तरं वा न जुषन्ते = भजन्ते। तद्यथा—'दृष्टव्ययत्वात्[1]। व्ययः = विविधं गमनम्, यत्र च कारकान्तरे संख्यान्तरे चान्येन च संबद्ध इत्यर्थः। तद्भिन्ना अव्ययाः' इति। स्कन्दस्वामिनोऽव्ययलक्षणं गोपथब्राह्मणीयाल्लक्षणाद् भाषाशास्त्रदृष्ट्या परां कोटिमारोहति। भवतु नामात्राव्ययप्रसङ्गो नाभिप्रेत एव। तत्तोलनात्मकं विश्लेषणं तु द्वितीयेऽध्यायेऽनुविधास्यते। अत्र त्वव्ययचर्चाया एतावन्मात्रमेव प्रयोजनमासीद् यत्तस्य स्वरूपोपपयिको विवर्ताभावो निपातोपसर्गेष्वपि घटत इति मन्यन्ते शाब्दिकाः।

संस्कृतव्याकरणस्य तत्तत्संप्रदायेष्वपां तरङ्गेषु तैलबिन्दुरिव लब्धप्रचारोऽयं विश्वासो यदव्ययानामिव निपातोपसर्गा अपि प्रत्यय-वचनमास्कन्दिनः सन्तोऽपि कारकसंख्याम्, प्रत्ययसंख्याम्, वचनसंख्यां च नास्कन्दन्ति। अतो न दृश्यत एषु व्ययः = विविधं गमनम्।

वस्तुतोऽयमेवासीत् सर्वविधानर्थानां हेतुः, येन निपातोपसर्गाणां रूपप्रतिमाया अर्थप्रतिमायाश्च व्याघातोऽनायासेनैवोपपन्नः। एतत्तु महदाश्चर्यकरं प्रतिभाति यन्निपातोपसर्गाणामर्थवत्वात् प्रातिपदिकसंज्ञा तु विधीयत एव, तदनु ते विभक्तिभाजोऽपि भवन्त्येव, किन्तु सर्वाषां विभक्तीनां लोपे को हेतुः? अयमेव पारिषदक्तेरतर्कितोपनतः प्रश्नो यस्य समाधाने स्यान्नाम प्रयासोऽयं फलवान् भवेत्।

वैदिकभाषाया गवेषणेनास्य व्ययाभावरूपनियमस्यान्यथात्वमनायासेनैव लब्धुं शक्यते। दृश्यते हि वैदिकभाषायां निपातोपसर्गाणां विविधानि विवर्ततानि। न हि ते तत्र स्थाणुरिव जोषमातिष्ठन्ते। भाषायामेतादृशस्य कस्यश्चिच्छब्दवर्गस्य सम्भावनापि सम्भावयितुं वा न पार्यते, येन स वर्गः स्थाणुरिवौदासीन्यं भजेत्। ऐतिहासिकभाषाशास्त्रस्य विसंवाद्येष समयः। न हि भाषाप्रवाह औदासीन्यमाद्रियते। तत्र तु सर्वविधानां शब्दानामर्थसमर्पणं भवति वाक्यार्थे। वस्तुतस्तु सर्वविधसमूहार्थस्य समूहिरूपो भवति वाक्यार्थः। यदि केचनापि वर्गीयाः शब्दा औदासीन्यमवलम्बेरन्, तदा वाक्यार्थकल्पनाऽपि नोदीयात्। कोशेषु तटस्था इव भासमानाः शब्दा वाक्येष्वताटस्थ्यमङ्गीकुर्वन्त्येव स्वरूपतोऽर्थतश्च।

---

१. निरुक्तम्–१।१।

वैदिकवाङ्मयस्य सौक्ष्म्येण निरीक्षणेनोद्धतुं शक्यते, यत्तत्र नास्ति कश्चिच्छब्द-वर्गोऽव्ययवान् स्थाणुमान् वा । तत्र सर्वे व्ययवन्तोऽर्थवन्तश्च परामृष्टाः । अत्रावस्तादु-पन्यस्यन्ते केचन दृष्टान्ताः, यैर्निपातोपसर्गाणाम् अव्ययानाञ्च व्ययाभावरूपस्यावैज्ञानि-कस्य प्रवादस्यान्यथात्वमापतिष्यति सुतराम्—

**प्रत्ययभाजः**

(१) अन्तरतः[1] = अन्ततः ।

(२) अपाच्याः[2] = प्रतीच्याः ।
'ते नो गोपा अपाच्यास्त उदक्त इत्था न्यक्....' ।

(३) अर्वावतः[3] = अर्वाचीनादित्यर्थे ।
'अर्वावतो न आ गहि....' ।

(४) उत् + तराम् > उत्तराम्[4] = उद्गतार्थे ।
'उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम्' ।

(५) तादीत्ना[5] = तादृशार्थे ।
'आतसूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला विवित्से' ।

(६) दुर्यः[6] = असन्निकृष्टार्थे ।

(७) प्रतरम्[7] < प्र + तरप् > प्रतरम् = प्रकृष्टतरमित्यर्थः ।
'सुवीरा द्राघीय आयुः प्रतरं दधानाः' ।

(८) प्रत्नम्[8] < प्र + त्न > प्रत्नम् = पुरातनमित्यर्थः ।
'....प्रत्नमीड्यम् श्रुष्टीदेवं सपर्यत' ।

(९) प्रवतः[9] < प्र + वत् > प्रवतः = प्रकृष्टतरः ।
'परे युवांसं प्रवतो महीरनु बहुभ्यः....' ।

(१०) पुरोधा[10] < पुरस् + √धा > पुरोधा = श्रेयोधारकः ।
'श्रद्देवा अदधतावगच्छत्पुरोधां य एवं विद्वान्' ।

(११) यावच्छः[11] < यावत् + छ > यावच्छः = अल्पार्थे ।
'अन्याः प्रजा यावच्छो यावच्छ इव तिष्ठन्ते' ।

---

१. तै० सं०—७।२।१०—भास्करभाष्यम् ।
२. ऋ० सं०—८।२८।३—सायणभाष्यम् ।
३. ऋ० सं०—३।४१।८, शतपथब्रा०—१।५।१।२४ ।
४. ऋ० सं०—१।५०।११—सायणभाष्यम् ।
५. ऋ० सं०—१।३२।४—स्कन्दभाष्यम् ।
६. ऋ० सं० १।५१।१४—सायणभाष्यम् ।
७. ऋ० सं०—१।५४।११—सायणभाष्यम् ।
८. ऋ० सं०—३।९।८—सायणभाष्यम् ।
९. तै० आ०—४।१।१, अथर्ववेदः—१।१३।२ ।
१०. तै० सं०—७।४।१—भास्करभाष्यम् ।
११. शतपथब्रा०—२।२।३।४—हरिस्वामिभाष्यम् ।

**कारकविभक्तिभाजः (करणकारकम्)**

(१) अन्तरेण[1] = दृष्टापचारार्थे ।
'तावदयमन्तरेण शब्दो दृष्टापचारो निपातः' ।

(२) अमा[2] = साहचर्यार्थे ।
'अमेव नः सुहवा आ हि गन्तन....' ।

(३) अला[3] = अलम् + आ (टा) > अला = उपेत्यर्थे ।
'अलातृणो वल इन्द्र व्रजो गोः पुरा....' ।

(४) इत्था[4] = इत्थंप्रकारेण ।
'इत्था इत्येष निपातः अमुत्थेत्यनेन व्याख्यातः' ।

(५) इदा[5] = इदानीमित्यर्थे ।
'इदा हि वो विद्यते....पुराचित्' ।

(६) कथा[6] = कथमित्यर्थे ।
'अक्रन्दयो नद्यो रोरुवद् वना कथा न क्षोणिभिः' ।

(६) कुहया[7] = कुत्र तिष्ठतीत्यर्थे ।
'यत्त्वा पृच्छादीजानः कुहया कुहयाकृते' ।

(८) नमसा[8] = नमस्कारेण सह ।
'अकारित इन्द्रगोतमेभिर्ब्राह्मण्योक्ता नमसा हरिभ्याम्' ।

(९) प्रायेण[9] = ज्ञातव्यमित्यर्थे ।
'केचित् प्रायेणशब्दो विभक्तिप्रतिरूपको निपातो ज्ञातव्यमित्यस्यार्थे वर्तत इत्याहुः' ।

(१०) मस्मसा[10] = भक्षणकालकृतानुकरणशब्दार्थे ।
'सर्वं च मस्मसा कुर्व्विति' ।

(११) सत्रा[11] = सत्यार्थे भूयिष्ठार्थे च ।
'यः सत्राहा विचर्षणिरिन्द्रम्....' ।

---

१. महाभाष्यम्–२।३।४–पदमञ्जरी ।
२. ऋ० सं०–२।३६।३, ५।५४।३ ।
३. ऋ० सं०–३।३०।१०–सायणभाष्यम् ।
४. निरुक्तम्–६।५–दुर्गवृत्तिः ।
५. ऋ० सं० ६।६५।४–स्कन्दभाष्यम् ।
६. तदेव–१।५४।१, शतपथब्रा० ८।५।३।१ ।
७. ऋ० सं०–२।४।३०–सायणभाष्यम् ।
८. ऋ० सं०–१।६३।९–स्कन्दभाष्यम् ।
९. पदमञ्जरी–२।३।१८ ।
१.० शतपथब्रा०–६।६।३।१० ।
११. ऋ० सं० ६।४६।३, ८।९२।७, १०।९६।१३ ।

(१२) सनेन <सना + टा > सनेन = सनातनेन ।
'किं सनेन वसव आप्येन[१]' ।

(१३) समया = समीपार्थे ।
'कियत्या यत्समया भवाति जोषमन्याभिरेति[२]' ।

(१४) स्वधया = रथेन अन्नेन च ।
'अचक्रया यत् स्वधया सुपर्णो····[३]' ।

(१५) स्वधाभिः = ज्योतिभिः ।
'अनु द्यूनजरामृता चरति स्वधाभिः[४]' ।

(१६) पराचैः = पराङ्मुखैः ।
'बोधयां दूरं निर्ऋतिं पराचैः कृतम्[५]' ।

**सम्प्रदानकारकम्**

(१) अह्नाय = झटित्यर्थे ।
'अह्नाय तव सुश्रोणि शतं निष्कान् ददाम्यहम्[६]' ।

(२) चिराय = चिरपर्यायः ।
'चिरायेत्यादयो लोके प्रयुज्यमाना निपातत्वेन ज्ञेयाः[७]' ।

(३) स्वधायै = अन्नरूपायै ।
'नमो वः पितरः स्वधायै नमो वः पितरो मन्यवे[८]' ।

(४) स्वस्तये = क्षेमाय अनुग्रहाय च ।
'वयं सुमन्दिषीमहि गोपाय नः स्वस्तये····[९]' ।

**अपादानकारकम्**

(१) अधरात् = दक्षिणदेशादित्यर्थः ।
'त्वं नो अग्ने अधरादुदक्तात्, त्वं पश्चादुत रक्षा पुरस्तात्[१०]' ।

(२) अवस्तात् = सूर्यलोकाद् अधस्तात् ।
'····याश्चावस्तादुपतिष्ठन्त आयः[११]' ।

---

१. ऋ० सं०–२।२९।३ । २. ऋ० सं०–१।११३।१०, शतपथब्रा०–३।८।२।२० ।
३. ऋ० सं०–४।२६।४, १०।२७।१९ । ४. ऋ० सं०–१।११३।१३ ।
५. अथर्ववेदः–७।४२।१–सायणभाष्यम् ।
६. महाभारतम्–विरा० प०–२२।१०, कुमारसम्भवम्–५।८६ ।
७. प्रक्रियाकौमुदी–भूमिका, पृ० १३ । ८. छा० ब्रा०–२।३।१०–विष्णुगुप्तकृतभाष्यम् ।
९. ऋ० सं०–२।२।६, तै० सं०–१।२।३, आश्वलायनगृ० सू० १।४० ।
१०. ऋ० सं०–१०।८७।२०; अथर्ववेदः–६।४१।३ । ११. ऋ० सं०–३।२२।३ ।

(३) आत् = अथशब्दार्थे, अनन्तार्थे, तदाशब्दार्थे च ।
'आदह स्वधामनु····यज्ञियम्[१]' ।

(४) आरात् = अधुनार्थे, समीपार्थे, दूरार्थे च ।
'सना पुराणमध्येम्यारान्महः[२]' ।

(५) उदक्तात् = उत्तरतः ।
'त्वं नो अग्ने अधरादुदक्ताद् रक्ष····[३]' ।

(६) पराकात् = दूरात् ।
'पराकाद्विवश्च ग्मश्च मर्त्यम्[४]' ।

(७) पश्चातात् = पश्चिमतः ।
'आ पश्चातान्नासत्या पुरस्तादाश्विना····सदा नः[५]' ।

(८) पुरस्तात् = पूर्वस्यां दिशि ।
'सूर्यरश्मिर्हरिकेशः पुरस्तात् सविता ज्योतिः····[६]' ।

(९) बलात् = हठादित्यर्थे ।
'बलादिति निपातो हठार्थः[७]' ।

(१०) सनकात् = सनातनतः, चिराच्च ।
'प्र सप्तहोता सनकादरोचत[८]' ।

(११) सनात् = चिरात्प्रभृति ।
'सनाद् दिवं परि····अन्यान्या[९]' ।

**सम्बन्धकारकम्**

(१) चिरस्य = चिरकालेनेत्यर्थः ।
'चिरस्य वाच्यं न गतः प्रजापतिः[१०]' ।

(२) नानानम् = विविधानाम् ।
'नानानं वा उ नो धियो वि व्रतानि जनानाम्[११]' ।

---

१. ऋ० सं०–१।६।४, १।१८।८, १।५१।४, १।६८।३, ३।५४।११ ।
२. ऋ० सं०–३।५४।९, ६।४७।१३, १०।४२।६; अथर्ववेदः—२०।१।१ ।
३. ऋ० सं०–१०।८७।२० ।
४. ऋ० सं०–१०।२२।६ । ५. ऋ० सं०–७।७३।५ । ६. ऋ० सं०–१०।१३९।१ ।
७. नामलिङ्गानुशासनम्–२।८।१०८–क्षीरस्वामिव्याख्या ।
८. ऋ० सं०–३।२९।१४, १०।७०।१२ । ९. ऋ० सं०–४।५७।६, ८।११।१० ।
१०. अभिज्ञानशाकुन्तलम्–५।१५ । ११. ऋ० सं०–९।११२।१ ।

**अधिकरणकारकम्**

(१) अन्यतरस्याम् = समुच्चये, विकल्पे च ।
'अनेकार्थत्वान्निपातानां समुच्चये अन्यतरस्यांशब्दः[1]' ।

(२) अभीके = अन्तिकार्थे ।
महाश्चिदग्न एनसो अभीके......[2] ।

(३) आके = समीपार्थे ।
'आकेनिपासो अहभिदविध्वतः[3]' ।

(४) आरे = दूरे ।
'आरे सा वः सुदानवो गरुत **ऋञ्जती** शरुः[4]' ।

(५) उपाके = अन्तिके ।
'श्रिये **रुक्मौन** रोचत उपाके[5]' ।

(६) परे = उपरि ।
'इमाः पृथिव्य ऐयमहैका द्वे अस्याः परे......[6]' ।

(७) पारे = उपरि देशे ।
'यो अस्य पारे रजसः शुक्रो अग्निरजायत[7]' ।

एवं वैदिकभाषाया अन्वेषणेनोपलब्धानां प्रत्यय-विभक्ति-वचनसंख्याजुषां स्वरूप-व्ययापन्नानाञ्च निपातानां पुरस्ताद् दृष्टान्तदार्ष्टान्तिकाः परामृष्टाः। परामर्शनेनानेन निपातानां सन्दर्भे व्ययाभावरूपस्य भाषाशास्त्रविरुद्धस्य सिद्धान्तस्यासैद्धान्तिकत्वं स्वयमायाति ।

अत्रैकमपरमपि तथ्यमवधारणीयं वर्तते यन्नास्ति वैदिकभाषायाम् अव्ययरूप-विभागस्य कश्चिदप्यादरः। सम्पूर्णे वैदिकवाङ्मये चतुर्विधानां नाम-आख्यात-उपसर्ग-निपातपदश्रेणीनां व्यवहारः पुरस्क्रियते। अव्ययरूपपदश्रेण्यास्तत्रावकाशो न दृश्यते। आचार्ययास्केन[8], ऋग्वेदव्याख्यात्रा स्कन्दस्वामिना[9], निरुक्तव्याख्यात्रा महेश्वरेण[10] च पदचातुर्विध्यं व्याक्रियत आद्रियते च। स्कन्दस्वामिना सम्पूर्णऋक्संहितायां यादृशी शब्दव्युत्पत्तिपरम्परा निर्वचनपरम्परा चाङ्गीकृता, तया परम्परया सुतरां स निरुक्त-

---

१. प्रदीपः–(कैयटकृतः) ५।२।९७; पदमञ्जरी–५।३।१०९ ।
२. ऋ० सं०–४।१३।५ ।
३. ऋ० सं०–४।४६।६ ।
४. ऋ० सं०–१।१७२।२, १०।३५।४ ।
५. ऋ० सं०–४।१०।५ ।
६. शतपथब्रा०–५।१।५।२१ ।
७. ऋ० सं०–१०।१८८।५ ।
८. निरुक्तम्–१।२ ।
९. ऋग्वेदस्य–उद्गीथभाष्यम् ।
१०. निरुक्तभाष्यटीका–१।२ ।

प्रणेतुः पदनिर्वचनपरम्परां संवदति। एतेन सिद्ध्यति यद् महामुनिपाणिनेरर्वाङ्निर्मितं गोपथब्राह्मणम्।

अव्ययलक्षणं कुर्वता गोपथब्राह्मणकृता केवलं पाणिनेरर्वाक्कालिकस्य साहित्यस्यावलम्बनं कृतमिति प्रतिभाति, यतो हि न दृश्यते तस्य लक्षणे कश्चिदैतिहासिको भाषापरम्परामूलकश्चालोकः। अखण्डसंस्कृतवाङ्मयप्रवाहसम्पत्सम्पन्नेन केनचिदपि शब्दशास्त्रिणैतादृशं लक्षणं निर्मातुं न पार्यते।

भवतु, नामात्र केचन नामधातुवद् व्यवह्रियमाणा निपाताः प्रस्तूयन्ते, येनैतेषामाख्यातपदनिर्माणप्रवृत्तिः प्रकृतित्वेन प्रत्ययाश्लेषोऽपि निर्णीयते। एतादृशैरुदाहरणैरपि **'यन्न व्येति तदव्ययम्'**[1] इति राद्धान्तस्य मिथ्यात्वम् अथ च भाषायामव्ययवर्गस्य चाप्रासङ्गिकत्वं प्रख्याप्यते। निपाता द्योतका वाचका वेति विवादास्पदस्य सिद्धान्तस्यापि निर्णायकं भविष्यत्यत्र प्रतिपादनम्। तथा च निपातनिर्मितनामधातवः—

(क) सनायते[2] <सना + य + त> सनायते = नित्य इवाचरति।

(ख) स्वधयति[3] <स्वधा + य + ति> स्वधयति = शान्तिं गमयति।

आख्यातवद् व्यवह्रियमाणा इमे निपाता नामधातुवदेव क्रियापदसङ्घटनक्षमाः सञ्जाताः। अत एवाशुबोधव्याकरणकृता[4] निरदेशि—'नामधातूपसर्गनिपाताः प्रकृतिः। तत्र नामप्रकृतिकाः सुप्तद्धितादयः, धातुप्रकृतिकाः तिङ्कृदादयः, उभयप्रकृतिकाः क्यजादयः। तद्धिताः पुनर्निपातोपसर्गप्रकृतिकाः। तेन नतराम्, सुतराम् इत्यादिसिद्धिः' इति।

यत्तु महाभाष्यकारेणोक्तम्–'न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्ययः'[5] इत्यस्याप्ययमेवाशयो यच्छब्दस्तावत् प्रयोगानर्हो भवति, यावत् प्रत्ययभाजो न भवति। प्रकृतिप्रत्ययमिथुनीभूतस्यैव ध्वनिग्रामस्य पदसंज्ञा दृश्यते देववाण्याम्। अनेनैव नियमेन निपातोपसर्गा अपि क्रोडीकृताः।

संस्कृतभाषायां निपातानामैतिहासिकविकासक्रमान्वेषण उपलब्धानि विविधानि तथ्यानि। कुत्रचिन्निपाता उपसर्गप्रतिरूपकाः, कुत्रचित् स्वरप्रतिरूपकाः, कुत्रचिद् विभक्तिप्रतिरूपकाः, कुत्रचित् प्रत्ययप्रतिरूपकाः, कुत्रचित् सान्धिकाः, कुत्रचिन्मनोरागरूपरूषिताः, कुत्रचिन्नामधात्वाकृतिकाः, कुत्रचित् कर्मकारकान्विताः, कुत्रचित्

---

१. गो० ब्रा०–
२. ऋ० सं० १।६३।१३–सायणभाष्यम्।
३. श्रीमद्भागवतम्–५।८।२५–श्रीधराचार्यव्याख्या।
४. आशुबोधव्याकरणम्, संज्ञाप्रकरणम्–३३।
५. महाभाष्यम्।

करणकारकान्विताः, कुत्रचित् सम्प्रदानकारकान्विताः, कुत्रचिदपादानकारकान्विताः, कुत्रचित् सम्बन्धकारकान्विताः, कुत्रचिच्चाधिकरणकारकान्विताश्चोपबृंहिताः। सर्वविधानां निपातानां स्वातन्त्र्येण दृश्यन्ते रूपप्रतिमाः, अर्थप्रतिमाश्च। संस्कृतभाषायां शनैः शनैर्निपातानां प्रयोगे दृश्यते कार्पण्यम्। वैदिकभाषायां यथैतेषां व्यवहारेऽवलोक्यते पदपदार्थस्वातन्त्र्यम्, न तथौदार्यमस्ति महामुनिपाणिनेः पश्चात्।

वैदिकभाषाया लोकबोद्धृत्वे तत्त्वचिन्तागतभाषासारल्ये चासीन्निपातानामनन्यसाधारणो योगः। यस्यां कस्यामपि भाषायां चतुर्विधपदानां व्यवहारे यदा समदृष्टिरङ्गीक्रियते पुरस्क्रियते च, तदा कामं सा भाषा लोकमानसे समुल्लसति। यस्यां च भाषायां केवलानि नामपदानि, आख्यातपदानि च यथा कथाऽऽमृश्यन्ते, तदा नूनं सा शिल्पप्रधानतामेति। एतादृश्यां दशायां सर्वविधव्यापाराणां कृते भूयो भूयः क्रियापदानि परामृश्यन्ते। एतेन क्रियापदाभ्यसनेनैव प्रयोक्तुर्विवक्षार्थरूपतामाप्नोति। तदर्थं निपातानां व्यवहारस्य श्रमसाध्यकल्पनाऽपि नोदेति। एवमेव निपातानामर्था व्यवहर्तृभिः कालक्रमेण विस्मारिताः। विस्मृतानां निपातार्थानामुत्तम्भनापेक्षया ते द्योतकाः, न तु वाचका इति अक्लेशकरः सुकरो वादः पाणिनेः पश्चाच्छाब्दिकनिकायेष्वहमहमिकया प्रारब्धः।

अत्र पुनस्तावत् केचनैतादृशा संज्ञाशब्दा आलोकनीयतां व्रजन्ति, येषामात्मलाभो निपातैरेव समजनि। निपातशब्दा एव प्रत्ययवन्तः सन्तो नामपदानां प्रसवितारः सञ्जाताः। तद्यथा—

(क) उमा < उ [=आश्चर्ये] + मा [=निषेधे] > उमा = अहो मैव। तथा च कालिदासः[1]—**'उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम'** इति।

(ख) अणुः < अनु = स्थवीयांसमनु यो वर्तते स अणुरित्युच्यते। विवृणोति चाचार्यदुर्गः[2]—'स्थवीयांसमनु यो वर्तते अणुरित्युच्यते। अन्वित्ययमुपसर्गः। लुप्तनामकरणः सन् येन प्रत्ययेन न्याय्यमेतद् नाम स्यात् सोऽत्र लुप्तो न श्रूयत इत्यर्थः। कथं लुप्तः? यथा सम्प्रति इति। अस्मिन्नामकरणलोपेन प्रयोगसिद्धिः। साम्प्रतमिति हि न्याय्यम्, तथापि सम्प्रतीत्येवमपि वर्तमानकालविषयप्रयोगः प्रसिद्धः। एवमिहाप्यनुशब्दे' इति।

मुकुन्दशर्मा[3] अपि सिद्धान्तयति यत्–'नामशब्देनात्र सुबन्तं द्रव्यभूतमुच्यते' इति। अयमर्थः—'अनुशब्दो हि स्थूलतममनु इत्येव वर्तमानो यदा सुपा सम्बन्धान्नामीभवितुमधिकुरुते, तदा णत्वं पृषोदरादित्वादासाद्याणुर्भवति। सुब्णत्वं चात्रानुशब्दे'। एवमाचार्ययास्क-दुर्ग-मुकुन्दशर्मप्रभृतयोऽनूपसर्गं नामत्वेन व्याचक्षते।

---

१. कुमारसम्भवम्–१।२६–मल्लिनाथव्याख्या।

२. निरुक्तम्–६।८।

३. निरुक्तम्–६।८–मुकुन्दशर्मणो व्याख्या।

(ग) अनुः[1] >आनवः, आनवाय, आनवे, आनवस्य, अनुषु =एतन्नामानो राजानः ।

(घ) अन्त्रम् <अन्तर्> [=आभ्यन्तरार्थे] अन्त्रम् >अन्त्राणि =आन्त्र-स्थानीयानि अवयवविशेषाणि । तथा च तैत्तिरीयब्राह्मणे[2]—'आन्त्राणी स्थाली मधु पिन्वमाना । गुदा पात्राणि सुदुधान धेतुः' इति ।

(ङ) पुरुः[3] >पुरुषु >पौरवः, पुरयस्य <पुरु[=बह्वर्थे] एतन्नामानो राजानः ।

इमानि संज्ञापदानि, येषामुपादानकारणानि निपातपदान्येव सन्तीति मन्ये । एतैर्निपातनामधातुसंज्ञापदानां व्यवहारैर्निष्कृष्यते यदासन्निपाता हैयङ्गवीनसदृशाः । यतो ह्येतेषां विनियोगो वैदिकभाषायां लौकिकसंस्कृते च भाषासौन्दर्योत्तम्भनाय बद्धार्थकैर्नामाख्यातपदैरनभिहितनिःसीमार्थाभिधानाय च भवति स्म । क्रियापदानां नामपदानां चार्था यत्र विष्टम्भिता भवन्ति, ततो विष्टम्भितार्थास्ते निपातपदैरुन्नीयन्ते ।

इत्थं निपातानामैतिहासिकविकासक्रमेऽस्मिन्नध्याये सप्रमाणानि विमृष्टानि विविधानि भाषाशास्त्रतत्त्वानि । द्वितीये चाध्याये **'निपाताव्ययोपसर्गेषु को वात्मवि-संवादः'** इति विषयो गवेषयिष्यते । निपातार्थानामैतिहासिकविकासप्रसङ्गे माधवाचार्यस्य श्लोकं स्मारं स्मारमत्रोपसंहरामः ।

शाकल्यः पाणिनिर्यास्क इत्यृगर्थपरास्त्रयः ।
यथाशक्त्यनुधावन्ति न सर्वं कथयन्त्यमी[4] ॥

यदीमे पथिकृच्छाब्दिका न सर्वं कथयन्ति, तदा का नाम गतिर्मम प्रयासस्य ।

• • •

---

१. ऋ० सं०–१।१०८।८, ६।६२।९, ७।१८।१३, ८।४।१, ८।७४।४, स्कन्द-सायणभाष्यम्, निरुक्तम्–२।३ ।

२. तै० ब्रा०–२।४।३–सायणभाष्यम् । ३. ऋ० सं०–१।१०८।१, ६।६३।९, ८।४।१ ।

४. ऋग्वेदानुक्रमणी–८।१।७ ।

## द्वितीयोऽध्यायः

# निपाताव्ययोपसर्गेषु को वात्मविसंवादः

दृश्यन्ते हि संस्कृतभाषायां शब्दानां विविधाः श्रेणयः। अन्यास्वपि च प्राचीन-भारोपीयार्यभाषासु दृश्यन्ते शब्दानां निकायाः। नह्येकवर्गीयैः शब्दैर्भाषा स्वीयां चरितार्थतामादधाति। यतो हि भाषा हि नाम सामाजिकी विचारसंश्लेषजनयित्री शब्दमूर्तिः। मानवनिकायस्यान्तस्संश्लेषमादधानायां भाषायां मानवमनोभाव आत्म-प्रतिबिम्बं संक्रामयति। एतस्मिन्नात्मबिम्बसंक्रमणे मनोभावेन क्रोडीक्रियन्ते विविधानि देशकालस्थितिजन्यानि संवेदनानि। आसीत् कदाचित् स कालो यस्मिन् सम्पूर्णेऽ-स्मिन्नार्य्यावर्ते संस्कृतभाषा कामम् आर्याणामनुभूतिसंवाहिकाऽऽसीत्। देशविशेषजन्य-प्रावृट्शीतग्रीष्मर्तुसंवेदनानां वाहिका सती भाषा चित्रात्मकतामाश्रितवती। एतादृशानि संवेदनानि भाषायामनिप्सितानि सन्त्यपि बलात् समापतन्ति। अत एव न हि दृश्यन्ते भाषायां विकल्परहितानि व्याकरणानि। प्रायेण समस्तानां भाषाणामनुशासकतापद-मादधानेषु न विलोक्यन्ते शब्दानुशासनेष्वनुशासनानि। अत एव हि महाभारत-व्याख्यात्रा नीलकण्ठेनोद्घोषितं यत्—**'व्याकरणं हि नाम संशयः**[1]' इति। अनुपदं संशयप्रधानेऽस्मिन् शास्त्रे नह्यसंशयिका काचित् परम्पराऽऽद्रियते। सूत्रेषु दृश्यन्ते हि पदे पदे विकल्पातिशयाः। वस्तुत इदमेव भाषाजीवनस्य रहस्यम्। यो हि दीर्घायु-र्भवति, नूनं स वैतसीं वृत्तिमाश्रयति। न हि भाषायां शब्दसङ्ग्रहविषये विधिनिषेध-मूलिका वृत्तिः पुरस्क्रियते। भाषायाः कृते सर्वं सङ्ग्रहणीयमादरणीयं च भवति। अयं शब्दः शब्दानुशासनानुशासितोऽयं चाननुशासित इति विवेकस्तु भाषाशास्त्रासम्मतः। यथा **'यद्यत्प्रमेयं तत्तदभिधेयम्'** इति नियमः सर्वैराद्रियते, तथैव भाषया सर्वं सङ्ग्रहणीयमिति व्याप्तिरप्याद्रियते शाब्दिकैः।

विविच्यमानेऽस्मिन्नध्याये निपाताव्ययोपसर्गेषु को भेद इत्यन्योन्यसम्पृक्तो विषयो विविक्ततां यथा व्रजेत्, तथा प्रयतिष्ये। निपातानां किं लक्षणम्? किं वाऽव्ययानाम्? उपसर्गाणां च किं लक्षणमित्येकैकशो विमृश्यते। तदनु तेषां प्रयोगेषु साङ्कर्य-कारणान्यप्यन्वेषिष्यन्ते। निपाताव्ययोपसर्गाणां व्यवहारदृष्ट्या संस्कृतवाङ्मयं द्विधा विभक्तं दृश्यते। एकं वैदिकसाहित्यम्, अपरं च लौकिकमिति। वैदिकसाहित्यस्य चरमा सीमा यास्कपर्यन्तमनुधावति, लौकिकस्य च प्रारम्भोऽनुपाणिनिमङ्गीक्रियते। विभजन-

---

१. महाभारतम्—शान्ति प० १५३।११।

मेतच्छब्दशास्त्रदृष्ट्या निर्वचनदृष्ट्या च क्रियते, न पुनः भाषाप्रवाहदृष्ट्या साहित्यदृष्ट्या वा। सम्पूर्णे वैदिकवाङ्मये चतुर्विधपदराशिः नाम-आख्यात-उपसर्ग-निपातरूपेण दृश्यते शब्दानाम्। नहि तत्राव्ययरूपस्य ब्रह्मकल्पस्य श्रेणिविभागोऽवलोक्यते। यतो हि तत्र सर्वविधा शब्दा व्ययवन्तो दृश्यन्ते। निपाता उपसर्गाश्च वैदिकभाषायां संज्ञापदानीव व्यवह्रियमाणाः सन्तो लिङ्गसंख्याकारकविभक्तिप्रत्ययभाजो भवन्ति। एवं विधानामनुपदं व्ययजुषां शब्दानां विषयेऽव्यय इति व्यपदेशोऽनौचित्यग्रहग्रस्त आसीत्। अतो हेतोरव्ययरूपविभागचर्चायाः प्रसङ्ग एव तत्र नोदेति। चतुर्वर्ग्याणामपि शब्दानां विनियोगाः संहितासु दृश्यन्ते कार्यकारणमूलकाः, प्रवृत्तिनिवृत्तिमूलकाः, शब्दान्तरप्रसवमूलकाः, भाषासौन्दर्यमूलकाः, परस्परहानोपादानमूलकाः, अर्थभूयस्त्वमूलकाश्च।

श्रुतिसाहित्ये नाम-आख्यातपदानि यथोदात्तानुदात्तस्वरिताधिकरणानि भवन्ति, तथैव निपातोपसर्गपदान्यप्यामृश्यन्ते। उदात्तानुदात्तस्वरितसंस्कारेषु तुल्यपदवीभाञ्जि भवन्ति निपातोपसर्गपदानि। यत्र निपातानिपातपदयोः समासो दृश्यते वैदिकपदपाठेषु, तत्र यदि पूर्वो भागो निपात उत्तरस्तु नाम तत्रोभयोरवान्तरपदत्वादवग्रहे विभजनं क्रियते, तथा नामपदम् उदात्तस्वरवद् भवति। तथा ह्युद्धरणानि—

**(१) निपातानिपातयोः**

(क) प्रकु॑पिता॒न् (ऋ० सं० २।१२।२)।
(ख) प्र॒चे॑तसः (ऋ० सं० १।३९।९)।
(ग) प्रअर्प॑णः (ऋ० सं० १०।४४।५)।

**(२) उपसर्गतिङन्तयोः**

(क) प्र॒चो॒दया॑त् (ऋ० सं० ३।६२।१०)।
(ख) प्र॒दद॑ातु॒ (ऋ० सं० ७।१०४।९)।
(ग) प्र॒पते॒त् (ऋ० सं० १०।६५।१४)।

यत्रोपसर्गाख्यातयोर्निपाताख्यातयोर्वा समासो भवति, तत्र मुख्यपदत्वं निपातोपसर्गाणामेव भवति। आख्यातपदं त्ववान्तरपदत्वं भजते।

**(३) उपसर्गनिपातयोः**

(क) प्र॒ इं॑व (ऋ० सं० १।१०।३७)।

**(४) उपसर्गोपसर्गयोः**

(क) प॒रा॑प॒रा (ऋ० सं० १।३८।६)।
(ख) स॒मसं॑म॒ (ऋ० सं० १०।१९१।१)।
(ग) अ॒भिं अ॒भि॒ (ऋ० सं० ९।११०।५)।

एवं समस्तस्योपसर्गद्वयस्य मुख्यं पदत्वमामनन्ति वैदिकपदपाठकाराः। यत्र निपातोपसर्गयोः समासो भवति, तत्रोत्तरपद उदात्तस्वरोऽवतिष्ठते। यः कश्चिद् वा भवेदुत्तरपदिकः, उपसर्गो निपातो वा।

एवं वैदिकस्वरसंस्कारकर्तृभिः पदपाठकारैश्च शाब्दिकैर्मन्त्रार्थनिर्णये स्वराणाम् उदात्तानुदात्तस्वरितावग्रहादीनामनन्यसाधारणं महत्त्वङ्गीकृतम्। स्वरानभिज्ञोऽध्येता मन्त्रार्थनिर्णयेऽसहाय एव भविष्यतीति मन्यते माधवाचार्यः। स ब्रवीति यद्—अन्धतामिस्रनिमग्नेन जनेन यथा प्रदीपालोकोऽभिकाङ्क्ष्यते, तथैव वेदमन्त्रार्थनिर्णयव्यापृतेन स्वरावलम्बनं क्रियते—

**अन्धकारे दीपिकाभिर्गच्छन्न स्खलति क्वचित्।**
**एवं स्वरैः प्रणीतानां भवन्त्यर्थाः स्फुटा इति[1]॥**

स्वसिद्धान्तं विवृण्वन्नग्रे व्याख्याति माधवाचार्यो यत्—'नूनम्, हि, एवम्, किलादयो निपाता यदा उदात्ता भवन्ति, तदा तेषामर्था अपि उच्चबलाघातत्वेनावधारणीयाः। यदोपसर्गाः स्वातन्त्र्येणोदात्ता भवन्ति, तदा वाक्यार्थनिर्णये तेऽसहाया भवन्ति। यदा च समस्यन्तेऽन्यैर्वर्गीयैस्तदा तेऽनुदात्ताः सन्तो वाक्यार्थमुत्तम्भयन्ति—

य उदात्ता निपातेषु नूनं ह्येवं किलादयः।
उच्चैः प्रदर्शनीयोऽर्थस्तेषामिति विनिश्चयः[2]॥
उदात्तेषूपसर्गेषु तदर्थः प्रस्फुटो भवेत्।
समस्तेष्वनुदात्तानां नीचैरर्थं प्रदर्शयेत्[3]॥

स्वहार्दमुपश्लोकयन् स सङ्गिरते यत्—अन्यैः शाब्दिकैस्तु स्वरादयो व्याकरणशास्त्रोपयोगित्वेन व्याख्यायिषत, किन्तु माधवस्तु सिद्धान्तयति यद् मन्त्राणामर्थनिश्चयनं तु स्वरैरेव कर्तुं शक्यते—

**मन्यन्ते पठितास्त्वन्ये यथा व्याकरणं स्वरम्।**
**व्यवस्थितो व्यवस्थायां हेतुस्तत्र न विद्यते॥**
**माधवस्य त्वयं पक्षः स्वरेणैव व्यवस्थितिः[4]।** इति।

मैकडानल[5]-बरो[6]-गुणे[7]-प्रभृतिभिरप्याधुनिकभाषाशास्त्रगवेषकैः प्रत्यपादि यद् वैदिकभाषायां प्रायेणोदात्तानुदात्तस्वरितसंस्कारसंस्कृतानां निपातोपसर्गाणां प्रयोगा अर्थविविक्तीकरणायाथ च वैदिकमन्त्राणां छन्दःसङ्घटनायापि भवन्ति।

एवं हि पदपाठेषु नामाख्यातानां वोपसर्गनिपातानामप्युदात्तानुदात्तस्वरितसंस्कारे समप्रधानपदत्वं स्वीकृतं वर्तते।

---

१. ऋग्वेदानुक्रमणी—८।११।
२. ऋग्वेदानुक्रमणी—६।७।
३. ऋग्वेदानुक्रमणी—६।८।
४. ऋग्वेदानुक्रमणी—१।२४।२५।
५. वैदिक ग्रामर—पृ० ३२।
६. संस्कृत लैंग्वेज—पृ० ३२८।
७. तुलनात्मक-भाषा-विज्ञान—पृ० १२८।

**वैदिकवाङ्मयस्य व्याख्यानभूते द्वे परम्परे**

वस्तुतस्तु वैदिकभाषाया नैसर्गिकप्रवाहस्यावलोकनेन तद्व्याख्यानभूते द्वे परम्परे पुरतः समायातः। एकस्यां व्याख्यानपरम्परायां यास्क-स्कन्द-महेश्वर-माधव-भट्टभास्कर-गुणविष्णुप्रभृतयः, विविधानि च प्रातिशाख्यानि। अपरस्यां च सायण-उव्वट-महीधर-प्रभृतयो गण्यन्ते। प्रथमा परम्परा तावत् पदचातुर्विध्य-नाम-आख्यात-उपसर्ग-निपात-संवादिनी। द्वितीयाऽप्यङ्गीकरोति पदचातुर्विध्यम्, किन्त्वव्ययरूप-विभागोऽपि तयाऽऽद्रियते। प्रथमपरम्परायामव्ययरूपविभागो न्यक्कृतो वर्तते। द्वितीयायां तु मनाक् चर्च्यते सः। सिद्धान्तरूपेणावस्थापनं तु द्वितीयपरम्परायाम-व्ययानां नालोच्यते।

वैदिकभाषायाः सर्वावयवानामतिसूक्ष्मविश्लेषणं यथा निरुक्ते प्रातिशाख्येषु च व्याक्रियते स्म, न तथा विश्लेषणमवलोक्यते कस्मिन्नप्येकस्मिन् शब्दानुशासनग्रन्थे। महामुनिपाणिनेर्व्याकरणस्मृतिर्यद्यपि रत्नायते सर्वासु व्याकरणस्मृतिषु, तथापि न सा प्रातिशाख्यीयां नैरुक्तीयां च भाषाऽवयवव्याकृतिमाप्नोति। पदचातुर्विध्यसिद्धान्तस्य प्रचारः प्रसारश्चैतादृशो दृढ आसीद् आऋग्वेदसंहितायाः प्रातिशाख्यानि यावत्; येन वाजसनेयिप्रातिशाख्ये चतुर्विधपदानां कृते चतुर्विधपददेवताः, चतुर्विधपद-गोत्राण्यपि स्थिरीकृतानि।

**(क) पददेवता यथा**

अथ पददेवताः।

सर्वं तु सोम्यमाख्यातं नाम वायव्यमिष्यते।
आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः[1] ॥

'सर्वमाख्यातं सोमदैवत्यम्। सर्वं नाम वायुदैवत्यम्। अग्निदैवत्या उपसर्गाः। निपाता वरुणदैवत्या इत्याद्युपासनार्थमुक्तम्। एवं ह्युपासिताः सन्तोऽर्थानभिज्ञस्यापि पुरुषस्य फलप्रदा[2] भवन्ति' इति।

**(ख) अथ पदगोत्राणि**

भारद्वाजकमाख्यातं भार्गवं नाम भाष्यते।
वासिष्ठ उपसर्गस्तु निपातः काश्यपः स्मृतः[3] ॥

'भरद्वाजेन दृष्टमाख्यातं भारद्वाजगोत्रं वा भारद्वाजसगोत्रं वा। तथा भृगुणा दृष्टं नाम भार्गवगोत्रं भार्गवसगोत्रं वा। तथा वसिष्ठेन दृष्टा उपसर्गा वासिष्ठगोत्रं वासिष्ठ-सगोत्रं वा। तथा काश्यपेन दृष्टा निपाताः काश्यपगोत्राः काश्यपसगोत्रा[4] वा' इति। एभिः पददेवताभिः पदगोत्रैश्च यादृशी विचारप्रौढिः समुपस्थाप्यते वाजसनेयिप्रातिशाख्य-

---

१. वाजसनेयिप्रातिशाख्यम्—८।५२।
२. अनन्तभट्टः—वा० प्रातिशाख्यम्—८।५२।
३. वा० प्रातिशाख्यम्—८।५१।
४. अनन्तभट्टभाष्यम्—वा० प्रा० ८।५१।

तद्भाष्यकृद्भिश्च, तया निश्चेतुं शक्यते यद् वैदिकपरम्परायां पदचातुर्विध्यसिद्धान्त एव स्वीकृत आदृतश्चासीत्।

निपातानां लक्षणं कुर्वता यास्काचार्येण सिद्धान्तितं यत्—**'निपाता[1] उच्चावचेष्वर्थेषु निपतन्तीति'**। तद्भाष्यकर्तारौ स्कन्द-दुर्गौ भाषेते यत्—'उच्चावचेषु[2] = अनेकप्रकारेषु, प्रतिपाद्येष्वर्थेषु प्रतिपादकत्वेन निपतन्ति = वर्तन्त इत्यर्थः'। आचार्य-दुर्गस्तु किञ्चिदन्तरेण विवृणोति निरुक्तवचनम्—'उच्चावचेषु = अनेकप्रकारेष्वर्थेषु निपतन्तीति निपाताः[3]' इति। निरुक्तकर्तुस्तद्भाष्यकर्त्रोश्च सिद्धान्तपर्यालोचनेनैतदायाति यत्—'निपाता वाक्यार्थनिबन्धना भवन्ति। वाक्यार्थप्रवाहो यत्र विघटितो भवति, विपर्यस्तो वा भवति, तत्र तत्रानुध्यातापीमे क्वचिद् यूथचरा इव क्वचिच्चैकाकिन एव विष्टम्भितं वाक्यार्थं सभाजयन्तः सन्तो वाक्यार्थप्रतिमां निर्मापयन्ति। तस्मिन् वाक्यार्थे चैतेषां बहुविधा अभिधेयार्था भवन्ति। निपातानां स्वभाव एवैषः।' तथ्यमिदं समर्थ्यते आधुनिकभाषाशास्त्रस्नातकेन डेनिस्टननामकेन[4] ग्रीकभाषाविदुषा।

ऋक्प्रातिशाख्ये शौनकाचार्येणापि निपातानां वाक्यार्थविनियोगप्रकाराः, तेषामाभिधानिकशक्तयोऽपि समर्थिताः। स व्याकरोति यत्—'केचन निपाताः सार्थकाः, केचन चानर्थकाः सन्ति'। मिताक्षरे = पद्यमये, अमिताक्षरे = गद्यमये च वाङ्मये निपाताः संख्यातीताः। यतो ह्यर्थवशात् = वाक्यार्थवशाद् एतेषां निपाताः = उपस्थितिर्भवति। ऋक्प्रातिशाख्यव्याख्यात्रोव्वटाचार्येणापि निरदेशि यत्—'अर्थविशेषे केचन निपाता निपातिता भवन्ति[5]'। तथा च शौनकः—

**निपातानामर्थवशान्निपातनादनर्थकानामितरे च सार्थकाः।**
**नेयन्त इत्यस्ति सङ्ख्येह वाङ्मये मिताक्षरे चाप्यमिताक्षरे च ये॥**[6] इति।

भाषागतनिपातप्रवृत्तिनिवृत्तीनाम्, अर्थसङ्कोचविकासानाम्, वाङ्मये सङ्ख्यासीमातिक्रान्तानामर्थपरिस्पन्दविस्तारितव्यवहाराणां वैचित्र्याणि स्मारं स्मारं निर्णीयते यद् गद्यपद्यमये सम्पूर्णे वैदिकवाङ्मये पदचातुर्विध्यविमर्श एवादृतो वर्तते। अत एव वैदिकभाषाव्याकरणभूतेषु प्रातिशाख्येषु, शब्दव्युत्पत्तिखनिभूतेषु निरुक्तेष्वपि च नालोच्यतेऽव्ययस्वरूपविभागः। यतो हि भाषायां नाद्रियते व्ययरहितः कश्चिद् व्यवहारः। तत्र तु भाषाप्रतिमाप्रकाशने सर्वे व्ययवन्तो भवन्ति। यत्र शब्दानां विनियोगाः कार्यकारणमूलकाः, शब्दप्रसवमूलकाः, अर्थभूयस्त्वमूलकाः, छन्दःसौन्दर्यमूलकाश्च भवन्ति, तत्रान्योन्यार्थसमर्पणमपेक्ष्यते सर्ववर्गीयैः पदैः। वस्तुतश्चतुर्विधेषु शब्देष्वन्योन्याश्रितसापेक्ष्यमपेक्ष्यते। प्रयोगकाले सर्वविधाः शब्दाः सापेक्षा भवन्ति, कोशेषु भवन्तु नामान्योऽन्यनिरपेक्षाः।

---

१. निरुक्तम्–१।२।
२. स्कन्दमहेश्वरभाष्यम्–१।२।
३. दुर्गव्याख्या–तदेव।
४. दि ग्रीक पार्टिकल्स–पृ० २८।
५. उव्टवाचार्यः—ऋ० प्रा० १२।९।
६. ऋ० प्रा०–१२।९।

एभिर्विश्लेषणैरेतन्निर्द्धार्यते यद् ऋग्वेदसंहितातो यावदुपलब्धवैदिकभाषायां चतुर्विधपदराशिरेव सिद्धान्तरूपेण विनियोगरूपेण च लब्धास्पदं विभासते। वैदिक-भाषाव्याकरणप्रातिनिध्यमुद्वहतां प्रातिशाख्यानामथ च वैदिकपदनिर्वचनभूतस्य निरुक्तस्य च व्युत्पत्तिनिर्वचनपरम्पराया गवेषणेनैतद् वक्तुं पार्यते यच्छ्रुतिसाहित्ये निपातोपसर्गाः क्वचिन्नामपदानीवामृश्यन्ते,[1] क्वचित्कारकविभक्तिसङ्ख्याजुषो भवन्ति,[2] क्वचिच्च नामधातुवदपि व्यवह्रियन्ते[3]। अतो हि तेषां स्वरूपव्ययराहित्यमपि कल्पयितुं न शक्यते।

महाभारतव्याख्यात्रा सर्वज्ञनारायणेनाव्ययलक्षणं कुर्वता साधूक्तं यत्–'अधिक-व्ययोऽव्ययः। धिकारवर्णलोपे[4]'। वस्तुतः कदाचित् स्वरूपतोऽर्थतश्च व्ययवन्त इमे कालान्तरेऽर्थतो व्ययवन्तः सन्तोऽपि स्वरूपतोऽव्ययवन्तः सञ्जाताः। पाणिनेरर्वाक्काले स्वरूपतः सुस्थिरा अपीमेऽर्थतोऽधिकव्ययवन्तमापन्नाः।

निपातानां स्वरूपस्थैर्यप्रवृत्तिमालोचयद्भिः—मैकडानल[5]–गोल्डस्टूकर[6]–मैक्समूलर[7]-ह्विट्नी[8]-मोनियरविलियम्स[9]-वान्द्रियैज[10]-डेनिस्टन[11]-गुणे[12]-बटकृष्णघोष[13]-प्रभृतिभिरप्याधुनिकभाषाशास्त्रमर्मज्ञैर्निरणायि यत्—'साम्प्रतमुपलभ्यमाना निपाताः कदाचिन्नामपदानि सर्वनामपदानि चासन्। कालप्रभावाद् दुर्बलार्थाः, तिरोहितार्थाश्चेमे रिक्तार्थतां प्राप्ताः। स्वरूपतः सङ्कुचिता अर्थतश्च रिक्ता इमे शाब्दिकैरनर्थकाः, अत एव द्योतका इति व्यपदिष्टाः।'

मैक्समूलरमहोदयो[14] व्याख्याति यद् भाषायां ये शब्दा कथाऽपि व्यवहारपदवी-मलङ्कुर्वन्ति नूनं ते कदाचित् सार्थकाः, अतः स्वतन्त्रा आसन्। सर्वथाऽर्थशून्यान् शब्दान् भाषा कदापि वोढुं न क्षमते। अत एवेन्द्रनिकाये—**'अर्थः पदमैन्द्राणाम्**[15]**'** इति पदलक्षणं क्रियते, अर्थात् त एव शब्दाः पदसंज्ञाभाजो भवन्ति, येऽर्थप्रतिमावन्तो भवन्ति। प्रक्रियासर्वस्वे नारायणभट्टोऽपि संवदति सिद्धान्तममुम्—

**अर्थवत्कार्यमस्त्येवेत्यर्थवत्सूत्र ऊचिवान्।**
**सर्वाव्ययानां तुल्यैव लिङ्गसङ्ख्यादिहीनता**[16] **॥**

---

१. ऋ० सं०–१।१०८।८, ६।६२।९, ७।१८।१३, १।१०८।१; तै० ब्रा० २।४।३; निरुक्तम्–६।८; कुमारसम्भवम्–१।२६।
२. ऋ० सं०–१।११३।१२; अथर्ववेदः–७।४२।१; ऋ० सं० ९।११२।१।
३. ऋ० सं०–१।६३।१३; भागवतम्–५।८।२५।
४. महाभारतम्–विराटप० २८।२६।
५. ए वैदिक ग्रामर–पृ० १५६।
६. पाणिनि–पृ० २२५।
७. दि लेक्चर्स आन दि साइंस आफ लैंग्वेज–पृ० २१३।
८. संस्कृत ग्रामर–पृ० ४४।
९. ए संस्कृत इंग्लिश डिक्शनरी–पृ० ५४९।
१०. भाषा–पृ० ४००।
११. दि ग्रीक पार्टिकल्स–पृ० २१८।
१२. तुलनात्मक भाषा-विज्ञान–पृ० ६५।
१३. लिंग्युस्टिक इंट्रोडक्शन टू संस्कृत–पृ० ७३।
१४. दि लेक्चर्स आन दि साइंस आफ लैंग्वेज–पृ० ३८२।
१५. निरुक्ते–१।१, उद्धृतः।
१६. प्रक्रियासर्वस्वम्—चादिप्रकरणम्।

यदि शब्दानामर्थवत्वात् प्रातिपदिकसंज्ञा क्रियते, सुवादिविभक्तयोऽपि विधीयन्ते, तदा कथं तेऽनर्थकाः, द्योतकाः, कारकलिङ्गसङ्ख्यया विभक्तिसङ्ख्यया च विरहिता अभवन्निति चित्रम् ? आधुनिकभाषाशास्त्रज्ञैः समाधानरूपेण निर्णीयते यद् भाषाया ऐतिहासिकप्रवाह एतादृशाः शब्दानां स्वरूपार्थसङ्कोचविकासास्तु भवन्त्येव। वस्तु-सत्तानिरपेक्षाः स्वरूपतो लघुरूपा भावप्रत्ययमात्रसंवाहकाश्च शब्दा अर्थरिक्ततां यथाऽऽशु वहन्ति, न तथा वस्तुसत्तोद्वाहकाः। यतो हि लघुरूपतामापन्नान् भावप्रत्यय-संवाहकान् शब्दान् प्रयोक्तृबुद्धिरभ्यासदार्ढ्येनाधिकरोति। अभ्यासशैथिल्ये तेषामर्था आशु विस्मर्यन्ते। विस्मृतार्थाश्च ते कालान्तरे बीजगणितीयचिह्नानामिव ध्वनिग्राम-मात्रका इव च भाषायां प्रतिभासन्ते। पुनर्विष्टम्भितार्थान् तिरोहितार्थांश्च तान् उत्तम्भयितुमन्यैः शब्दैः संयोज्यन्ते।

अस्मादेव संस्कृतभाषायां द्वित्राणाम्--उदस्वित्-आहोस्वित्-नहि-चन-आदह-उताहो-कच्चित्-कच्चन-अन्यतरस्याम्-माकीम्-आकीम्-निपातासमुदायानां पृथङ्निपातत्वेन गणना कृता। असमस्ताश्चैते पृथक् पृथङ् निपातसंज्ञाभाजस्तु भवन्त्येव, समस्ताः सन्तोऽप्येतेषामतिरिक्तनिपातत्वेन परिसंख्यानस्येदमेव कारणं यद् भाषाया ऐतिहासिका-नुरोधेन ये ध्वनिग्रामा जहत्स्वार्थवृत्तिभाजोऽर्थाद् रिक्तार्थकाः सञ्जाताः, तानेव स्तम्भितार्थकान् शब्दानुत्तम्भनाय पुनस्तेषु सरूपा विरूपा वा निपाताः संश्लिष्यन्ते। अन्यैर्निपातैः सह संश्लिष्टाश्च ते पुनरुर्वरितार्थाः संवृत्ताः। यतो हि भाषाशास्त्रस्यायं बहु पुरस्कृतः सिद्धान्तो यद् यदा कस्यचिच्छब्दस्यार्थः सम्मूर्च्छित इव तिरोधत्ते, तदा पुनस्तस्योज्जीवनाय तस्मिन् शब्दे ध्वनिविपर्यासः क्रियते। अत एव सरस्वतीकण्ठा-भरणव्याख्यात्रा नारायणेनोदघोषितं यत्—**'आगमा इव केऽपि स्युः सम्भूयार्थस्य साधकाः[1]'** इति। अत्र 'सम्भूयार्थस्य साधकाः' इत्यस्यायमेवाशयो यत् कालक्रमानुरोधेन यदा कश्चिन्निपातः स्खलितार्थमूर्तिः सम्पद्यते, तदा पुनस्तस्मिन्नर्थमूर्तेः प्रतिष्ठापनाय निपातानां सम्भूय आगमा भवन्ति, अर्थात् सरूपा विरूपा निपातास्तत्र यूथचरा इव निपतन्ति। इदमेव निपातानां निपातत्वम्। बृहद्देवताकृच्छौनकः पठति यत्—**'प्रयोजनवशा ह्येते निपात्यन्ते पदे पदे[2]'** इति सिद्धान्तस्याप्यत्रैव स्वारस्यम्।

इत्थं वैदिकभाषायां निपातानां व्यवहारान्, निरुक्ते प्रातिशाख्येषु च तेषां निर्वचनप्रकारांश्चामृश्य महामुनिपाणिनिस्मृतौ का परिभाषाऽस्ति निपातानाम् ? कथं च व्याकरोति महामुनिर्निपातपदानि ? किमर्थकाश्च सन्त्यष्टाध्याय्यां चादयः ? इत्येतान् प्रसङ्गोपात्तान् सन्दर्भानत्र विवेचयिष्यामि, यतो [3]ह्याधुनिकभाषाशास्त्रगवैषकै-र्निश्चीयते यन्निरुक्तपर्यन्तं कामं वैदिकी भाषा लोकवेदसंदेशवाहिकाऽऽसीत्, तस्या व्युत्पत्तिसम्बन्ध्यनुशासनान्यनुपलब्धवैदिकव्याकरणैरुपलब्धप्रातिशाख्यैर्निरुक्तैर्वा क्रियन्ते शाब्दिकैः।

१. सरस्वतीकण्ठाभरणम्—१।१।११८।
२. बृहद्देवता—२।९५। ३. संस्कृत लैंग्वेज—पृ० ४८।

निरुक्तादन्वैतिहासिकः परिवर्त्तो घटितो भाषाक्षेत्रे। या भाषा निरुक्तपर्यन्तं वैदिकीति संज्ञया व्यपदिश्यमानाऽऽसीत्, तस्याः संज्ञाऽपि निर्द्धारिताः शाब्दिकैर्लौकिकीति। शब्दानुशासनक्षेत्रे ये पारिभाषिकाः शब्दा अनुपदं कदाचित् प्रयोगपदवीमवतरन्ति स्म, तेऽप्यन्यथाकृत्वा व्यवहृता यास्काचार्यादर्वाचीनैर्वैय्याकरणैः। एतादृशस्यानन्यसाधारणस्य कार्यस्य कृते विरञ्चिपदत्वमलङ्कृतं महामुनिपाणिनिना।

वतुतः शब्दानुशासनस्य यादृशी रूपप्रतिमा विरचिताऽनेनाप्रतिमप्रज्ञावता, साऽप्रतिमेव सञ्जाता शाश्वतीः समाः। यः पदराशिर्वैदिकभाषायां चतुर्धा–नाम-आख्यात-उपसर्ग-निपातरूपेण विभक्त आसीत्, तदनेन सामान्यतया द्विधा विभाजितः[१]—सुबन्तरूपेण तिङन्तरूपेण च। ये वैदिकभाषायां निपातोपसर्गसंज्ञया व्यपदिष्टा आसन्, तेऽनेन सामान्यतयाऽव्ययसंज्ञयाऽभिहिताः[२], विशेषतया तु—निपात[३]-उपसर्ग[४]-गति[५]-कर्मप्रवचनीयसंज्ञाभिरुपदिष्टाः[६]। इत्थं ये शब्दाः श्रुतिसाहित्ये द्विधा निपात-उपसर्ग-रूपेणोपदिष्टा आसन्, तेषामवान्तरः पारिभाषिको विभागश्चतुर्धा निपात-उपसर्ग-गति-कर्मप्रवचनीयरूपेणोपपन्नः। अत्रावस्तात् तावत् पाणिनेश्चादिलक्षं विमर्शिष्यते।

**चादिलक्षणम्**

महामुनिपाणिनिर्निपातानां लक्षणमुपस्थापयन्नाह—**'चादयोऽसत्त्वे'**[७] इति। 'चादयोऽसत्त्वे' इति सूत्रं व्याचक्षाणो भट्टोजिदीक्षितो विवृणोति यत्—अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः' इति। चादिसूत्रान्तर्गतस्यासत्त्वपदस्य व्याख्यानं तु विविधा आचार्या विविधं कुर्वन्ति। महामुनिः पतञ्जलिर्व्याकरोति यत्—**'सत्त्वशब्दः**[८] **द्रव्यपदार्थकः'**। अर्थाल्लिङ्गसंख्याकारकान्वितं द्रव्यं सत्त्वपदेन व्यपदिश्यते। ये शब्दा लिङ्गविरहिताः, सङ्ख्याविरहिताः, कारकसङ्ख्याविरहिताश्च व्यवह्रियन्ते, त एवाव्ययपदैः, असत्त्वपदैः, निपातपदैर्वा व्यपदिश्यन्ते। अत एव के सत्त्वगुणा इति प्रश्नं समादधताऽऽचार्यपतञ्जलिनाऽन्यत्रोद्‌घोष्यते यत्—**'स्त्री**[९] **पुंनपुंसकानि सत्त्वगुणाः, एकत्वद्वित्वबहुत्वानि च। एतानर्थान् केचिद् वियन्ति, केचिन्न वियन्ति। ये न वियन्ति, तदव्ययम्'** इति।

भाष्याकारस्याशयः संवदताऽऽचार्यकैयटेन परिभाषितं यत्[१०]—**'द्रव्यशब्देन चात्र सिद्धरूपं वस्त्वभिधीयते'** इति। अर्थाद् ये शब्दा द्रव्यमूर्तिनिबन्धना ये च बाह्यस्थूलवस्त्वनुविद्धास्त एव सत्त्ववचनाः। ये च तद् भिन्नास्तेऽसत्त्ववचनाः। अत एव ते चादिपदभाजः। अमुमेवार्थं स्पष्टयन् जिनेन्द्रबुद्धिर्विशदयति

---

१. 'सुप्तिङन्तं पदम्' (अष्टा० १।४।१४)। २. अष्टा० १।१।३८।
३. तदेव—१।४।५७। ४. तदेव—१।४।५९। ५. तदेव—१४।६०।
६. तदेव—१।४।८२। ७. तदेव—१।४।५७।
८. महाभाष्यम्—१।४।५७। ९. महाभाष्यम्—१।१।३७।
१०. म० भा० प्रदीपः—१।१।५७।

यत्—'सत्त्वशब्दोऽयमिह सत्तायां वर्तत इति कस्यचिद् भ्रान्तिः स्यात्। अतस्तां निराकर्तुमाह—सत्त्वमिति च द्रव्यमुच्यत इति। चशब्दोऽवधारणे। द्रव्यमेव न सत्तेत्यर्थः। यदि ह्यत्र सत्त्वशब्देन सत्तोच्यते प्रतिषेधोऽनर्थकः स्यात्। न हि चादिषु मध्ये शब्दः सत्तावाची कश्चिदस्ति। तस्माद् द्रव्यमेवोच्यते[1]' इति।

**निपातोपसर्गादीनां सत्त्वासत्त्वसमीक्षणम्**

एवमत्र निर्गलितार्थरूपेण वक्तुं पार्यते यद् लिङ्गसङ्ख्याकारकान्वितद्रव्य-निबन्धनाः शब्दाः सत्त्ववचनाः, भावप्रत्ययमात्रानुविद्धाश्चासत्त्ववचना इति। अत्रैतद-वधातव्यमस्ति यद् यल्लक्षणं चादीनां क्रियते, तदेवाव्ययानाम्, अर्थाद्यथा चादयो लिङ्गसङ्ख्याशक्तिमन्तो भवन्ति, तथैवाव्ययान्यपि। अव्ययलक्षणं कुर्वता महाभाष्य-कारेणोदघोषि यत्—'अव्ययादापो लुग्वचनमनर्थकम्। किं कारणम्? लिङ्गाभावात्। अलिङ्गमव्ययम्। किमिदं भवान् सुपो लुक् मृष्यति, आपो लुकं न मृष्यति? यथैव हि अलिङ्गमव्ययमेवमसंख्यमपि। सत्यमेवमेतत्[2]' इति।

भोजराजस्तु शृङ्गारप्रकाश उपबृंहयति यच्चादयः स्वरादयश्च प्रायेण द्विधा भवन्ति—'सत्त्वगन्धीनि, असत्त्वगन्धीनि च[3]' इति।

**(१) सत्त्वगन्धीनि षोढा**

(क) द्रव्यरूपाणि, तद्यथा—स्वः, दिवः, भुवः, विहायसा।
(ख) गुणरूपाणि—शश्वत्, भवत्, नृवत्, सामि इत्यादीनि।
(ग) क्रियारूपाणि—नमः, स्वस्ति, स्वाहा, स्वधा इत्यादीनि।
(घ) जातिरूपाणि—सायम्, प्रातः, अस्तम्, नक्तम् इत्यादीनि।
(ङ) संज्ञारूपाणि—ओम्, स्वाहा, ह्रां, ह्रीं, दिङ् इत्यादीनि।
(च) सम्बन्धिरूपाणि च—अन्तः, अन्तरा, बहिः, पारे, पुर इत्यादीनि।

**(२) असत्त्वगन्धीन्यपि षोढैव**

(क) क्रियापेक्षीणि—द्वन्द्वम्, यथायथम्, मिथः, अन्योन्यम् इत्यादीनि।
(ख) क्रियाद्रव्यापेक्षीणि—साकम्, सार्धम्, सह, समम् इत्यादीनि।
(ग) क्रियाविशेषणानि—अभीक्ष्णम्, मुहुः, पुनः, युगपत् इत्यादीनि।
(घ) क्रियाद्रव्यविशेषणानि—अलम्, बलवत्, सुष्ठु, मृषा इत्यादीनि।
(ङ) क्रियाविष्टरूपाणि—सपदि, संप्रति, पुरा, सना इत्यादीनि।
(च) क्रियाद्रव्याविष्टरूपाणि च—आविः, प्रादुः, तिरः इत्यादीनि।

अर्थाच्चादिष्वपि केचन सत्त्वगन्धिनः केचन चासत्त्वगन्धिनः। तथैवाव्ययेष्वपि कानिचित् सत्त्वगन्धीनि कानिचिच्चासत्त्वगन्धीनीति। अत एव केचन चादयो लिङ्ग-संख्याशक्तिमन्तो भवन्ति, अव्ययान्यपि कानिचिल्लिङ्गसंख्याशक्तिमन्ति भवन्तीति।

---

१. म० भा०—१।१।५७। २. महाभाष्यम्—२।४।८२।
३. शृङ्गारप्रकाशः—१, पृ० ८।

एतस्मिन्नेव सन्दर्भे भोजराजः पुनः स्पष्टयति यत्—'तत्रास्तीति[१] निपातो विभक्तिप्रतिरूप इति कालं पुरुषं संख्यां साधनं च न व्यभिचरति। उच्चैः शब्दस्यापि सत्त्ववचनत्वं दृश्यते—**'किं पुनर्यस्तथोच्चैः**[२]' इति। अत एवैताभ्यामस्तितोच्चैस्त्वमिति भावप्रत्यया अपि भवन्ति' इति। एवं भोजराजानुसारं निपाताव्ययेष्वपि द्रव्यसामर्थ्यमुपोह्यते। अत एव तेन सत्त्वपदसामर्थ्यमुपपादयतोद्घोषितं यत्—'अन्यपद इतीयत्युच्यमाने पदे वृत्त्यसंभवात् पदसहचरितां यां काञ्चिदर्थमात्रां पदशब्दो लक्षयेत, पदत्वस्य वा निमित्तत्वेन प्रत्यासन्नोपकारिणं विभक्त्यर्थं प्रत्याययेत्, सोऽयमेवं सिद्धे समीहिते यदर्थग्रहणं करोति तेनैतद् ज्ञापयति—यावानर्थश्रुतेः पदविषयोऽर्थः प्रतीयते, तावान् सर्वोऽपि त्यागनिमित्ताभावादुपादीयत इति। अपि च, पदमर्थस्य परिच्छेदायोपादीयते, अर्था हि प्रकृत्यादीनां सामान्येन प्रसक्ताः पदेनावच्छिद्यन्ते, पदावधिकोऽर्थ उपादेय इति, तत्र यथा वाक्यार्थस्यानाश्रयणमाधिक्यात्, तथा पदार्थैकदेशस्यापि, न्यूनत्वात्। तदेवमर्थग्रहणसामर्थ्यात् सलिङ्गः ससंख्यः सद्रव्यश्च समर्थः पदार्थ उपादीयते'[३] इति।

इत्थम्—'सलिङ्गः ससंख्यः सद्रव्यश्च समर्थः पदार्थः' इति सत्त्वगन्धिपदार्थलक्षणे सुनिश्चिते सति निपाताव्ययेष्वपि तानि सङ्घटन्त इत्यवधेयम्। अत एव पदार्थनिर्धारणविधौ क्वचिद् दशधा क्वचिच्च द्वादशधा विधय आश्रीयन्त इति सङ्ग्रहकारभोजौ निगदतः। तद्यथा—'शास्त्रव्यवहारविषयेण तु परिकल्पितविभागेनार्थे धातुप्रातिपदिकप्रत्ययनिपातानामर्थवत्ता प्रतिज्ञायते। तदुभयं परिगृह्य—'दशधा अर्थवत्ता स्वभावभेदिका इति संग्रहे पठितम्[४]' इति।

भोजराजोऽपि समादधाति यत्—'कोऽर्थः ? यः शब्देन प्रत्याय्यते। स च द्वादशधा[५]—क्रिया, कालः, कारकता, पुरुषः, उपाधिः, प्रधानम्, उपस्कारार्थः, प्रातिपदिकार्थः, विभक्त्यर्थः, वृत्त्यर्थः, पदार्थः, वाक्यार्थ इति' इत्येतानि द्वादशोपादानकारणानि सन्ति वाक्यार्थसमुदायस्य। तस्मिन् वाक्यार्थे समेषामेतेषामुपादानकारणानामर्थसमर्पणं भवति। तत्र निपातोपसर्गाव्ययानामप्यर्थसहकारोऽपेक्ष्यते।

एवं हि दृश्यन्ते निपाताव्ययानां लक्षणेषु व्यवहारेषु च मिथो विसंवादाः। अतोऽत्र तुलाबोधकेषु च पृष्ठेषु तेऽवलोकनीयाः। केचनाचार्याः प्रतिपादयन्ति यन्निपाता असत्त्ववचनाः, अव्ययानि तु सत्त्ववचनानि। केचन प्रतिपादयन्ति यत् केचन निपाताः सत्त्ववचनाः, कानिचिदव्ययान्यपि सत्त्वगन्धीनीति। केचन व्यपदिशन्ति यत् सर्वे निपाताः सर्वाण्यव्ययानि चासत्त्वगन्धीनीति।

---

१. शृङ्गारप्रकाशः—१, पृ० ३४। २. मेघसन्देशः—१७।

३. शृङ्गारप्रकाशः—१, पृ० ३१।

४. वाक्यपदीयम्—परिशिष्टे—७, पृ० ४४८, पूनाविश्वविद्यालयेन प्रकाशितम्—१९६५।

५. शृङ्गारप्रकाशः—१, पृ० ४।

अत्रावस्तात् पाणिनि-भोजराज-हेमचन्द्र-माधवभट्ट-सम्मतो निपातक्रमपाठो द्रष्टव्यः—

| | पाणिनीयपाठः[1] | भोजीयपाठः[2] | हैमीयपाठः[3] | माधवीयपाठः[4] |
|---|---|---|---|---|
| १. | अ | अ | .... | अङ्ग |
| २. | अङ्ग | अकस्मात् | अघोस् | अच्छा |
| ३. | अच्छ | अग्रे | अङ्गरे | अति |
| ४. | अथ | अद्यो | अङ्यो | अथ |
| ५. | अथो | अङ्ग | अट् | अथो |
| ६. | अदल् | अत् | अड् | अद्धा |
| ७. | अध | अथ | अति | अद्य |
| ८. | अधस् | अथकिम् | अथ | अध |
| ९. | अद्धा | अथो | अथकिम् | अन्तरा |
| १०. | अनु | अध | अथो | अन्तिकम् |
| ११. | अनुकम् | अन्तरेण | अद् | अपि |
| १२. | अनुषट् | अन्यत् | अध | अमा |
| १३. | अन्त | अन्यत्र | अधि | अरम् |
| १४. | अम् | अन्योन्यस्य | अनु | अहः |
| १५. | अये | अवे | अनुषक् | आत् |
| १३. | अरे | अमा | अन्यत् | आनुषक् |
| १७. | अले | अयि | अन्यत्र | आरत् |
| १८. | अव | अये | अप | आरे |
| १९. | असि | अररे | अपि | आशु |
| २०. | अस्मि | अलम् | अभि | इत् |
| २१. | अह् | असि | अमा | इति |
| २२. | अहो | अस्ति | अयि | इत्था |
| २३. | आकीम् | अस्तु | अये | इव |
| २४. | अङ्ग | अस्मि | अररे | इह |
| २५. | आनुषक् | अह | अरे | ईम् |

१. पाणिनीयो गणपाठः पृ० ६८५ ।

२. सरस्वतीकण्ठाभरणम्—१।१।११८-२६—हृदयहारिणीव्याख्यायुतम् ।

३. सिद्धहेमशब्दानुशासनम्—१।१।३१—स्वोपज्ञवृत्तियुतम् ।

४. ऋग्वेदानुक्रमणी—३।१।१-११ ।

| | | | | |
|---|---|---|---|---|
| ९२. | द्यौ | चिरस्य | तावत् | शश्वत् |
| ९३. | धिक् | चिरात् | तु | शीभम् |
| ९४. | नकिम् | चिराय | तुन्वै | श्रत् |
| ९५. | नकिर् | चिरेण | त्वाव | श्रौषट् |
| ९६. | नकीस् | चेत् | त्वावत् | सचा |
| ९७. | नचेत् | छंवट् | त्वै | सत्रा |
| ९८. | नञ् | जातु | दिष्ट्या (द्य) | सदम् |
| ९९. | ननु | तत् | न | सद्यः |
| १००. | नह | तथा | नकिस् | सना |
| १०१. | नहि | तावत् | नचेत् | सनात् |
| १०२. | नहिकम् | तु | नञ् | सनुतः |
| १०३. | ना | तुवै | ननु | सम् |
| १०४. | नु | ते | नवा | सस्वः |
| १०५. | नुकम् | तेन | नवै | सह |
| १०६. | नुवै | त्वाव | नह | साकम् |
| १०७. | नूनम् | त्वै | नहवै | सामि |
| १०८. | नेत् | दिष्ट्या | नहि | सायम् |
| १०९. | नो | न | नहिकम् | सीम् |
| ११०. | नो चेत् | नकिम् | नाम | सु |
| १११. | नौ > नो | नञ् | नि | सुष्ठु |
| ११२. | न्वै | ननु | निस् | स्म |
| ११३. | परा | नयाति | नु | स्मत् |
| ११४. | पशु | नवर्तंत | नुकम् | स्वः |
| ११५. | पाट् | नवा | नुवै | स्वयम् |
| ११६. | प्याट् | नवै | नूनम् | स्वस्ति |
| ११७. | फट् | नह | नेत् | स्वाहा |
| ११८. | बत | नहवै | नो | स्वित् |
| ११९. | बाट् | नहि | नोहि | ह |
| १२०. | ब्रूहि | नहिकम् | न्वाव | हन्त |
| १२१. | भाजक् | नाम | न्वावत् | हि |
| १२२. | भूयस् | नास्ति | न्वै | हिङ् |
| १२३. | म | नु | पट् | हिरुक् |
| १२४. | मन्ये | नुकम् | परा | हुरुक् |

| | | | | |
|---|---|---|---|---|
| १२५. | मा > माङ् | नुवै | परि | ह्यः |
| १२६. | माकिम् | नूनम् | पशु | .... |
| १२७. | माकिर् | नेत् | पाट् | .... |
| १२८. | माकीम् | नो | पुद् | .... |
| १२९. | माङ् > मा | न्वै | पुरा | .... |
| १३०. | मात्रायाम् | पर्याप्तम् | प्र | .... |
| १३१. | मिथ्या | पशु | प्रति | .... |
| १३२. | मुधा | पश्य | प्रत्युत | .... |
| १३३. | यत् | पश्यत् | प्याट् | .... |
| १३४. | यत्र | पाट् | फट् | .... |
| १३५. | यथा | पुत् | बत | .... |
| १३६. | यम् | पुरा | बाह्या | .... |
| १३७. | यावत् | पूर्यंते | भगोस् | .... |
| १३८. | युगपत् | प्याट् | भोस् | .... |
| १३९. | रे | प्रगे | मर्या | .... |
| १४०. | रै | प्रत्युत | मा | .... |
| १४१. | वट् | प्राह्णे | माकिम् | .... |
| १४२. | वत् | फट् | माङ् | .... |
| १४३. | वध्वा < वधा | बट् | यच्च | .... |
| १४४. | वन (चन) | बत | यत्र | .... |
| १४५. | वव | बाट् | यथा | .... |
| १४६. | वशम् | ब्रूहि | यथाकथा च | .... |
| १४७. | वषट् | भगो | यद् | .... |
| १४८. | वा | भवति | यदा | .... |
| १४९. | वाकिर् | भवतु | यदि | .... |
| १५०. | वाट् | भो | यदिनाम | .... |
| १५१. | वात् | मन्ये | यदुत | .... |
| १५२. | वेलायाम् | मम | यावत् | .... |
| १५३. | वै | मर्या | रै | .... |
| १५४. | वौषट् | मा | वट् | .... |
| १५५. | शङ्के | माकिर् | वषट् | .... |
| १५६. | शम् | माङ् | वा | .... |
| १५७. | शश्वत् | मात्रायाम् | वाट् | |

| | | | | |
|---|---|---|---|---|
| | | | | .... |
| १५८. | शस् | मे | वाव | .... |
| १५९. | शिकम् | यच्च | वावत् | .... |
| १६०. | शुकम् | यत् | वि | .... |
| १६१. | श्रौषट् | यत्र | विषु | .... |
| १६२. | श्वंकम् | यथा | वेट् | .... |
| १६३. | सत्यम् | यथाकथा च | वै | .... |
| १६४. | सनात् | यदा | वौषट् | .... |
| १६५. | सनुतर् | यदि | शप् | .... |
| १६६. | सम् | यदिनाम | शव | .... |
| १६७. | सह | यदुत | शश्वत | .... |
| १६८. | सि | याति | शुकम् | .... |
| १६९. | सिम् | यावत् | श्रौषट् | .... |
| १७०. | सीम् | येन | सत्रा | .... |
| १७१. | सु | रात्रौ | सम् | .... |
| १७२. | सुक् | रै | समम् | .... |
| १७३. | सुकम् | वर्तंत | सह | .... |
| १७४. | सुष्ठु | वषट् | साकम् | .... |
| १७५. | सूपत् | वा | सार्धम् | .... |
| १७६. | स्म | वाव | सीम् | .... |
| १७७. | स्वधा | विद्यते | सु | .... |
| १७८. | स्वाहा | विषु | सुकम् | .... |
| १७९. | ह | वेलायाम् | सुञ् | .... |
| १८०. | हन्त | वै | सूपत् | .... |
| १८१. | हद्दे (हे है) | वौषट् | स्म | .... |
| १८२. | हा | शङ्के | स्वधा | .... |
| १८३. | हाहा | शप् | स्वाहा | .... |
| १८४. | हाहौ | शश्वत् | स्विद् | .... |
| १८५. | हिनुक् | शुकम् | ह | .... |
| १८६. | हुम् | शुभम् | हन्त | .... |
| १८७. | हे | सत्रा | हम् | .... |
| १८८. | हे>है | समम् | हये | .... |
| १८९. | हो | सह | हा | .... |
| १९०. | है (हे है) | साकम् | हि | |

| | | | | |
|---|---|---|---|---|
| १९१. | है है | सार्धम् | हिकम् | .... |
| १९२. | .... | सीम् | हिम् | .... |
| १९३. | .... | सुकम् | ही | .... |
| १९४. | .... | सुञ् | हुम् | .... |
| १९५. | .... | सूपत् | हे | .... |
| १९६. | .... | स्म | हो | .... |
| १९७. | .... | स्यात् | है | .... |
| १९८. | .... | स्वधा | हंहो | .... |
| १९९. | .... | स्वाहा | हुँफट् | .... |
| २००. | .... | स्वित् | .... | .... |
| २०१. | .... | ह | .... | .... |
| २०२. | .... | हन्त | .... | .... |
| २०३. | .... | हम् | .... | .... |
| २०४. | .... | हये | .... | .... |
| २०५. | .... | हा | .... | .... |
| २०६. | .... | हि | .... | .... |
| २०७. | .... | हिम् | .... | .... |
| २०८. | .... | ही | .... | .... |
| २०९. | .... | हुम् | .... | .... |
| २१०. | .... | हे | .... | .... |
| २११. | .... | हेतौ | .... | .... |

एवं मिथो निपातक्रमपाठे विसंवादस्य सुष्ठु निदर्शनं प्रस्तौति नारायणभट्टः[1]। तथा हि—

स्वराद्याश्चाव्ययीभावा निपातास्तुमुनादयः।
नानञ् प्रकृतयश्चेति पञ्चधाऽव्ययसंग्रहः॥
स्वरादयोऽत्र सत्त्वार्था अव्ययीभावकेष्वपि।
उपकुम्भादयश्चेति देशाद्यर्थपरत्वतः॥
असत्त्ववचनास्त्वन्ये निपाताद्यास्त्रयो मताः।
निपाता द्योतका अन्ये वाचकास्त्विति भिद्यते॥
निपातैर्धर्ममात्रं हि नामाख्यातेषु सूच्यते।
अत्यन्तानर्थकाश्चैके निपातास्तेषु भाष्यकृत्॥

१. प्रक्रियासर्वस्वम्–स्वरादिप्रकरणे—पृ० १९१।

अर्थवत्कार्यमस्त्येवेत्यर्थवत्सूत्र ऊचिवान् ।
सर्वाव्ययानां तुल्यैव लिङ्गसंख्यादिहीनता ॥
असत्त्ववचनानां तु कारकं न च विद्यते ।
कारकार्हं स्वरूपं हि द्रव्याख्यं सत्त्वमुच्यते ॥
त्रेधा त्वसत्त्ववाचित्वं क्वचिदर्थस्वभावतः ।
साध्यक्रियाप्रधानत्वाद् विभक्त्यर्थपरत्वतः ॥
निपाते तुमुनादौ च तसिलादिषु चोह्यताम् ।
नानात्रोश्चाव्ययीभावे निपातार्थत्वतो हि तत् ॥
एवं स्थिते तु सत्त्वार्थात् कर्मत्वादौ विभक्तयः ।
भवन्ति किन्त्वव्ययत्वात् सप्तैकवचनानि तु ॥
सामान्येनैकवचनं निस्संख्येष्वपि हि स्थितम् ।
असत्त्ववचनानां तु कर्मत्वादेरसम्भवात् ॥
सप्तैकवचनीप्राप्ते स्यान्निपातादिवन्न किम् ।
आस्तामेतद्यथार्हं तु सुपि जाते ततो लुकि ॥
न व्येति विविधं नैति रूपभेदादतोऽव्ययम् ।
तदन्तेऽप्यव्ययत्वं स्यात् परमस्वः सुराः स्थिताः ॥
अनन्ताः खल्वनन्तार्थाः स्वराद्याश्चादयोऽपि च ।
असत्त्वपरतैवात्र चादीनां नियता मता ॥
द्योतकत्वं क्वचिन्नास्ति वाचकास्त्वादहादयः ।
तद्धितश्चेति सूत्रे तु हरदत्तोऽन्यथाऽब्रवीत् ॥
संख्याकारकयोर्यत्र सम्भवस्तत्र वै सुपाम् ।
तदर्थनियमोऽन्यत्र भवन्त्यर्थं विनाऽपि ते ॥
सामान्येनैकवचनं चोक्तं तेन स्वमादयः ।
सप्ताऽपि स्युरसत्त्वार्थाद् यथेष्टमिति तन्मतम् ॥
आदिभातिक्रमे कारणाभावात् प्रथमैव हि ।
इत्युक्त्वा कैयटोऽप्याह सप्तकोत्पत्तिमप्यमूम् ॥
अस्मिन् पक्षेऽव्ययीभावाद् भवेदधितटादिति ।
तथा तृतीयासप्तम्योस्तद्युक्तं वेति चिन्त्यताम् ॥
किञ्चानव्ययरूपेऽपि शब्दे साध्यक्रियार्थके ।

एतेषां नारायणप्रणीतश्लोकानां तोलनात्मकेन पर्यवेक्षणेन कानिचित् तथ्यानि पुरः समायान्ति निपाताव्ययानां सिद्धान्तसन्दर्भे विनियोगसन्दर्भे च—

(क) अव्ययसंज्ञा तावद् व्यापकसंज्ञा । विभिन्नवर्गीया लिङ्गसङ्ख्याकारक-विभक्तिविरहिताः शब्दा अव्ययेषु संख्यायन्ते ।

(ख) अव्ययानि तु शब्दरूपप्रतिमोपचयापचयशून्यानि, अत एव लिङ्ग-सङ्ख्याकारकविभक्तिविरहितानि भवन्ति ।

(ग) न हि भाषायां कार्यप्रवृत्तिनिवृत्तिमूलिकानि भवन्त्यव्ययानि, कार्योपयिको विनियोगस्तु निपातोपसर्गाणामेव भवति ।

(घ) निपाताव्ययानां सङ्ख्याविभक्तिलाभे, सत्त्वासत्त्वनिर्णये च नैकविधः कश्चित् पन्था आश्रीयते शाब्दिकैः ।

(ङ) निपाताव्ययोपसर्गाणां पृथक् पृथक् संख्यानिर्धारणप्रसङ्गे दृश्यन्ते भूयांसो विसंवादाः ।

(च) निपाताव्ययोपसर्गा द्योतका वाचका वेति विषयेऽन्योन्यं विसंवादा इति मन्यन्ते शाब्दिकाः ।

(छ) पदमञ्जरीकारो हरदत्तमिश्रस्तु नाङ्गीकरोति निपातव्ययोपसर्गाणां लिङ्ग-संख्याकारकविभक्तिराहित्यम् ।

**निपाताव्ययोपसर्गाणामन्योन्यसंसक्तवृत्तिमत्वम्**

पुरस्तान्निर्दिष्टानीमानि तथ्यानि समुपस्थापितानि नारायणभट्टेन कतिपयैः श्लोकैः । न हि कश्चिद् विसंवादरहितो निर्णयो निरणायि नारायणभट्टेन । वस्तुतो निपाताव्ययोपसर्गाणां सिद्धान्तविषये च संशयहेतुस्तु संस्कृतवाङ्मयस्य द्विविधो विभाग एवाङ्गीक्रियते शाब्दिकैः । संस्कृतभाषा कामं द्विधा विभक्ता दृश्यते[1]–वैदिकी, लौकिकीति च । वैदिकभाषासङ्घटकानि तत्त्वानि भिन्नानि, लौकिकभाषाया भिन्नानि । शब्दानां प्रयोगविषये वेदेष्वन्या परम्पराऽऽमृश्यते, लौकिकसंस्कृतेऽन्या । अत एव निपातोपसर्गा लौकिकसंस्कृतेऽव्ययसंज्ञया व्यपदिष्टाः, ये श्रुतिभाषायां निपातो-पसर्गसंज्ञया । किं बहुना, लौकिकसंस्कृतभाषायामपि केचन निपातोपसर्गाः कुत्रचिद् निपातोपसर्गसंज्ञया व्याख्याताः, कुत्रचित् त्वव्ययसंज्ञया । अत्रावस्तादन्योन्यसंसक्त-वृत्तीनां निपाताव्ययोपसर्गाणां व्यवहाराः प्रस्तूयन्ते—

| निपाताः | अव्ययानि |
|---|---|
| (१) अध = सम्प्रत्यर्थे[2] | अध = आनन्तर्यार्थे[3] |
| (२) अस्ति = सत्तार्थे, धनार्थे[4] च | अस्ति = सत्तार्थे[5] |
| (३) मा = निषेधार्थे[6] | मा = प्रतिषेधार्थे[7] |

१. संस्कृत लैंग्वेज–पृ० १४३ । २. ऋ० सं० ८।९८।७, सायणभाष्यम् ।
३. शुक्लयजुर्वेदः–१५।४५, महीधरभाष्यम् । ४. न्यासः–४।३।५६ ।
५. महाभाष्यम्–२।२।२४ ।
६. ऋ० सं०–५।३२।१३, सायणभा०, वाररुचनिरुक्तसमुच्चयः–२।१० ।
७. शुक्लयजुर्वेदः–३।३०–उव्वटाचार्यभाष्यम् ।

(४) विश्वाहा = सर्वेष्वहःस्वित्यर्थे[१] विश्वाहा = सर्वदा इत्यर्थे[२]
(५) वृथक् = पृथगर्थे[३] वृथक् = मृषार्थे[४]
(६) सामि = अर्धशब्दार्थे, मध्यार्थे[५] च सामि = अर्धशब्दार्थे[६]
(७) सुमत् = स्वयमित्यर्थे[७] सुमत् = स्वयमित्यर्थे[८]
(८) स्यात् = अनेकान्तार्थे[९] स्यात् = सज्जेदित्यथ, यद्यर्थे[१०] च
(९) स्वगा = यथायथमित्यर्थे[११] स्वगा = स्वागतार्थे[१२]
(१०) स्वस्ति = मङ्गलार्थे[१३] स्वस्ति = क्षेमार्थे[१४]

अत्र पुरस्ताद्ये शब्दा उदाहृतास्ते निपातेष्वपि द्रष्टुं शक्याः, अव्ययेष्वपि। न हि कश्चिद् विमर्शप्रधानो विवेकोऽवलोक्यत एतेषां प्रयोगे। केचन वैदिका भाष्यकर्तारो यान् शब्दान् निपातत्वेन व्याख्याताः तानेवान्ये भाष्यकारा अव्ययत्वेन व्याकुर्वन्ति स्म। उभयोः परम्परयोः शब्दानामर्था अपि परस्परं विसंवादिनः। अत एव नाट्यपरिशिष्ट-व्याख्यात्रा अजितनाथेन व्याख्यायि किलाव्ययपदं यत्—'अव्ययानाम् = प्रपराद्यु-पसर्गाणां भूर्यर्थाः सन्ति, गत्यारम्भ उत्कर्ष इत्यादयोनेकार्थाः सन्ति[१५]', अर्थाद् अजित-नाथो व्यवस्थापयति यत् प्रपराद्युपसर्गाणां गतीनां च भूर्यर्थाः = विविधार्था भवन्ति।

अपरमपि तथ्यं सोऽङ्गीकरोति यन्निपातोपसर्गगतिकर्मप्रवचनीयानां सङ्घात एवाव्ययप्रतिमा। नह्यव्ययानि निपातोपसर्गव्यतिरिक्तानि भवन्ति। कुत्रचिद् वैय्याकरणा व्याकुर्वन्ति यदव्ययान्येव पदानि निपातोपसर्गपदभाञ्जि भवन्ति; कुत्रचिच्चाङ्गी-कुर्वन्ति यन्निपातसंज्ञामूलिकैवाव्ययसंज्ञेति। निपाता भवन्त एव शब्दा अव्ययरूपता-माप्नुवन्ति। उद्घोषयति च महाभाष्यकारो यन्निपाता भवन्त एव शब्दा अव्ययत्व-मूरीकुर्वन्ति—'कथमव्ययत्वम्? उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा। निपातोऽव्ययमित्यव्यय संज्ञा[१६]' इति।

---

१. ऋ० सं०—१।२५।१२, १।२५।१५, स्कन्दभाष्यम्।
२. ऋ० सं०—४।४३।१०, सायणभाष्यम्। ३. तै० सं० १।४।७, भट्टभास्करभाष्यम्।
४. ऋ० सं०—८।३४।४ सायणभाष्यम्।
५. ऋ० सं०—१।२५।१५, स्कन्दभाष्यम्, शतपथब्रा०—१।३।१।२०।
६. ऋ० सं०—१।३९।९, सायणभाष्यम्; कुमारसम्भवम्—८।६४।
७. निरुक्तम्—६।२-२ महेश्वरभाष्यम्। ८. शुक्लयजुर्वेदः—२५।३०, महीधरभाष्यम्।
९. अनेकार्थनाममाला—४४ धनञ्जयकृता—अमरकीर्तिभाष्ययुता।
१०. महाभारतम्—४।८ वनपर्वणि—नीलकण्ठः। ११. तै० सं० १।४।४४—भट्टभास्करभाष्यम्।
१२. शतपथब्रा०—१।८।३।११—हरिस्वामिभाष्यम्।
१३. अथर्ववेदः—७।३०।१—सायणभाष्यम्। १४. ऋ० सं०—२।३८।१—सायणभाष्यम्।
१५ कृष्णानन्दसरस्वतीविरचितं नाट्यपरिशिष्टम्—पृ० ४। १६. महाभाष्यम्—३।२।८४।

एवमेव रायमुकुटोऽपि पदचन्द्रिकायमेकस्यैव **'विषु'**शब्दस्यैकस्मिन्नेव प्रसङ्गे निपातसंज्ञाऽव्ययसंज्ञा च निश्चिनोति। तद्यथा—"विषु[1] नानार्थे प्रथने स्यादिति वोपालितः। न्यासेऽपि 'लोमादि'[2] सूत्रे विषुशब्दो नानार्थो निपातो मूर्धन्यान्तो दर्शितः। 'पामादित्वात्'[3] नप्रत्यये 'विषुण' इति णत्वदर्शनात्। विष्वञ्चतीति क्विपि कुत्वे विपुची नानाञ्चन्ती सेनाऽस्येति 'विष्वक्सेनः। विषु सर्वतोऽर्थेऽव्ययम्" इति। व्याख्याने अस्मिन्नेकत्र **'विषु'**शब्दो निपातत्वेन व्याख्यातोऽन्यत्राव्ययत्वेन। अपरत्रान्यस्मिन् सन्दर्भे **'अप'** इत्युपसर्गोऽपि प्रसङ्गतो निपातत्वेनाव्ययत्वेन च व्याक्रियते स्म राय-मुकुटेन। तथा च—'शब्दानुशासने अपभ्रष्टः शब्दः अपशब्दः', निपातस्यानेकार्थत्वात्। अत्र अपशब्दोऽसंस्कृतार्थः। अपेत्यव्ययं कुत्सायाम्। तथा च—"कुत्सितश्चारोऽपचारः' इति परिन्योर्नीणोः'[4] इति सूत्रे न्यासः। पुनरन्यत्र **'हण्डे'**, **'हञ्जे'**, **'हला'** इति शब्दानां व्याख्यानावसरे अव्ययत्वेन तान् विवृणोति—'नाट्योक्तौ[5] नीचं प्रत्याह्वाने 'हण्डे' इति। चेटीं प्रत्याह्वाने 'हञ्जे' इति। सखीनां प्रत्याह्वाने 'हला' इति त्रयमेवाव्ययम्। अधमदासीसखीनामाह्वानस्य क्रमणैकैकम्" इति। एतानेव—हण्डे-हञ्जे-हलाशब्दान् लक्ष्मीधरः[6] षड्भाषाचन्द्रिकायां निपातत्वेन व्याकरोति स्म।

बहुत्र तु निपाताव्ययशब्दाः पर्यायत्वेन व्यवहृताः शाब्दिकैः। लक्षणनिर्धारणकाले यः पदराशिः शाब्दिकैरव्ययपदेनाभ्यधायि, व्याख्याकाले स एव पदराशिर्निपातपदेन व्यपदिष्टः—'एषां चाव्ययानामर्थकथनमुपलक्षणमात्रम्[7]। अन्यथा भूयांसोऽप्यर्था सन्ति। यदाहुः—

निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम्॥ इति।

अत्र महेन्द्रसूरिणाऽव्ययान्याश्रित्य तेषामर्था भूयांसो व्यपदिष्टाः, किन्तूदाहरण-रूपेण यः श्लोकस्तेनोदाहृतः, तस्मिन् परिसंख्यानं तु—निपात-उपसर्ग-धातूनामेवास्ति। सन्दर्भोऽयं महाभाष्यकारवचनेन संवदति यत्—'आम्रान्पृष्टः कोविदारानाचष्टे' इति।

एवं सम्पूर्णे संस्कृतसाहित्ये विशषतो महामुनिपाणिन्यनुशासननियन्त्रितायां भाषायां निपाताव्ययानां व्यवहारे लक्षणे च कञ्चन प्रविवेकं नोपलभामहे। वैदिक-भाषायां तु पदविभाग एवान्यथोपलभ्यते, अतस्तत्रैतेषां सिद्धान्ते विनियोगे च विसंवादस्यावकाश एव नोदेति। श्रुतिसाहित्येऽव्ययरूपविभागस्य विमर्श एव न

---

१. नामलिङ्गानुशासनम्–स्वर्गवर्गः–१३-१७।
२. अष्टा० ५।२।१००। ३. तदेव–५।२।१००। ४. तदेव–३।३।३७।
५. नामलिङ्गानुशासनम्–नाट्यवर्गः १९१–पदचन्द्रिकाव्याख्या।
६. षड्भाषाचन्द्रिका–२।१।५८।
७. हेमचन्द्रसूरिप्रणीतम्–निपातप्रकरणम्–महेन्द्रसूरिव्याख्यायुतम्।

क्रियते, तस्य कारणं त्विदमेवास्ति यत्तत्र निपातोपसर्गा अपि लिङ्गकारकसंख्या-विभक्तिमन्तोऽवलोक्यन्ते। निपातपदस्य व्याकृतिं कुर्वताऽऽधुनिकभाषाशास्त्रमर्मज्ञेन **डॉ० विद्यानिवासमिश्रेणैकदा** व्याख्यायि यत् 'येषां पदानां विभक्तयो निपतन्त्यः= पदेभ्यः स्खलन्त्य आसन्, तान्येव पदानि निपातसंज्ञां लेभिरे'। मिश्रमहोदयानामियं व्याख्या वैदिकभाषासन्दर्भे स्वाभाविकी यौक्तिकी च प्रतिभाति, यतो हि वैदिकभाषा-यामद्यापि निपातोपसर्गजुषः काचन विभक्तयो दृश्यन्ते। निपातोपसर्गैः सह वर्तमानानां विभक्तीनां सद्भावे कथमेतेषां शब्दानामव्ययपदलाभः स्यादित्यासीच्छाब्दिकानां समक्ष-मयं प्रश्नः। अत एव हि वैदिकशाब्दिकैर्नालोचि किलाव्ययपदम्।

**उपसर्गाणामाभिधानिकवैचित्र्याणि**

इत्थमन्योन्यसंसक्तप्रवृत्तिमतां निपाताव्ययानां लक्षणान्युदाहरणानि चालोच्य साम्प्रतमुपसर्गाणां विषये मीमांसा प्रस्तूयते। यतो ह्यैतिहासिके पदविभागे उपसर्गा-णामनन्यतमं स्थानमस्ति। ऋग्वेदसंहितायामेव चतुर्विधपदविभागमध्ये 'उपसर्गाः' अपि परिसंख्याताः सन्ति। ऋग्वेदस्य—**'चत्वारि वाक्परिमिता पदानि'**[1] इति मन्त्रं व्याचक्षाणेनाचार्ययास्केन निरुक्त उपापादि यत्—**'चत्वारि पदानि=नामाख्यातोपसर्ग-निपाताश्चेति वैयाकरणाः'**[2]। उपरि चर्चितस्य ऋग्वेदमन्त्रस्य स्कन्दभाष्यं दर्शं दर्शमेतत् कथितुं शक्यते यद् वैदिककाल एवाख्यातोपसर्गनिपातानामर्थाः प्रयोक्तॄणां बोद्धॄणां च दुरधिगमा इव सञ्जाताः। अत एव स्कन्दस्वामिनोल्लिखितं यत्—'तदेतदभेदेनेव हि चत्वारि वाचः परिमितानि पदानि, न पञ्चमम्। गवादीनि नामानि। कुतः? तेषां तत्त्वं सर्वमनुष्यैर्ज्ञायमानत्वात्। आख्यातोपसर्गनिपातास्त्वप्रसिद्धार्थत्वान्नार्थं सर्वे वदन्ति'[3] इति। अमुमेवाशयं श्लोकरूपेण प्रस्तौति दुर्गाचार्योऽपि। स विवृणोति यत्—'अत्र=वाङ्मये चतुर्विधपदेषु द्विविधस्यैवार्थनिर्णयः कर्तुं पार्यते। उपसर्गनिपाता-नामर्थनिर्णयस्तु संशयाधीनः' इति।

चतुर्विधपदेष्वत्र[4] द्विविधस्यार्थनिर्णयः।
क्रियते संशयोत्पत्तौ नोपसर्गनिपातयोः॥ इति।

एभिः सन्दर्भैर्निष्क्रष्टुं शक्यते यद् यथाकथोपसर्गनिपातानामर्थाः संस्कृतवाङ्मये प्रथमशताब्दीं यावद् बोधगम्या इवासन्। प्रसङ्गेऽस्मिन्नेतदाभाति यद् धातु-निपात-उपसर्गाणामनेकार्थता बह्वर्थता चैतेषां बोध्याभावादेव प्रथिताः। उपसर्गा यदाऽऽ-ख्यातोन्मुखा दृश्यन्ते, तदाप्युभयोराख्यातोपसर्गयोरन्तर्हितार्थत्वात् ते सर्वजन-बोध्यत्वाभावात् कल्प्यन्ते। परस्परसापेक्षयोराख्यातोपसर्गयोरैतिहासिकेन पर्यवेक्षणे[5]-नाधुनिकभाषाशास्त्रस्येदं तथ्यं पुष्टिमेति यद् भाषाया ऐतिहासिकप्रवाहे यदा शब्दाः

१. ऋ० सं०–१।१६४।४५।
२. निरुक्तम्–१३।९।
३. उद्गीथभाष्यम्–ऋ० सं० १।१६४।४५।
४. दुर्गव्याख्या–निरुक्तम्–१।१।
५. भाषा–पृ० २३८–३९।

तिरोहितार्था रिक्तार्था इव वा सञ्जायन्ते, तदा ते भाषायाः स्वाभाविकगत्याऽन्यैः शब्दैराश्लिष्यन्ते। आश्लेषेणानेन शब्दानां तिरोहितार्था उत्तभ्यन्ते। आख्यातोपसर्गयोराश्लेषोऽप्येतादृश एव प्रतिभाति। यतो हि बहुत्र प्रतिपाद्यते शाब्दिकैर्यद् धातवोऽनेकार्था भवन्ति[1]। तद्वदेवानेकत्रोपलभ्यते यत्—'निपाता[2] उपसर्गाश्चानेकार्था भवन्ति' इति। दृष्टान्तानामेतेषां तत्त्वार्थपार्यवसानिकेन गवेषणेन निश्चेतुं प्रभवामो यद् यदा कश्चिदर्थप्रत्ययः प्रत्यभिज्ञाऽनर्हो भवति, तदा तस्मिन् विकल्पमूलकानामर्थप्रत्ययानामारोपः क्रियते। शब्दानामनेकार्थता विधानस्यायमेव हेतुः। यास्कीयनिरुक्तेऽप्येकस्यैव शब्दस्यानेकविधा व्युत्पत्तयोऽपि प्रमाणयन्ति तथ्यमिदम्।

आचार्यपाणिनिस्तूपसर्गाणामेवं लक्षणं व्यवस्थापयति—'चादयोऽसत्त्वे'[3], तदनु 'प्रादयः'[4] इति। 'प्रादयः' इति सूत्रमुपबृंहयता भट्टोजिदीक्षितेनोल्लिखितं यत्—'अद्रव्यार्थाः[5] प्रादयस्तथा', अर्थाद् अद्रव्यार्थाः प्रादयोऽपि निपातसंज्ञका भवन्ति। 'प्रादयः' इति सूत्रं व्याचक्षाणेन महाभाष्यकारेणाप्यभ्यधायि यत्—'प्रादयोऽसत्त्ववचना[6] निपातसंज्ञा भवन्ति' इति। अर्थाद्यथा निपाताव्ययान्यसत्त्वगन्धीनि भवन्ति, तथैवोपसर्गा अपि। एतेनायाति यत् सत्त्वगन्धवत्त्वमेव पदानां लिङ्गकारकसंख्याविभक्तिनिर्णये हेतुः। सत्त्वाधीनं लिङ्गसंख्याविभक्तिभावत्वम्, लिङ्गसंख्याविभक्त्यधीनं शब्दानां वाचकत्वम्, लिङ्गसंख्याविभक्त्यभावे द्योतकत्वम्। अनया पद्धत्या निपाता अपि द्योतकाः, अव्ययान्यपि द्योतकानि, उपसर्गा अपि द्योतकाः। समानकक्षाः सर्व एते शब्दाः। भोजराजस्तूपसर्गाणां[7] षड्विधत्वं प्रतिपादयति। तद्यथा—

(क) वाचकाः—प्रगता ऋषभा अस्माद् वनात् प्रर्षभं वनम्। अपगतो मन्युरस्य अपमन्युः।

(ख) द्योतकाः—प्र + √स्था > प्रतिष्ठते, परा + √क्रम > पराक्रमते, अप + √कृ > अपकरोति, सम् + √क्रीड > संक्रीडति, अति + √शि > अतिशेते।

(ग) विशेषकाः—पलायते < परा + √अय > परायते > पलायते, संसरति < सम् + √सृ > संसरति।

(घ) सहाभिधायकाः—प्राणिति < प्र + √अन > प्राणिति, सम् + √ग्राम > संग्रामयते, विलोकते < वि + √लोक् > विलोकते।

---

१. न्यासः–७।३।४३; दुर्गासप्तशती–१।२३–शान्तनवीव्याख्या।
२. पदमञ्जरी–३।१०।१४०; उद्द्योतः–५।२।२७। ३. अष्टा०–१।४।५७।
४. अष्टा०–१।४।५८। ५. सिद्धान्तकौमुदी–सू० १।४।५८।
६. महाभाष्यम्–१।४।५८। ७. शृङ्गारप्रकाशः–१, पृ० १६–१८।

(ङ) कार्यार्थिकाः—विजयते <वि + √जय > विजयते, उपस्कुरुते <उप + √कृ > उपस्कुरुते।

(च) निरर्थकाः—प्रलम्बते <प्र + √लम्ब > प्रलम्बते, प्रसूयते <प्र + √सू > प्रसूयते, अपहरति <अप + √हृ > अपहरति, अध्यागच्छति <अधि + आ + √गम् > अध्यागच्छति।

एवं भोजराज उपसर्गाणां षड्विधत्वमुपवर्णयति स्म। वस्तुतो भोजस्य श्रेणिविभागस्तु शब्दानामर्थदृष्ट्यातिमहत्त्वमादधाति। अत एव भरतमल्लिक उपसर्गवृत्त्याख्ये ग्रन्थे प्रतिपादयति यत्—धातूपसर्गसंसर्गसम्भवाः कतिचिदर्था मयोपवर्णिताः। विशेषास्तु कवीनां प्रयोगादेव बोद्धव्याः—

धातूपसर्गसंसर्गसम्भवा कतिचिन्मया।
प्रसिद्धा गदिताश्चार्था शेषा ज्ञेयाः प्रयोगतः[1] ॥

भरतमल्लिकस्य सिद्धान्तविश्लेषणेनायाति यल्लोकप्रयोगनिबन्धना एव भवन्त्यर्थाः शब्दानाम्। शब्दानामर्थनिर्धारणे लोक एवार्थात् प्रयोग एव प्रमाणत्वेनोररीक्रियते। माधवाचार्यस्तु व्यवस्थापयति यत्—'निपातोपसर्गेषु तथैवैका शक्तिर्वर्तते, यथा धातुषु। येन हेतुना धातवो बह्वर्था भवन्ति, तेनैव हेतुना निपातोपसर्गा अपि; यतो हि भाषाप्रतिमानिर्माणं तदर्थविस्तरश्च धातूपसर्गनिपातैरेव सङ्घटते। वस्तुसत्ताव्यतिषिक्तैः संज्ञापदैर्भाषामूर्तिसङ्घटनमसम्भवप्रायमेव—

निपाता उपसर्गाश्च दृश्यन्ते केन हेतुना।
बहुष्वर्थेषु येष्वेते दृश्यन्त उपमादिषु॥
बहुष्वर्थेषु धातूनां वृत्तौ यत्कारणं भवेत्।
तदेवात्रापि भवति सा च शक्तिरिति स्थितिः॥[2]

अत एव हि भाषा न स्थूलवस्त्वनुसरति, अपि तु स्थूलवस्तून्येव प्रकाशकत्वेन शब्दाननुसरन्ति। सभाजयति सिद्धान्तममुं हरदत्तमिश्रः—'बुद्ध्युपारोह[3] एव चार्थस्य शब्दप्रयोगे कारणम्, न बहिःसत्ता। यदि बहिःसन्तमेवार्थं शब्दा अभिदधति, घटोऽस्ति, घटो नास्तीति प्रयोगो न स्यात्। एकत्र पौनरुक्त्यात्, अपरत्र विरोधात्। बुद्ध्युपारूढस्य बहिःसत्त्वासत्त्वप्रतिपादनायोपपद्यते प्रयोगः। एवमपाक्षीत्, पक्ष्यति, अस्य सूत्रस्य शाटकं वयेत्यादावपि बुद्ध्युपारूढ एव पच्यादीनामर्थाः, न तु शब्दप्रयोगकाले बहिःसिद्धः' इति। एतेन हरदत्तमिश्रसिद्धान्तेन निष्कृष्यते यदन्तिमा सत्ता शब्दार्थानां बुद्धावेवोपचीयते, बहिर्वस्तुसत्ता त्वनुवादिकैव। अतः पदेषु द्रव्यानुविद्धलिङ्गसंख्याविभक्तीनामारोप एव क्रियते, न तु तेषु पारमार्थिकी काचिद् वस्तुसत्ता,

---

१. उससर्गवृत्तिः। २. ऋग्वेदानुक्रमणी–६।१४–१५। ३. पदमञ्जरी–१।२।४५।

लिङ्गसत्ता, संख्यासत्ता, विभक्तिसत्ता वरीवर्तीति। एवं यदि बुद्ध्युपारोह एव चार्थस्य शब्दप्रयोगे कारणम्, तर्हि निपातोपसर्गार्था अपि बुद्ध्युपारूढा एव। भवति हि बुद्धौ तेषामर्थावबोधः। अतोऽसत्त्वपदलाञ्छनेन तेषामभिधेयार्था अपाकर्तुं न शक्यन्ते। अस्मादेव हि द्योतका निपाता उपसर्गाश्च इति सिद्धान्तोऽप्यकिञ्चित्कर एव।

ऋग्वेदानुक्रमण्यां माधवाचार्येणाप्यूरीकृतं यत्—'भगवान् पाणिनिरुपसर्गाणां बहूनर्थानाह। तेषामुदाहरणं तु बाहुल्याद् ग्रन्थविस्तरभयाच्च न प्रदर्शितवान्—

पाणिनिश्चाह भगवान् अर्थान् एषां बहूंस्तथा।
उदाहरणमेतेषां बाहुल्यान्न प्रदर्शितम्[1]॥

अत्रावस्ताद् भगवतः पाणिनेः कानिचित् सूत्राण्युद्ध्रियन्ते येषूपसर्गाणामर्थास्तेन परिसंख्याताः[2]।

तस्मिन्नेव च सन्दर्भे पुनर्व्याख्याति माधवाचार्यो यत्—उपसर्गसंश्लेषणेन धातूनां मौलिका अर्था विनश्यन्ति = तिरोधानं गच्छन्ति। अथ चोपसर्गैर्नूतना अर्था व्यज्यन्ते—

विनश्यन्ति च धात्वर्था उपसर्गसमन्वयात्।
अव ते हेलो वरुण सुन्वानो हि ष्मा यजति॥[3] इति।

प्रमाणैरेभिरेतदायाति यदुपसर्गाणामपि भूर्यर्था आसन्, तेषां प्रयोगा अप्यनूर्वरितार्थकान् धातूनुज्जीवयितुं क्रियन्ते स्म। प्रायेणैवं मन्यन्ते शाब्दिका भाषाशास्त्रिणोऽपि च यदुपसर्गादीनामहेतुः संश्लेषो भवति धातुभिः सह संज्ञाशब्दैश्च, किन्तु नास्तीयं धारणा विमर्शसहा। यदि दृढतमेनाभ्यासेन सौक्ष्म्येण च भाषामर्मगवेषणेन निपातोपसर्गाणां प्रयोगा व्यमर्शिष्यन्त, तर्हि तेषां चित्रात्मका अर्था अप्यग्रहिष्यन्त।

## निपाताव्ययोपसर्गा अपि सत्त्वगन्धिनो भवन्ति

पृथक् पृथगेवं निपाताव्ययोपसर्गाणां लक्षणान्युद्धरणानि चामृश्यात्र सिद्धान्तरूपेण कानिचित् तथ्यानि प्रस्तूयन्ते। प्रथमं तावदेतद् ध्यातव्यमस्ति यन्निपाताव्ययोपसर्गा

---

१. ऋग्वेदानुक्रमणी—७।१६।

२. 'उदोऽनूर्ध्वकर्मणि' (अष्टा० १।३।२४), 'उपान्मन्त्रकरणे' (अष्टा० १।३।२५), 'स्पर्धायामाङः' (अष्टा० १।३।३१), 'अधेः प्रहसने' (अष्टा० १।३।३३), 'आङ् उद्गमने' (अष्टा० १।३।४०), 'वेः पादविहरणे' (अष्टा० १।३।४१), 'सम्प्रतिभ्यामनाध्याने' (अष्टा० १।३।४६), 'उपाद्यमः स्वकरणे' (अष्टा० १।३।५६), 'अनुर्लक्षणे' (अष्टा० १।४।८४), 'तृतीयार्थे' (अष्टा० १।४।८५), 'हीने' (अष्टा० १।४।८६), 'अपपरी वर्जने' (अष्टा० १।४।८८), 'आङ् मर्यादावचने' (अष्टा० १।४।८९), 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' (अष्टा० १।४।९०), 'अभिरभागे' (अष्टा० १।४।९१), 'प्रतिः प्रतिनिधिप्रतिदानयोः' (अष्टा० १।४।९२), 'अधिपरी अनर्थकौ' (अष्टा० १।४।९३), 'सुः पूजायाम्' (अष्टा० १।४।९४), 'अतिरतिक्रमणे च' (अष्टा० १।४।९५)।

३. ऋग्वेदानुक्रणी—८।१०।

असत्त्ववचना असत्त्वगन्धिनो वा व्यपादिष्टा महर्षिभिर्वैयाकरणैः, किन्तु नितान्तरूक्षाभिनिवेशग्रस्तेनाग्रहेणावलोक्यतेऽत्र सम्पूर्णसंस्कृतवाङ्मयस्यैतिहासिकोऽनव बोधः। अत्र प्रकरणे माधवभट्टस्यैकः श्लोकः सङ्केतयति यत् पथिकृच्छाब्दिकानामैतिहासिकमनालोडनम्—

शाकल्यः[1] पाणिनिर्यास्क इत्यृगर्थपराश्रयः ।
यथाशक्त्यनुधावन्ति न सर्वं कथयन्त्यमी ॥

श्लोकस्यैतस्याभिप्रायेणैतद् वक्तुं प्रभवामो यन्माधवभट्टस्योक्तिरियं प्रख्यापयति-संस्कृतवाङ्मयस्य निःसीमत्वं निरवधित्वं च । एतस्मिन् देशकालाद्यनवच्छिन्ने वाङ्मये के शब्दाः सत्त्वगन्धिनः, के चासत्त्वगन्धिन इतीदमित्थं वक्तुं ब्रह्मणाऽपि न पार्यते, ऋषयस्तु यथाशक्त्यनुधावन्त्येव । अतो वैदिकसाहित्यस्यान्वेषणेन निर्द्धार्यते यन्निपातोपसर्गा अपि सत्त्वगन्धिन आसन् । एतेषां व्यवहारा अपि संज्ञापदानीव क्रियन्ते स्म । तेषामुदाहरणमत्रोदाह्रियन्ते—

(क) अनु > अनुः > आनवः, आनवे-आनवाय, आनवस्य, अनूनाम्, अनूषु[2] ।

(ख) अन्तर् > अन्त्रम् > आन्त्राणि[3] ।

(ग) अनु > अणुः[4] ।

(घ) उमा < उ + मा > उमा[5] ।

(ङ) पुरुः > पुरूरवाः, पुरुम्, पुरयस्य, पुरुषु[6] ।

अमीषां संज्ञापदानां स्वरूपलाभ आत्मलाभे च निपातोपसर्गा एवोपादानकारणतां प्राप्ताः । किं बहुना, प्राध्यापकराजारामेण[7] स्वकीयेऽवेस्तानामकग्रन्थे प्रतिपादितं यत् 'फारसीभाषायाः 'परी', 'परियाँ=अप्सरा' इति नामपदं वैदिकभाषायाः 'परि' इत्युपसर्गात् निःसृत्य 'अवेस्ता'भाषायां 'परी' इति संज्ञात्वमापन्नः परि > पइरि > परी = अप्सराः' इति । अस्मिन्नेव प्रसङ्गे दुर्गसिंहः[8] स्वकीये लिङ्गानुशासनाख्ये ग्रन्थ उद्घोषयति यत् केचन निपातोपसर्गाः सर्वनामशब्दा आसन् । एवमेव दुर्गादासविद्यावागीश[9]-पुरुषोत्तमदेव[10]-शब्दरत्नप्रदीपकार[11]-मैक्समूलर[12]-ह्विट्नी[13]-मैकडानल[14]-डेनिस्टन[15]-वान्द्रियैज[16]-बरो[17]-गुणे[18]-प्रभृतिभिः प्राच्यार्वाचीनैर्भाषाशास्त्रमर्मज्ञै-

१. ऋग्वेदानुक्रमणी—मन्त्रार्थानुक्रमणी—१।७ ।
२. ऋ० सं० ८।४।१, ६।६२।९, १।१०८।८ ।
३. तै० ब्रा० २।४।३ ।
४. निरुक्तम्—६।८—दुर्गाचार्यव्याख्यानम् ।
५. कुमारसम्भवम्—१।२६—मल्लिनाथव्याख्यायुतम् ।
६. ऋ० सं०—१।१०८।८, ७।१८।१३, ६।६३।९, ८।४।१ ।
७. अवेस्ता—पृ० ५३ ।
८. लिङ्गानुशासनम्—पृ० २३—स्वोपज्ञवृत्तिसमेतम् ।
९. कविकल्पद्रुमः—पृ० १४ ।
१०. त्रिकाण्डशेषः—१, पृ० २ ।
११. शब्दरत्नप्रदीपः—५, पृ० ३१ ।
१२. दि लेक्चर्स आन दि साइंस आफ लैंग्वेज, पृ० २३६ ।
१३. संस्कृत ग्रामर—पृ० २३७ ।
१४. वैदिक ग्रामर—पृ० २७६ ।
१५. दि ग्रीक पार्टिकल्स—पृ० २२ ।
१६. भाषा—पृ० १०१ ।
१७. दि संस्कृत लैंग्वेज—पृ० ३२५ ।
१८. तुलनात्मक भाषाविज्ञान—पृ० ६५ ।

निरणायि यन्निपातोपसर्गाः स्वायत्तार्थाः स्वतन्त्राश्चासन् । मैक्समूलरमहोदयो व्याख्याति यद् ये निपातोपसर्गादयः[1] साम्प्रतं भाषायां मौक्तिकरूपेण शब्देषु संश्लेष्यन्ते, अथ चानर्थकाः, पदपूरकाः, रिक्तार्थका वा व्यपदिश्यन्ते, कामं ते कदाचिन्नामपदानीव स्वायत्तार्थकत्वेन व्यवह्रियमाणा आसन्, अन्यथा ध्वनिमात्रावशिष्टानां भाषायाः कृते भारस्वरूपाणामिव तेषामैतिहासिकः स्वरूपोपलब्धिरेव न स्यादिति ।

**निपाताव्ययोपसर्गाणामैतिहासिकस्वरूपोपचयापचयः**

एवं हि भाषाया ऐतिहासिके संस्रवे निपातोपसर्गादयः संज्ञाशब्दा इव सर्वनामशब्दा इव स्वाधीनार्थका आसन् । अत एव हि श्रीतारानाथेनाशुबोधव्याकरणे सिद्धान्तितं यत्—'नामधातूपसर्गनिपाताः प्रकृतिः । निपातोपसर्गयोर्नामत्वम् अपीच्छन्ति केचित् । तेन ततः सुबादयः स्युः । तेन नतराम्, सुतराम् इत्यादिसिद्धिः'[2] । आशुबोधव्याकरणकारस्यानेन सिद्धान्तेन संवदन्ति आधुनिकभाषाशास्त्रज्ञा मैक्समूलर[3]-ह्विट्नी[4]-सुनीतिकुमारचटर्जिप्रभृतयः[5] ।

अस्मिन्नध्याये यानि तथ्यानि समुपस्थापितानि निपाताव्ययोपसर्गाणां विषये, तेषां संवादात्मकेन तोलनात्मकेन च पर्यवेक्षणेनेदमेवायाति निष्कर्षरूपेण यन्निपातोपसर्गाणां त्रयी गतिरुपलभ्यते संस्कृतवाङ्मये—प्रथमा निपातोपसर्गा नाम्नामिव सर्वनाम्नामिव स्वायत्ताः, स्वाधीना आसन् । द्वितीयप्रस्थाने—पदचातुर्विध्यमध्ये—नाम-आख्यातापेक्षयोपसर्ग-निपाताः—किञ्चिद् गौणत्वमापन्नाः । तृतीयप्रस्थाने—ते नितरां परतन्त्रा इव परामृष्टाः । संस्कृतभाषाया ऐतिहासिकेनानुसन्धानेन वक्तुं प्रभवामो यत् पदचातुर्विध्यरूपविभाग एव संस्कृतभाषाया नैसर्गिको विभागः प्रतिभाति । अव्ययरूपविभागस्तु स्वयमेव प्रमाणयति यत् सोऽर्वाक्कालिक इति । प्राचीनग्रीकभाषायामप्येतादृश एव पदचातुर्विध्यरूपविभाग उपलभ्यते[6] । अतः—'चत्वारि वाक्परिमिता पदानि[7]' इति श्रुतिरेव प्रमाणत्वेनाङ्गीक्रियतेऽत्र ।

• • •

---

१. दि लेक्चर्स आन दि साइंस आफ लैंग्वेज—पृ० ४७-४८ ।
२. आशुबोधव्याकरणम्—संज्ञाप्रकरणम्—३३ ।
३. लेक्चर्स आन दि साइंस आफ लैंग्वेज—पृ० ४७ । ४. संस्कृत ग्रामर—पृ० १०४ ।
५. भारत में आर्य और अनार्य—पृ० ६९ ।
६. आस्पेक्ट्स आफ लैंग्वेज—पृ० १५७-५८ । ७. ऋ० सं०—१।१६४।४५ ।

## तृतीयोऽध्यायः
## निपाता द्योतका वाचका वा

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति[1] ॥

संस्कृतवाङ्मये दृश्यते हि स्वरवर्णधातुप्रत्ययनामाख्यातोपसर्गनिपातानाञ्च विषये चिन्तनधाराया अविच्छिन्ना परम्परा । आ-ऋग्वेदात् सप्तदशशताब्दीपर्यन्तं यथा कथा भाषोपादानभूतानां शब्दतत्त्वानां सन्दर्भे गभीरं परिशीलनमवलोक्यते, अर्थात् प्रायेण दशसहस्राब्दीपर्यन्तमार्यावर्तीयाणामार्याणां प्रधानतमा तत्त्वबुभुत्सैकतानताऽऽसीच्छब्दब्रह्मविषये । यथा प्रथमे द्वितीये चाध्याये दृष्टान्तपुरस्सरं प्रतिपादितमस्ति यत् प्राग्वैदिककाले वैदिककाले च द्विधैव विभाग आसीच्छब्दानाम्—नामरूपेण, आख्यातरूपेण च । तदन्वजस्रविकसन्त्यां भाषायां केषाञ्चिच्छब्दानां व्युत्पत्तयो विस्मृता विस्मारिताश्च । यदा शब्दव्युत्पत्तयस्तिरोधीयन्ते, तदा तेषां शब्दानामर्था अपि सम्मूर्च्छिता इव प्रतिभान्ति । एवं प्रथमं व्युत्पत्तयस्तिरोदधति, तदन्वर्थाः सम्मूर्च्छिता इव भान्ति, तत्पश्चाच्छब्दा रूढिपदेन व्यपदिश्यन्ते । रूढाः शब्दा एवैतिहासिके संस्रवे निपातपदेन, उपसर्गपदेन, अव्ययपदेन वा लाञ्छिता भवन्ति । निपातोपसर्गाणामुद्भवस्यायमेव हेतुरिति मन्ये ।

**निपातानां प्रकृतित्वविचारः**

वाक्येऽभिनिविष्टानां पदानां तेषामर्थानाञ्चानुसन्धानेनापि प्रतिपादयितुं पार्यते यद् वाक्यार्थमूर्तेरुदयस्तूद्देश्यदलघटकैर्विधेयदलघटकैश्च पदैर्भवति । उद्देश्यदले नामपदानि सन्निवेश्यन्ते, विधेयदले त्वाख्यातपदानीति । अतो ज्ञायते यदुद्देश्यदलप्रातिनिध्यं कुर्वतां नामस्वेव निपातोपसर्गाणामपि परिसंख्यानमासीत्प्राग्वैदिकभारोपीयार्यभाषासु । सन्दर्भेऽस्मिन्नाशुबोधव्याकरणकर्तुरभिप्रायः संवादात्मकमुदाहरणं प्रस्तौति । स सिद्धान्तयति यत्—**'नामधातूपसर्गनिपाताः प्रकृतिः । निपातोपसर्गयोर्नामत्वमपीच्छन्ति केचित्'** इति[2] । ऐतिहासिकदृष्ट्या सर्वथाऽर्वाक्कालिकमिदं व्याकरणमतिमौलिकं भाषाशास्त्रानुमोदितञ्च तथ्यं समुपस्थापयति । स्पष्टमेवाङ्गीकरोत्याशुबोधव्याकरणकृद्यन्निपातोपसर्गा अपि नामानीवाऽऽमृश्यमाणा आसन् ।

इत्थमुद्देश्यविधेयदलघटकपदानां समुच्चयभूता भाषा कामं द्विविधपदविभागं प्रमाणयति । आधुनिकभाषाशास्त्रमर्मज्ञेन सुनीतिकुमारचटर्जिमहोदयेनाप्युल्लिखितं यदाख्याततिरिक्ता सर्वविधाः शब्दाः संज्ञाशब्देष्वेव सन्निवेशमर्हन्तीति[3] । मैक्समूलर[4]-

---

१. ऋ० सं०—१।१६४।४५ । २. आशुबोधव्याकरणम्—संज्ञाप्रकरणम्—सू० ३३ ।
३. भारत में आर्य और अनार्य—पृ० ६८—६९ ।
४. दि लेक्चर्स आन दि साइंस आफ लैंग्वेज—पृ० २३६ ।

वान्द्रियैज[1]-बरो[2]प्रभृतिभिरपि निर्णीतं यत्—'**प्रकृतिभिः सह प्रयुज्यमाना प्रत्यया अपि कदाचित् प्रकृतिवद् व्यवह्रियन्ते स्म। भाषाप्रवाहेऽन्योन्यसङ्घर्षणेन ते प्रकृतिकक्षातः प्रभ्रष्टाः प्रत्ययमात्रावशेषतामापुः। निपातोपसर्गास्त्वधुनापि यत्र तत्र प्रकृतित्वेन, नामत्वेन, नामधातुत्वेन च व्यवह्रियन्ते**' इति। अत एव च भोजराजः शृङ्गारप्रकाशे विशदयति यत्—'प्रकृतिस्त्रिधा भवति–धातुरूपा, प्रत्ययरूपा, प्रातिपदिकरूपा[3] च' इति। प्रकृतेस्त्रैविध्ये निपातोपसर्गास्तु प्रातिपदिकरूपायां प्रकृतौ परिसंख्यायन्ते। पुनः स एव समादधाति यत्—'नामाव्ययनिपातानुकरणकृत्तद्धितसमासाः प्रातिपदिकानि[4]' इति। एवं प्रातिपदिकेषु सन्निवेशमर्हन्तो निपातोपसर्गाः प्रातिपदिकसंज्ञाविधायकसूत्रेणार्थवन्त[5] इत्युद्घोषिताः। तथा हि समर्थयते नारायणभट्टः प्रक्रियासर्वस्वे—'**अर्थवत्कार्यमस्त्येवेत्यर्थवत्सूत्र ऊचिवान्[6]**' इति।

**द्विधा-चतुर्धा-पञ्चधापदविकासपरामर्शः**

आचार्यभर्तृहरिणाऽपि वाक्यपदीये द्विधा पदविभागस्य संकेतः कृतः—

**द्विधा कैश्चित्पदं भिन्नं चतुर्धा पञ्चधाऽपि वा।**
**अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत्[7]॥**

अस्यां कारिकायां प्रथमं परिगणनं तु द्विधा पदविभागस्यैव कृतमस्ति; तदनु चतुर्धा, पञ्चधा वा। अस्याः कारिकाया विश्लेषणेन संकेतितं भवति यदाचार्यभर्तृहरिः पदविभागस्यैतिहासिकं क्रमं सङ्केतयति। प्रथमे विकासे पदविभागस्तु द्विधा—नामरूपेण, आख्यातरूपेण चासीत्। द्वितीये विकासे चतुर्धा—नाम-आख्यात-उपसर्ग-निपातरूपेण समभवत्। तृतीये तु पञ्चधा पदविभागः—नाम-आख्यात-उपसर्ग-निपात-अव्ययरूपेण सञ्जातः। अस्याः कारिकाया व्याख्यात्रा हेलाराजेनापि समर्थितमिदं पदविभजनम्। स विश्लेषयति यत्—'**अनयोरेव नामाख्यातयोर्विशेषणत्वान्निपातोपसर्गकर्मप्रवचनीयलक्षणः पदभेदोऽन्तर्भवति। तथा हि सिद्धार्थाभिधायि नामपदमिति तदर्थगतं विशेषं द्योतयन्निपातस्तत्रैवान्तर्भवति। स्वरादयस्तु केचित् सत्त्वप्रधाना एवेति तेऽपि नामपदमेव। ये तु हिरुगादयः क्रियाप्रधानास्तेषामाख्यातेऽन्तर्भावः। न हि तिङन्तमेवाख्यातम्, क्रियाप्रधानस्य सर्वस्यैव तल्लक्षणत्वात्। अत एवोपसर्गकर्मप्रवचनीयपदान्यप्याख्यातपदमेव, साध्यार्थगतविशेषद्योतनात्। एवं निपातोऽपि। तद्गतभेदान्तरविवक्षायां तु निपातोपसर्गयोरपि कैश्चित् पृथक्करणम्**' इति।

भाषाविकासस्यैतिहासिके सन्दर्भे हेलाराजस्येदं व्याख्यानं भाषाशास्त्रदृशाऽतिमहत्त्वमादधाति। आधुनिकैः पाश्चात्त्य-पौरस्त्यभाषाशास्त्रस्नातकैर्निर्णीयते यदुद्देश्य-

---

१. भाषा पृ० १९९। २. संस्कृत लैंग्वेज–पृ० ३२५।
३. शृङ्गारप्रकाशः—१, पृ० ४। ४. तदेव—पृ० ८।
५. अर्थवदधातुरप्रत्ययः प्रातिपदिकम्—अष्टा० १।२।४५।
६. प्रक्रियासर्वस्वम्—सुब्विधिखण्डम्—पृ० १९१। ७. वा० प० ३।१।१।

विधेययोरर्थान्नामाख्यातयोर्विभक्तः पदराशिरेव चतुर्धा, पञ्चधा, कुत्रचिदष्टधा वा विवर्तितोऽभूत्, तदपि भर्तृहरि-हेलाराजयोरनुवादमात्रम्। एवमैतिहासिकदृष्ट्या विश्लेषणेन त्रयः पक्षाः समुद्भवन्ति निपातोपसर्गाणां विषये—

(क) प्रथमे विकासक्रमे प्राग्वैदिकभाषायां प्रारम्भिकवैदिकभाषायाञ्च द्विविधपदविभाग आसीदिति कल्प्यते—नामरूपेण, आख्यातरूपेण च।

(ख) द्वितीये विकासक्रमे नामपदान्येव त्रिधा विवर्तितानि—नाम-निपात-उपसर्गरूपेण। आख्यातपदस्य संख्यानेन तान्येव चतुर्धा—नाम-आख्यात-उपसर्ग-निपात-रूपेण सञ्जातानि।

(ग) तृतीये विकासक्रमे पञ्चधा विवर्तनमभूत् पदराशेः—नाम-आख्यात-उपसर्ग-निपात-अव्ययरूपेण च।

इमान्येव त्रीणि पदविभागप्रस्थानान्यैतिहासिकदृष्ट्या दृश्यन्ते संस्कृतभाषायाम्। इमानि त्रीणि पदविभागरूपप्रस्थानान्यधिकृत्य निपाताव्ययोपसर्गाणां विषये द्योतकतावादस्य वाचकतावादस्य, निरर्थकतावादस्य, पदपूरकतावादस्य चावैज्ञानिकः प्रवादः प्रारब्धः शब्दब्रह्मचिन्ताऽऽकुलमानसैः शाब्दिकैः। द्योतकता-वाचकतावादिन्यौ परम्परे तु स्वतःप्रमाणभूतानां शाब्दिकशिरोमणीनां महाभाष्यकाराणां ग्रन्थरत्नादेव विनिःसृते। वस्तुतः शब्दशास्त्रीयसर्वविधसिद्धान्तानां कृते महाभाष्यं तु रत्नाकरायते।

**निपातानामर्थवाचकताविमर्शः**

महामुनिपाणिनेरष्टाध्याय्यां द्योतकता-वाचकतावादस्य सिद्धान्तस्तु हिरोहितः प्रतिभाति, यतो हि मुनिना तेन प्रायेण सर्वेषां निपातोपसर्गाणामर्था यथाप्रसङ्गमुपवर्णिताः। संवदति च पाणिनेः सिद्धान्तेन सह माधवभट्टः—

**पाणिनिश्चाह भगवान् अर्थान् एषां बहूंस्तथा।**
**उदाहरणमेतेषां बाहुल्यान्न प्रदर्शितम्**[1]॥ इति।

यद्यपि महाभाष्यकारेणाप्यूरीकृता निपातोपसर्गाणां विभिन्नार्थाः, तथापि यत्र तत्र द्योतका निपातोपसर्गा इत्यपि व्याख्यानं कृतं तेन। उपसर्गाणां भूर्यर्थास्तेनापि परिसंख्याताः।

**'प्रादयः क्तार्थे'**[2] इति सूत्रं व्याचक्षाणेन तेन निर्दिष्टम्—'प्रादयः क्तार्थे समस्यन्त इति वक्तव्यम्—प्रगत आचार्यः प्राचार्यः। प्रान्तेवासी, प्रपितामहः। शिष्यः प्राप्तः प्रगत आचार्यः। गुरुं प्राप्तः प्रगतः शिष्यः। पितामहस्य पितृत्वं प्राप्तः प्रपितामहः। आङीषदर्थे। आकडारः। आपिङ्गलः। कुः पापार्थे। कुवृषलः, कुब्राह्मणः। प्रादयो गताद्यर्थे प्रथमया समस्यन्ते। अत्यादयः क्रान्ताद्यर्थे द्वितीयया। अतिक्रान्तः खट्वामतिखट्वः। अतिमालः। अवादयः क्रुष्टाद्यर्थे तृतीयया। अवक्रुष्टः कोकिलया अवकोकिलः।

१. ऋग्वेदानुक्रमणी–७।१६।  २. अष्टाध्यायी–२।२।१८।

पर्यादयो ग्लानाद्यर्थे चतुर्थी—परिग्लानोऽध्ययनाय पर्यध्ययनः। निरादयः क्लान्ताद्यर्थे पञ्चम्या—निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः। निर्वाराणसिः। अव्ययं प्रवृद्धादिभिः—पुनः प्रवृद्धं वहिर्भवति। पुनर्गतः पुनः सुखम्—इत्यादि'[1]। नागेशभट्टोऽपि व्याख्याति भाष्यकृदुक्तिम्—'एतदेव[2] च सौनार्गैविस्तरतर्केण पठितम्—स्वती पूजायाम्। सु + राजा > सुराजा, अति + राजा > अतिराजा। दुस् = निन्दायाम्—दुस् + कुलम् > दुष्कुलम्, दुर् + गवः > दुर्गवः' इति।

एवमेव माधवभट्टेनापि निपातोपसर्गाणां भूयर्थाः पठिताः[3]—

प्रभुः प्रार्थयते कन्यां प्रशान्तः प्राञ्जलिस्तथा।
प्रसन्नमुदकञ्चेति भिन्नार्थाः प्रा इमे मताः॥

आङ् आभिमुख्यं वदति प्रपरौ तद्विपर्ययम्।
'परा याहि मघवन्ना' 'परा हि मे विमन्यवः'॥

समेकीभाववचनः पृथग्भावे व्यपौ स्मृतौ।
'यत्रा नरः संच वि चाप द्वेषो अपह्वरः'॥

अनुः सादृश्यवचनः पश्चाद्भावे च वर्तते।
उद्वर्तत उद्गमने न्यवौ नीचीनवृत्तिनौ॥

सुपूजावचनं प्राहुर्विपरीतौ च निर्दुरौ।
अधेरुपरिभावार्थम् आभिमुख्यमभेर्विदुः॥

अतेरर्थोऽतिक्रमणं प्रातिलोम्ये प्रतिः स्मृतः।
अपिः संसर्गवचन उपश्चोपजने स्मृतः॥

वर्जने सर्वतोभावे परिम्प्राहुर्विपश्चितः।
एषामिमे प्रायिकार्था इत्थं यास्केन दर्शिताः॥

पाणिनिश्चाह भगवान् अर्थान् एषां वहूंस्तथा।
उदाहरणमेतेषां वाहुल्यान्न प्रदर्शितम्[4]॥

अमीभिर्यास्क-पाणिनि-पतञ्जलि-माधवभट्ट-नागेशादीनां सन्दर्भैरेतन्निर्णेतुं प्रभवामो यद् आ—ऋग्वेदात् पाणिनिं यावदर्थात् सार्धसप्तसहस्राब्दीपर्यन्तं[5] निपातोपसर्गाः कामं नाम्नामाख्यातानामिवाजस्रं संस्कृतभाषायाम् अर्थवाचका आसन्। द्योतकतावादस्योद्भवस्तु प्ररोहरूपेण यास्कसमय एवाभूत्। तस्य पल्लवनं महाभाष्ये सञ्जातम्। तदनु खीष्टाब्दीयप्रथमशताब्दीतो द्योतकतावाद एवोत्तरोत्तरं प्रथिमानमाप।

---

१. महाभाष्यम्—२।२।१८।
२. उद्द्योतः—तदेव।
३. ऋग्वेदानुक्रमणी—७।९—१२।
४. ऋग्वेदानुक्रमणी—७।१०—१६।
५. ऋग्वेदस्यात्र समयस्तु वालगङ्गाधरतिलकानुसार्यस्ति।

एवं पदविभागस्य प्रस्थानत्रयविमर्शनेन वक्तुं पार्यते यत्—प्रथमे प्रस्थाने निपातोपसर्गा अपि नामानीव स्वाधीनार्था आसन्, द्वितीये प्रस्थाने ते किञ्चिद् विस्मृतार्थत्वात् स्खलितार्थत्वाच्च नामभ्यः पृथक्त्वेन परिसंख्याताः। तृतीये च प्रस्थाने रिक्तार्थत्वात् तेऽसत्त्वगन्धिपदलाञ्छनेन लाञ्छिताः सन्तो गोपथब्राह्मणकृदव्ययपरिभाषामङ्गीकृतवन्त इति मन्ये—

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्[1] ॥**

वस्तुतोऽस्य श्लोकस्य प्रभावस्तूत्तरकालिके शाब्दिकनिकायचिन्तने बहुपुरस्कृत इवावलोक्यते। श्लोकोऽयं स्वयमेव सङ्केतयति अव्ययरूपपदविभागस्यार्वाक्कालीनत्वम्। भोजराजस्तु सरस्वतीकण्ठाभरणे प्रतिपादयति यदव्ययसंज्ञा हि नाम शब्दशक्तिमनपेक्ष्य कृता संज्ञा। अत एव शक्तिः=वृत्तिस्खलनान्निपातोपसर्गा रूढिच्युता भवन्तीति। न हि निपाताव्ययोपसर्गाणामर्था व्युत्पत्तिलभ्या भवन्ति। तेषां रूढिच्युतत्वात् =वृत्तिस्खलितत्वात्। अव्ययम् =शक्तिनिरपेक्षो रूढ्यर्थारोपितः स्वरूपोपचयापचयशून्य इति संज्ञा क्रियते। तथा च भोजः—**'रूढिच्युतं पदं यत्तु तदन्यार्थमिति श्रुतम्'**[2] इति। यथा--

विभजन्ते न ये भूपमालभन्ते न ते श्रियम्।
आवहन्ति न ते दुःखं प्रस्मरन्ति न ये प्रियाम् ॥

अत्र विभजतेः=वण्टने, आलभतेः=मारणे, आवहतेः=करणे, प्रस्मरतेः=विस्मरणे रूढिः; न तु विशेषसेवायाम्, अभितो लाभे, समन्ताद्वहने, प्रकृष्टस्मरणे चेति।

सरस्वतीकण्ठाभरणस्य व्याख्यात्रा रामसिंहेनापि[3] व्याख्यातं यत्—शक्तिः=वृत्तिः=अर्थच्युताः शब्दा एव रूढिसंज्ञया व्यपदिष्टाः। यावच्छब्दा व्युत्पत्तिभाजः सन्तो व्यवह्रियन्ते, तावदेव ते लिङ्गसङ्ख्याविभक्त्याश्रयाः=सत्त्वगन्धिनो भवन्ति। व्युत्पत्तौ तिरोहितायां सत्यां शब्दाः प्रथमं रूढा भवन्ति, तदनु निपाताव्ययोपसर्गसंज्ञाभाजः क्रियन्ते।

प्रतिपादयति च रामसिंहः—'शक्तिमनपेक्ष्य प्रयुक्तं रूढिच्युतम्। अत एव यदभिसन्धाय प्रयुज्यते, न कथञ्चन यस्यासावर्थं इति अन्वर्थमन्यार्थमिति नाम। एतदेव धातुविशेषोऽवान्तरमुपसर्गविशेषयोगतो योगवानित्यादिनाऽन्यैरुक्तम्। भजिः सेवार्थो विरुपसर्गस्तद्गतविशेषद्योतकस्ततश्च यथा—वि + √द्युत् > विद्योतत इति। क्वचिदुपसर्गोपसंदानेन धातुरर्थान्तर एव वर्तते। नन्वर्थापेक्षित्वे पदार्थदूषणमेवंविधमिति

---

१. गोपथब्राह्मणम्—१।१।२६; २. सरस्वतीकण्ठाभरणम्—१।९।
३. रामसिंहकृता व्याख्या—तदेव।

वामनः । नैतत्, पदस्यैवान्वयव्यतिरेकत्वात् । नह्यत्रान्वयस्यापराधः कश्चित्, किन्तु शब्द एव वृत्तिस्खलितादिभिरपराध्यति[1]' इति ।

अस्मिन्नेव सन्दर्भे शब्दशास्त्रधुरीणैः डॉ० कालिकाप्रसादशुक्लवर्यैः स्वीयगवेषणाप्रधानेऽतिगभीरे निबन्धे सिद्धान्तितं यत्—भाषाप्रवाहे केचन शब्दा अन्योन्यसंघर्षणेनातिलघुरूपतामाप्नुवन्ति । शब्देष्वयमपचयो भाषाया अतिविस्तीर्णे कालप्रवाहे सङ्घटते । त एवापचयप्रभावप्रभाविताः शब्दा व्युत्पत्तिरहिताः सन्तः कस्मिंश्चिदर्थे रूढा भवन्ति । रूढार्थानां पदानां व्यवहारोऽपि भाषायां निपाताव्ययोपसर्गाणामिव क्रियते, यतो हि रूढाः शब्दा अपि निपातनादेव सिद्धा भवन्ति' इति । समुपस्थाप्यते च सिद्धान्तोऽयं शुक्लमहोदयैः—भाषासरितायाः प्रवाहः शनैः शनैः पुरोधावति । ते ते नवनवाः शब्दाः प्रवाहे पतन्ति, येषां सिद्धिप्रकारः शास्त्रकृद्भिर्न प्रदर्शितोऽस्ति; तदर्थं निपातनाद्युपायाः प्रदर्श्यन्ते । त एवोपायाः सूचयन्ति यद् भाषा सर्वथा व्याकरणं नानुसरति, अपि तु व्याकरणमेव भाषामनुसरति । अत एव पाणिनिसूत्रे सर्वतोभावेन सर्वेषां संस्कृतशब्दानां सिद्धावसम्पन्नायां कात्यायनवार्त्तिकानि भाष्येष्ट्यश्च प्रायः क्रमेण वर्षशतकद्वयमतीत्यात्मलाभमलभन्त । एवं गच्छता कालेन भाषान्तरसम्पर्काद् देशान्तरसंपर्कात् प्रवाहे प्रपततां कालीन-पुङ्क्षु-अक्रामि-प्रभृतीनां पदानां सिषाधयिषा मुग्धबोधसारस्वत-हेमशब्दानुशासनप्रभृतीनां शब्दशास्त्राणामाविर्भावनया देशममुं स्पृहणीयगुरुतायाः परां काष्ठां प्रापितवती'[2] इति । सन्दर्भस्यास्य साहाय्येनापि निर्णेतुं शक्यते यत् संस्कृतभाषायाः पदविभागप्रस्थानत्रयमध्येऽन्तिमे प्रस्थान एव निपातोपसर्गाणां द्योतकतासिद्धान्तः शाब्दिकैर्चर्चितः पुरस्कृतश्चाभूत् । यदा हि शब्दा व्युत्पत्तिविहीना भवन्ति, तदा ते लिङ्गसंख्याविभक्त्यनाश्रयणादसत्त्वगन्धिनो व्यपदिश्यन्ते, तदनु गोपथब्राह्मणस्याव्ययपरिभाषां चरितार्थयन्ति ।

**द्योतकत्व-वाचकत्वविचारः**

एवमत्र निपाताव्ययोपसर्गाणामुद्भवप्रकारं विकासं च प्रदर्श्यानन्तरं निपाता द्योतका वाचका वेत्यतिविवादास्पदं विषयो व्याक्रियतेऽधस्तात् । निपाता द्योतका वाचका वेति विवादो नार्वाचीनः, अपि तु प्राचीनतरोऽयं विषयः । शाकटायनादारभ्य यावदुपलब्धसंस्कृतव्याकरणग्रन्थेष्वन्येषु च दार्शनिकग्रन्थेष्वपि च महता समारम्भेण प्रपञ्चितोऽयं सिद्धान्तः । यद्यप्यधुना नोपलभ्यत आचार्यशाकटायनस्य तद्ग्रन्थरत्नम्, यस्मिन्नयं सिद्धान्तो विवेचनीयतां गत आसीत्, तथापि सौभाग्यवशात् तेषां सिद्धान्ता उपलभ्यन्ते सर्वप्रथमं निरुक्तग्रन्थे । अन्यैरप्याचार्यैः सादरमुल्लिखितं तन्मतं स्वस्वग्रन्थेषु । निरुक्तविश्लेषणेन द्वौ पक्षौ पुरः समायातौ—प्रथमः पक्ष आचार्यशाकटायनस्य,

---

१. रामसिंहकृता व्याख्या—१।९ ।
२. व्याकरणस्वरूपम्—सारस्वती सुषमा—२२—व० प्रथमाङ्के ।

अपरस्तु गार्ग्यस्य। शाकटायनो द्योतकतावादी, गार्ग्यस्तु वाचकतावादी। **'न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनो नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति'**[१] इति शाकटायनमतम्। **'उच्चावचाः पदार्था भवन्तीति गार्ग्यस्तद्य एषु पदार्थः प्राहुरिमे तन्नामाख्यातयोरर्थविकरणम्'** इति गार्ग्यमतम्[२]। अर्थाच्छाकटायनो ब्रवीति यन्नामाख्यातयोर्यत् कर्म = अर्थः, तत्रैवोपसंयुज्य कञ्चिदर्थविशेषं द्योतयन्त्युपसर्गाः। गार्ग्यो ब्रवीति यद् उच्चावचाः = बहुप्रकाराः, पदस्य = निपातोपसर्गाख्यस्य, अर्थाः = अभिधेयाः प्रकर्षादयः सन्ति। आचार्ययास्कस्तूत्तरपक्षरूपेण गार्ग्यमतमेवाङ्गीकरोति। अयमेवासीत् स आधारो यमवलम्ब्य शब्दशास्त्रक्षेत्रे द्योतकता-वाचकतावादिन्यौ महत्यौ परस्परे विस्तारं गते। अत्र तावन्मुख्यानां पथिकृच्छाब्दिकानां मतान्यालोचयिष्यन्ते।

महामुनिपतञ्जलिस्तु निपातोपसर्गाणां वाचकत्वमेव स्वीकरोति। तद्व्याख्यातारौ कैयट[३]-नागेशावेषां[४] द्योतकत्वं मन्येते। अष्टाध्यायीव्याख्यातारो जयादित्यवामन[५]-हरदत्तमिश्र[६]-जिनेन्द्रबुद्धिप्रभृतयोऽपि[७] द्योतकत्वमेव भजन्ति। सिद्धान्तकौमुदीव्याख्याता ज्ञानेन्द्रसरस्वतोमहोदयः[८] स्वीकरोति निपातोपसर्गाणां द्योतकत्वम्। अत्र तावद् विवेचनीयं वर्तते यदिमे आचार्या एतत्तु स्वीकुर्वन्त्येव यन्निपातोपसर्गास्तत्तन्नामसु धातुष्वपि चोपसंयुज्यार्थविशेपस्य द्योतका भवन्ति, अर्थान्न केवलेन नाम्ना धातुना वा सोऽर्थोऽभिव्यज्यते, न च केवलेन निपातोपसर्गेण वा, अपि तु नाम-धातु-निपातोपसर्गसङ्घातेनैव तदर्थो द्योतितो भवति। आचार्यभरतमुनि[९]-कौटल्य[१०]-शौनकप्रभृतयोऽपि[११] निपातोपसर्गाणां द्योतकत्वं प्रतिपादयन्ति। एतेषामाचार्याणां सम्मतिरस्ति यन्निपातोपसर्गा अर्थविशेषं विवेचयन्ति, न तु केवलं द्योतयन्ति। विवेचनं नाम विविक्तीकरणम्। नाट्यशास्त्रव्याख्याकृदभिनवगुप्ताचार्यः प्रतिपादयति यत्—**'धात्वर्थानुपसृजन्ति'**[१२] **= उपरागेणान्यादृशान् कुर्वन्ति। यद्वा स्वार्थे धात्वर्थानुपसृजन्ति'** इति। एतेनाभिनवगुप्ताचार्यव्याख्यानेन निष्कृष्यते यन्निपातोपसर्गाणां स्वार्थस्तु भवत्येव। अत एव ते धात्वर्थानपि स्वार्थे उपसृजन्ति = अन्यादृशान् कुर्वन्ति। आचार्यमाधवभट्टोऽपि संवदत्यभिनवगुप्ताचार्यसिद्धान्तम्। स प्रतिपादयति यत्—'निपातोपसर्गासञ्जनेन नामाख्यातानामर्था विनश्यन्ति = तिरोधानं गच्छन्ति। तद्यथा—

विनश्यन्ति च धात्वर्था उपसर्गसमन्वयात्।
अव ते हेलो वरुण सुन्वानो हि ष्मा यजति[१३] ॥ इति।

---

१. निरुक्तम्–१।१।४। २. तदेव।
३. प्रदीपः–२।२।१९। ४. उद्द्योतः–तदेव। ५. काशिका–६।६।९७।
६. पदमञ्जरी–तदेव। ७. न्यासः–तदेव। ८. तत्त्वबोधिनी–अष्टा० ८।४।१८।
९. नाट्यशास्त्रम्–१४।३०। १०. अर्थशास्त्रम्–२।१०। ११. बृहद्देवता–२।९४।
१२. अभिनवभारती–ना० शा० १४।३०। १३. ऋग्वेदानुक्रमणी–७।१०।

एवमेव दुर्गाचार्य[1]-सायण[2]-अनन्तभट्टादयोऽपि[3] निपातोपसर्गाणां द्योतकत्वमेव साधयन्ति। इमेऽप्याचार्या निपातोपसर्गाणां स्वार्थप्रकटनपूर्वकं द्योतकत्वमङ्गीकुर्वन्ति। आचार्यदुर्गस्तूत्तरपक्षरूपेण वाचकत्वमप्यङ्गीकरोति। एवमेवाचार्यजैनेन्द्र[4]–मुग्धबोध[5]–रामचन्द्र[6]–अनुभूतिस्वरूपाचार्य[7]–कृष्णाचार्य[8]–वाचस्पत्याभिधानकार[9]–हेलाराज[10]–अभिधानराजेन्द्रकार[11]–व्येङ्कटनाथ[12]–माघ[13]–नारायणपण्डित[14]–चित्रभानु[15]–भर्तृहरि[16]–भोज[17]–गोविन्दराज[18]–दुर्गादास[19]–सदानन्द[20]–वर्धमान[21]-विनयचन्द्रसूरि[22]-लक्ष्मीधरप्रभृतयोऽपि[23] निपातोपर्गाणां द्योतकतावादिनः। अमी सर्वेऽपि शाब्दिकाः सडिण्डिममुद्घोषयन्ति निपातोपसर्गाणां द्योतकत्वम्। इत्थं निरुक्ते प्ररोहरूपेणाङ्कुरितोऽयं द्योतकतासिद्धान्तः ख्रीष्टाब्दसप्तदशशताब्दीपर्यन्तम् उत्तरोत्तरं विकसन् भाषाशास्त्रीयदृष्ट्या पदविज्ञानस्य महान्तमपकारमकरोत्।

**शाकटायनसम्मतद्योतकत्वविमर्शः**

यद्यपि निरुक्त उल्लिखितं शाकटायनाचार्यस्य मतमुपहासदृष्ट्या तदानीं शाब्दिकैरङ्गीकृतम्, **'शकटस्य च तोकम्'** इति वाक्येनेदमेव ध्वन्यते यदुपहासास्पदमासीत् स सिद्धान्तः, तथापि तत्पाश्चात्त्यैः शाब्दिकैस्तन्मतमेवावलम्ब्य द्योतकतावादस्यावैज्ञानिकः पदविज्ञानदृशाऽस्वाभाविकश्च पक्ष उपस्थापितः समर्थितश्च। अस्य प्रधानं कारणमासीद् वैदिकभाषाया अनालोचनमनालोडनञ्च। अत एव माधवभट्टेन सङ्केतितं यत्—शाकल्यः, यास्कः, पाणिनिश्च ऋगर्थपराः = वैदिकभाषायाः पदपदार्थनिर्धारणक्षमाः सन्ति। तथाऽपि तेऽपि यथाशक्त्यनुधावन्त्येव, न कृत्स्नतया व्याकुर्वन्तिः—

---

१. निरुक्तम्–१।१–दुर्गव्याख्या। २. ऋ० सं०–१।१६४।४५–सायणभाष्यम्।
३. वाजसनेयिप्रातिशाख्यम्–८।५०–अनन्तभट्टभाष्यम्।
४. जैनेन्द्रव्याकरणम्–१।२।१२९–महावृत्तियुतम्। ५. मुग्धबोधव्याकरणम्–१०।
६. प्रक्रियाकौमुदी–१।४।५९। ७. सारस्वतव्याकरणम्–८।
८. उपसर्गार्थसंङ्ग्रहः–पृ० ११–हस्तलिखितग्रन्थः।
९. वाचस्पत्यम्–पृ० १३३५-३६। १०. प्रकाशटीका–वाक्यपदीयम्।
११. अभिधानराजेन्द्रः–पृ० १०२०। १२. व्येङ्कटनाथवृत्तिः–गीता ९।३०।
१३. शिशुपालवधम्–१०।१५। १४. नारायणवृत्तिः–कुमारसं० १।२५।
१५. चित्रभानुवृत्तिः–किराता० २।५।
१६. वाक्यपदीयम्। १७. सरस्वतीकण्ठाभरणम्।
१८. वाल्मीकिरामायणम्–अयोध्याका० ८५-७–गोविन्दवृत्तिः।
१९. मुग्धबोधव्याकरणम्–सू० १०, दुर्गादासवृत्तिः।
२०. सदानन्दकृता सुबोधिनीव्याख्या–प्राकृतप्रकाशः–सू० ६।
२१. गणरत्नमहोदधिः–अव्ययप्रकरणम्–१२।
२२. काव्यशिक्षा–पृ० १२०। २३. षड्भाषाचन्द्रिका–२।१।३१।

**शाकल्यः पाणिनिर्यास्क इत्यृगर्थपरास्त्रयः ।**
**यथाशक्त्यनुधावन्ति न सर्वं कथयन्त्यमी ॥**
**संहितायास्तुरीयांशं विजानन्त्यधुनातनाः ।**
**निरुक्तव्याकरणयोरासीद् येषां परिश्रमः**[1] ॥ इति ।

आचार्यपाणिनेः पश्चाद्भाविनः सर्वेऽपि टीकाकारा जैनबौद्धादिवैयाकरणाश्चापि पूर्वाग्रहपीडिताः सन्तः स्वस्वपूर्वाचार्याननुकृतवन्तः । न हि तत्रासीत् काचिद् भाषाशास्त्रीयाऽऽत्मदृष्टिः, न वाऽऽसीद् भारतीयवाङ्मयस्यैतिहासिको बोधः । भाषाशास्त्रोपयोगि पदविज्ञानोपयोगि च भारतीयवाङ्मयस्य परिधिं दिङ्मात्रं सङ्केतयति माधवभट्टः—

अथ ये ब्राह्मणार्थानां विवेक्तारः कृतश्रमाः ।
शब्दरीतिं विजानन्ति ते सर्वं कथयन्त्यपि ॥
ताण्डके शाट्यायनके श्रमः शतपथेऽपि च ।
कौषीतके काठके च स्याद् यस्येह स पण्डितः[2] ॥
ऐतरेयकमस्माकं पैप्पलादमथर्वणाम् ।
तृतीयं तित्तिरिप्रोक्तं जानन् वृद्ध इहोच्यते ॥
न भाल्लवकमस्माभिस्तथा मैत्रायणीयकम् ।
ब्राह्मणं चरकाणां च श्रुतं मन्त्रोपबृंहणम् ॥
यज्ञानां कथयन्तीह येऽर्थवादं चतुर्विधम् ।
दृष्टमर्थमिवायत्नात् तानुपासीत पण्डितः[3] ॥

अन्यच्च—

ग्रन्थेऽस्ति पदसंख्येति यत्नो न भवतोस्ततः ।
पदसंख्या च भवतोर्वाच्या ग्रन्थं निरीक्ष्य तम्[4] ॥

इत्येतावच्छब्दप्रयोगस्य पदविज्ञानस्य च वाङ्मयम् । महामुनिपतञ्जलेः पश्चाद्भाविनः सर्वेऽपि शाब्दिकनिकायाः फणिभाषितभाष्याब्धेरनुवादमात्रं कुर्वन्तो दृश्यन्ते ।

एवं निपातोपसर्गाणां द्योतकतापक्षमुपस्थाप्याधुना वाचकतापक्षोऽपि विमर्शयिष्यते । तदनन्तरमेवोभयोः सिद्धान्तयोस्तोलनात्मक आनुसन्धानिकश्च निष्कर्षः फलाय कल्पेत ।

**वाचकत्वविषये यास्कमतम्**

इदन्तु प्रथितमेव यद् आचार्यगार्ग्यस्तत्समर्थको यास्कश्च निपातोपसर्गाणां वाचकत्वमेवाङ्गीकुरुतः । निरुक्तव्याख्यातारः स्कन्द[5]-महेश्वर[6]-दुर्गाश्चापि[7] वाचकतापक्षमेवा-

१. ऋग्वेदानुक्रमणी–८।७-९ ।
२. ऋग्वेदानुक्रमणी–८।१०-११ ।
३. ऋग्वेदानुक्रमणी–९।१०-१४;
४. तदेव–८।५।१४ ।
५. उद्गीथभाष्यम्–ऋ० सं० १।१६४।४५;
६. महेश्वरव्याख्या–निरुक्तम्–१।१।३ ।
७. दुर्गाचार्यव्याख्या–तदेव–१।१।१ ।

श्रयन्ति। यद्यपि पूर्वपक्षरूपेण दुर्गाचार्यो द्योतकतापक्षमप्याश्रयति, किन्तूत्तरपक्षत्वेन वाचकतापक्षस्यैव समर्थनं करोति। आचार्यस्कन्दः प्रतिपादयति यद् गवादीनि नामानि सर्वैर्मनुष्यैर्ज्ञायन्ते, अतस्तेषां वाक्ये प्रधानता। आख्यातोपसर्गनिपातानामर्थास्तु सर्वैर्मनुष्यैर्न ज्ञायन्ते, अतो वाक्ये तेषामप्रधानता। आचार्यस्कन्दस्याभिप्रायोऽयमेवास्ति यद् वाक्ये न केवलं निपातोपसर्गाः, अपि त्वाख्यातोऽपि तिरोहितार्थकः, अत एव बह्वर्थको भवति। अपरं मतं तस्यास्ति यन्निपातोपसर्गा अप्रधानत्वाद् विशेषणत्वेन वाक्यार्थं विशिषन्ति, तद्वदाख्यातोऽपि। महेश्वरस्तु स्पष्टतया ब्रवीति यन्निपातोपसर्गाणामर्थास्तु भवन्त्येव, वाक्ये तेषां प्रयोगा अपि स्वातन्त्र्येण जायन्ते। अन्यथा—**'यदुद्वतो निवतो याति निष्कौशाम्बिः'** इत्यादावनर्थकत्वात् तद्धितसमासो न स्याताम्। ऋग्वेद-मन्त्रेणापि[1] समर्थनं भवति महेश्वरमतस्य।

**वाचकतापक्षपाती भगवान् पाणिनिः**

अष्टाध्याय्यां महामुनिपाणिनिर्निपातोपसर्गाणां विभिन्नार्थतां निश्चिनोति। न हि तत्र तेन निर्दिष्टं यदेते शब्दा द्योतका वाचका वेति। भाषया यथा सर्वविधाः शब्दा अर्थमूर्तेः प्रकाशनाय परामृश्यन्ते, तथैवानेनापि मुनिना वाक्यार्थमूर्तेः प्रकाशनाय निपातोपसर्गाः स्वाधीनार्थत्वेन परामृष्टाः। अत एव माधवभट्टेन निर्दिष्टं यत्—भगवान् पाणिनिर्निपातोपसर्गाणां बहूनर्थानाह, तेषामर्थानां बाहुल्यात्तेऽत्र न सर्वे प्रदर्श्यन्ते—

**पाणिनिश्चाह भगवान् अर्थान् एषां बहूंस्तथा।**
**उदाहरणमेतेषां बाहुल्यान्न प्रदर्शितम्[2]॥**

पुनरत्र पाणिनिना निर्दिष्टा निपातोपसर्गाणां केचनार्थाः प्रदर्श्यन्ते—

(क) निपातार्था यथा—'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्[3]' इति। 'चादिषु च[4]', 'चवायोगे प्रथमा[5]', 'चाहलोप एवेत्यवधारणम्[6]', 'चादिलोपे विभाषा[7]' इत्यादिः।

(ख) उपसर्गार्था यथा—'उदोऽनूर्ध्वकर्मणि[8]', 'स्पर्धायामाङः[9]', 'अवेः प्रहसने[10]', 'आङ उद्गमने[11]', 'वेः पादविहरणे[12]', 'सम्प्रतिभ्यामनाध्याने[13]', 'उपाद्यमः स्वकरणे[14]',

१. 'स उद्वतो निवतो याति वेविषत्स गर्भमेषु भुवनेषु दीधरत्'–(ऋ० सं० ३।२।१०)–उद्वतः= उच्छ्रायवतः, निवतः =नीचैर्भाववतश्च' (सायणः)।
२. ऋग्वेदानुक्रमणी–७।१६। ३. अष्टा०–८।१।३०–'चिद्विशिष्टोऽयं चेदर्थे वर्तते' (काशिका)।
४. तदेव–८।१।५८–'चादिषु च परतः तिङन्तमगतेः परं नानुदात्तं भवति' (काशिका)।
५. तदेव–८।१।५९–'च वा इत्येताभ्यां योगे प्रथमा तिङविभक्तिर्नानुदात्ता भवति' (काशिका)।
६. तदेव–८।१।६२–'एवेत्येतच्चेदवधारणार्थं प्रयुज्यते' (काशिका)।
७. तदेव–८।१।६१–'चादीनां लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति' (काशिका)।
८. अष्टाध्यायी–१।३।२४। ९. तदेव—१।३।३१। १०. तदेव—१।३।३३।
११. तदेव—१।३।४०। १२. तदेव—१।३।४१। १३. तदेव—१।३।४६।
१४. तदेव—१।३।५६।

'अनुर्लक्षणे[१]', 'तृतीयार्थे[२]', 'हीने[३]', 'उपोऽधिके[४] च' 'अपपरी वर्जने', 'आङ् मर्यादावचने[५]', 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः[६]', 'अभिरभागे[७]', 'प्रतिः प्रतिनिधिप्रतिदानयोः[८]', 'अधिपरी[९] अनर्थकौ', 'सुः पूजायाम्[१०]', 'अतिरतिक्रमणे[११] च', 'अपिः[१२] पदार्थसम्भावनाऽन्ववसर्गगर्हासमुच्चयेषु', 'अधिरीश्वरे[१३]' इत्यादिः।

महामुनिपतञ्जलिनाऽपि निपातोपसर्गाणां भूयर्थाः परिसंख्याताः। तद्यथा—'निरादयः[१४] क्लान्ताद्यर्थे पञ्चम्या—निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः। निर्वाराणसिः' इति।

**माधवभट्टपुरस्कृतं वाचकत्वम्**

अस्मिन्नेव च सन्दर्भे माधवभट्टेनापि निपातोपसर्गाणां विविधा अभिधेयार्था उदाहृताः[१५]। तथा हि—

उपमायां निषेधे च दृश्यन्ते बहवो नञः।
तथा समुच्चयार्थीयाः 'अग्निमुषां न जरते'॥
'तस्मिन् त्साकं त्रिशता न','होता मनुष्यो न दक्षः'।
'अश्वे न चित्रे अरुषि' सम्प्रत्यर्थं नञं विदुः॥
अस्मै भीमाय च तथा सन्ति चान्येऽपि तादृशाः।
'विपां ज्योतींषि बिभ्रते' नकारस्तत्र पूरणः॥
बहुष्वर्थेषु दृष्टो नञ् निषेधेऽथ समुच्चये।
सम्प्रत्यर्थे इवार्थे च पूरणेऽपि च दृश्यते॥
प्रयुज्यते न वाक्यादावुपमार्थ इति स्थितिः।

श्लोकेष्वेषु माधवभट्टेन केवला नञर्थाः परामृष्टाः। केवलो नञ् इति निपातो वैदिकवाङ्मये कुत्रचिद् उपमार्थे प्रयुज्यते, कुत्रचिन्निषेधार्थे, कुत्रचित् समुच्चयार्थे, कुत्रचित् सम्प्रत्यर्थे, कुत्रचित् पूरणार्थे, कुत्रचिदतिशयार्थे, कुत्रचिदङ्गीकरणार्थे, कुत्रचिच्चानर्थकेऽपि। एतेषामर्थानां प्रयोगभूताः काश्चन ऋचोऽत्रस्तादुदाह्रियन्ते—

**(क) उपमार्थीयो[१६] यथा**

'येन वृद्धो न शवसा तुरो न स्वाभिरूतिभिः[१७]।' अत्रेमौ नशब्दावुपमार्थीयौ। तथा च स्कन्दः—'नशब्दावुपरिष्टादुपचाराद् उपमार्थीयौ। वृद्धो न = वृद्ध इवेति।

---

१. अष्टा०—१।४।८४। २ तदेव—१।४।८५।
३. तदेव—१।४।८६। ४ तदेव—१।४।८८। ५. तदेव—१।४।८९।
६. तदेव—१।४।९०। ७. तदेव—१।४।९१। ८. तदेव—१।४।९२।
९. तदेव—१।४।९३। १०. तदेव—१।४।९४। ११. तदेव—१।४।९५।
१२. तदेव—१।४।९६। १३. तदेव—१।४।९७। १४. महाभाष्यम्–२।२।१८।
१५. ऋग्वेदानुक्रमणी—३।२।१३–१६।
१६. ऋ० सं०—१।५।१५, १।८।५, ६।४७।१४, अथर्व० ४।२६।७, ६।२।२, तै०सं० १।१।१४, शतपथब्रा० १४।२।५।१६। १७. ऋ० सं०—६।४।३–स्कन्दभाष्यम्।

**(ख) निषेधार्थीयो यथा**

'तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः[१]' इति ।

अस्मिन् मन्त्रे नकारो निषेधार्थीयत्वेन प्रयुक्तः ।

**(ग) समुच्चयार्थीयो[२] यथा**

'....उपर्बुधे पशुषे नाग्नये स्तोमो बभूत्वग्नये[३]' ।

अस्मिन् मन्त्रे नशब्दः समुच्चयार्थेऽर्थाच्चार्थे प्रयुक्तः । तथा च स्कन्दस्वामी— 'न इति समुच्चयार्थीयः' इति ।

**(घ) सम्प्रत्यर्थीयो[४] यथा**

'वृष्णश्चन्द्रान्न सुश्रवस्तमान् गिरा वन्दस्व मरुतो अह[५]' । अस्यां ऋचि नशब्दः सम्प्रत्यर्थेऽर्थाद् वर्तमानार्थे प्रयुक्तः । तथा च सायणः—'नेति सम्प्रत्यर्थे । न = सम्प्रति, वृष्णः = वर्षितॄन्, चन्द्रान् = आह्लादकान्, सुश्रवस्तमान् = अतिशयेन शोभनयशस्कान् वन्दस्व = स्तुहि' ।

**(ङ) पूरणार्थीयो यथा**

'सुशेवो नो मृलयाकुरदृप्तक्रतुरवातः । भवान् सोम शं हृदे[६]' । अस्मिन् मन्त्रे नशब्दः पूरणार्थकोऽर्थात् पादपूरणार्थं इति ।

**(च) अतिशयार्थीयो यथा**

'देवो भुवन्नवेदा म ऋतानां नमो जगृभ्वाँ अभि यज्जुजोषत्[७]' इति । मन्त्रेऽस्मिन् नशब्दोऽतिशयार्थे प्रयुक्तः । तथा च सायणाचार्यः—'न वेदाः = अतिशयेन ज्ञाता भुवत् = भवेत् । अत्र निपातस्थो नकारोऽतिशयवाची' इति ।

**(छ) अङ्गीकरणार्थीयो यथा**

'अपि त्वां न लभेत् कर्णं राज्यलम्भोपपादनम्[८]' । महाभारतीयेऽस्मिन् श्लोके नकारोऽङ्गीकरणार्थे प्रयुक्तः । तथा च नीलकण्ठः—'शिरश्चालने नशब्दः । न लभेत् = लभेदेवेत्यर्थः' ।

---

१. ऋ० सं०—१।१६४।४८, वाररुचनिरुक्तसमुच्चयः—१।२६, मालतीमाधवम्—९।४८—पूर्णसरस्वतीरसमञ्जरीयुतम् ।

२. ऋ० सं० १।१२७।१०, १।१९०।२, २।२।७, २।११।२०, ६।२।१ ।

३. ऋ० सं०—१।१२७।१०—स्कन्दभाष्यम् ।

४. ऋ० सं०—५।६४।७, ६।४।३, १०।२९।२ ।

५. ऋ० सं०—८।२०।२० ।

६. ऋ० सं०—८।७९।७, १०।८९।१९ ।

७. ऋ० सं०—४।२३।४—सायणभाष्यम् ।

८. महाभारतम्—उद्योगप० १४२।२ ।

**(ज) अनर्थको यथा**

'व्यचस्वन्ता न पुष्ट्यै वनोति शिप्राभ्यां शिप्रिणीवान्[1]'। अस्याम् ऋचि नशब्दोऽनर्थकः। तथा च सायणः—'न इत्यनर्थको निपातः' इति।

पुरस्तात् परिगणिता नञर्था माधवभट्टेन निर्णीताः। एवं हि दृश्यते यदेक एव निपात उपसर्गश्च कथं स्वीयया वैविध्यपूर्णयाऽर्थमूर्त्या भाषायाः श्रियं सौन्दर्यञ्च समेधयति। हन्त! पाणिनेरर्वाक्कालिके संस्कृतवाङ्मये नञः केवलो निषेधार्थं एव प्रयुज्यमानोऽवलोक्यते। अत एव ह्याधुनिकैर्भाषाशास्त्रमनीषिभिः[2] समुपस्थाप्यतेऽयं सिद्धान्तो यत् पाणिनेरर्वाक्कालिकी संस्कृतभाषा कामं निपातोपसर्गाख्यातप्रयोग-दृष्ट्याऽतिदरिद्रा दृश्यते।

भवतु नाम, पुनरस्मिन् प्रसङ्गे वाचकतापक्षमेवाधिकृत्य शाब्दिकशिरोमणीनां विचाराः प्रस्तूयन्ते। महाभाष्यकारस्तु वाचकतापक्षमेवोद्भावयन् सिद्धान्तयति यन्निपातोपसर्गाणामयं स्वभाव एवास्ति, यद्यत्र कश्चित् क्रियावाचीशब्दः प्रयुज्यते, तत्र सामान्यया क्रियया योऽर्थोऽभिधीयते, तदतिरिक्तोऽर्थस्तैरभिधीयते। तथा च महाभाष्यम्—'उपसर्गाश्च पुनरेवात्मका यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते, तत्र क्रियाविशेषमाहुः[3]' इति। अत्र स्पष्टमुद्घोषयति महामुनिपतञ्जलिर्यद् यत्र क्रियावाची शब्दः = क्रियाया वाचकः शब्दः, न तु द्योतकः, प्रयुज्यते, तत्र क्रियाविशेषमाहुः = ससाधनां क्रियामाहुरिति। उपरि पठितं वार्त्तिकं विवृण्वन् स पुनः स्पष्टयति यत्—'√इ[4] (इण्) [=गतौ] इति धातोः पृथक्प्रयुज्यमानस्याधेर्योऽर्थो भवति, स एवार्थः √इ–सहकृतस्याधेः। कः पुनरन्यत्राधेरर्थः? अधिरुपरिभावं वर्तते' इति। इत्थं महा-मुनिपतञ्जलेर्महाभाष्यविश्लेषणेनोपसर्गाणां वाचकताविषये तस्यौदार्यभावो महामुनि-पाणिनेरौदार्येण सह संवादं करोति।

**प्रातिशाख्येषु वाचकत्वपरामर्शः**

प्रायेण सर्वेषु प्रातिशाख्यग्रन्थेषु निपातोपसर्गाणां वाचकतापक्ष एव प्रतिष्ठापितो वर्तते[5]। यतो हि प्रातिशाख्यग्रन्थास्तु शब्दशास्त्रदृशा, विषयदृशा च वैदिकव्याकरणस्य प्रातिनिध्यं कुर्वन्ति। वैदिकध्वनीनामुच्चारणप्रक्रियायाम्, उदात्तानुदात्तस्वरित-प्रक्रियायाम्, स्वदीर्घप्लुतविचारचर्चायाम्, पदपदार्थवाक्यवाक्यार्थनिर्धारणप्रक्रिया-याम्, नामाख्यातोपसर्गाणामुदात्तानुदात्तस्वरितभेदेन पदपदार्थास्कन्दनगवेषणायां च यथा प्रातिशाख्यग्रन्था वैदिकभाषायाः संरक्षणं शब्दशास्त्रीयदृष्ट्या विवेचनं च कुर्वन्ति, न तथा वैज्ञानिकी परिपाटी दृश्यते लौकिकसंस्कृतव्याकरणेषु। वाजसनेयि[6]-तैत्तिरीय[7]-प्रातिशाख्ययोर्निपातोपसर्गाणां वाचकता स्वीक्रियते। ऋग्वेदप्रातिशाख्ये तु प्रतिपदोक्त-

---

१. ऋ० सं० १०।१०५।५–सायणभाष्यम्। २ दि ग्रीक पार्टिकल्स, पृ० २०३।
३. महाभाष्यम्–१।३।१।। ४. तदेव—१।३।१। ५. अथर्वप्रातिशाख्यम्–१।१।११।
६. वाजसनेयिप्रातिशाख्यम्–६।२। ७. तैत्तिरीयप्रातिशाख्यम्–१०।९।

तया निपातोपसर्गाणां वाचकतैव प्रतिष्ठापिता वर्तते । तद्यथा—**'उपसर्गा विंशतिरर्थवाचकाः सहेतराभ्यामितरे निपाताः'**[१] । अस्य प्रातिशाख्यस्य व्याख्यात्रोव्वटाचार्येण व्याख्यातं यत्—'ते च[२] इतराभ्याम् = नामाख्याताभ्याम् इति यावत् सह अर्थवाचकाः= अर्थवाचिनः, न तु केवला इत्यर्थः । इतरे = नामाख्यातोपसर्गेभ्योऽन्ये निपाता वेदितव्याः' इति ।

पुनस्तस्मिन्नेव सन्दर्भे निपातानां लक्षणं कुर्वता ऋक्प्रातिशाख्यकारेण निपातानां वाचकत्वमेवाभ्यधायि—

**निपातानामर्थवशान्निपातना—**
**दनर्थकानामितरे च सार्थकाः ।**
**नेयन्त इत्यस्ति संख्येह वाङ्मये**
**मिताक्षरे चाप्यमिताक्षरे च ये[३] ॥**

प्रातिशाख्यश्लोकममुं व्याचक्षाण उव्वटाचार्यो विशदयति यत्—'अर्थविशेषे केचन निपाता निपातिताः । तथा च केचन निपाताः सार्थकाः, केचन च निरर्थकाः । परम् इयत्तया ते मिताक्षरे = पद्ये, अमिताक्षरे = गद्ये च सङ्ख्यातुं न शक्याः[४]' इति । ऋक्प्रातिशाख्यकारसिद्धान्तं वृहद्देवतायां तेनैवानुमोदितम्—

उच्चावचेषु चार्थेषु निपाताः समुदाहृताः ।
कर्मोपग्रहणार्थे च क्वचिच्चौपम्यकारणात्[५] ॥ इति ।

अस्मिन् श्लोके शौनकेनोदघोषि यत्—'अर्थेषु = अभिधेयेषु निपाताः समुदाहृताः =पठिताः' इति । एवमेव निपातोपसर्गाणां विषये द्योतकताऽऽग्रहग्रस्तेन भर्तृहरिणाऽप्यूरीकृतं यत्—'आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः[६]' । हरीणामयमेवाशयो यन्निपाताः कुत्रचिदेकैकशः पृथक् पृथगर्थाभिधायिनः, कुत्रचिच्च सम्भूयार्थस्य वाचकाः संपद्यन्ते ।

अथर्वप्रातिशाख्ये[७] तु निपातोपसर्गाणां सामर्थ्यम् = स्वतन्त्रार्थः, स्वतन्त्रप्रयोगश्च प्रतिपादितो वर्तते । यतो हि निपाताख्यातयोरुपसर्गाख्यातयोर्वा समास उभाभ्यां पदाभ्यां सामर्थ्यवद्भ्यां भाव्यम्, अन्यथाऽसमर्थयोः समासः = संघात एव न स्यात् । समस्यमानैः पदैः स्वतन्त्रार्थैर्भवितव्यमेव । महामुनिपतञ्जलिनाऽपि संवादितमेतत् तथ्यम्—'समर्थः पदविधिः[८]' इति सूत्रे । इत्थं प्रातिशाख्यग्रन्थानां पर्यालोचनेनापि वाचकतापक्षस्यैव दृढोऽपि सिद्धान्तो दृढतरत्वमाटीकते ।

---

१. ऋक्प्रातिशाख्यम्–१२।६ ।
२. उव्वटाचार्यभाष्यम्–ऋ० प्रा० १२।६ । ३. ऋ० प्रा० १२।९ ।
४. उव्वटभाष्यम्—ऋ० प्रा० १२।९ । ५. बृहद्देवता–२।९१ ।
६ वाक्यपदीयम्–२।१९२ । ७. अथर्वप्रातिशाख्यम्–१।१।१३ । ८. अष्टा०–२।१।१ ।

**पाणिनिपश्चाद्भाविनां शाब्दिकानां वाचकत्वनिर्णयः**

प्रसङ्गप्राप्तेऽस्मिन् विषये महामुनिपाणिन्यर्वाचीनानां शाब्दिकानां सिद्धान्ता अपि तोलनात्मकपर्यालोचनमपेक्षन्ते। महावैय्याकरणभोजराज[1]-क्षीरस्वामि[2]-हर्षकीर्ति[3]-दण्डनाथ[4]-आशुबोधकार[5]-महादेवभट्टप्रभृतयो[6] निपातोपसर्गाणां वाचकतामतिप्रौढ्या शैल्या प्रतिपादयन्ति। शृङ्गारप्रकाशकृद्भोजदेवः[7] स्वीकरोति यन्निपातोपसर्गाः षोढा भवन्ति। ते खलु—वाचकाः, द्योतकाः, विशेषकाः, सहाभिधायकाः, कार्यार्थकाः, निरर्थकाश्चेति षोढा विप्रथन्ते। भोजराज-क्षीरस्वामि-आशुबोधकाराश्च निपातोपसर्गाणां नामत्वम् = संज्ञात्वमपीच्छन्ति। तेषां सिद्धान्तोऽस्ति यद् यथा नामादयो धातवश्च प्रकृतिरूपेण प्रत्ययानपेक्षन्ते, तद्वन्निपातोपसर्गादयोऽपि प्रत्ययमपेक्षमाणाः सन्तः प्रकृतित्वं भजन्ते। आशुबोधकृता तु चतुर्विधेषु पदेषु निपातोपसर्गाणां गणना प्रकृतित्वेनाम्नातम्। स विवृणोति यत्—'नामधातूपसर्गनिपाताः प्रकृतिः। तत्र नामप्रकृतिकाः सुप्तद्धितादयः, धातुप्रकृतिकास्तिङ्कृदादयः, उभयप्रकृतिकाः क्यजादयः, तद्धिताः पुनर्निपातोपसर्गप्रकृतिका अपि। तेन **'नतराम्', 'सुतराम्'** इत्यादयः प्रयोगा अपि भवन्तीति'[8]। प्रक्रियासर्वस्वे नारायणभट्टेनापि निपातोपसर्गाणां प्रातिपदिकत्वमुद्भावयता महामुनिपाणिनेर्नामोल्लेखपुरस्सरं तस्य प्रातिपदिकसिद्धान्ता अङ्गीकृताः। यद्यथा—**'अर्थवत्कार्यमस्त्येवेत्यर्थवत्सूत्र ऊचिवान्[9]'** इति।

एवमेतेषां शाब्दिकानां निपातोपसर्गाणां विषये सिद्धान्तपर्यालोचनेन साधिकारं कथितुं प्रभवामो यद् भाषाशास्त्रीयदृष्ट्या, भाषाप्रवाहदृष्ट्या चैतेऽत्युदारमनसस्सन्ति। पदानां तेषामर्थानां च स्वातन्त्र्यविषये यो विचारप्रवाहो वैदिकसाहित्ये प्रवाहित आसीत्, तस्य प्रातिनिध्यं येन केन प्रकारेणैते शाब्दिकाः स्वस्वग्रन्थरत्नेषु कुर्वन्ति।

**पालि-प्राकृत-अपभ्रंशभाषासु निपातार्थविकासः**

प्राचीनभारतीयसाहित्ये पालिप्राकृतभाषयोर्मूर्द्धन्यं स्थानमस्ति, विशेषतो भाषाशास्त्रदृशा। कालान्तरं प्राप्तासु सर्वासु व्यवह्रियमाणभाषासु कया रीत्या परिवर्तनं भवति, केन प्रकारेण भाषाया अभिव्यञ्जना शनैः शनैरन्यथास्वरूपं गृह्णाति, अस्य सर्वोत्तमं निदर्शनं स्त उभे भाषे। निपातोपसर्गाणां सम्बन्धेऽपि पालिप्राकृतभाषयोः शाब्दिकानामयमेवाभिप्रायोऽस्ति यत् ते वाचका एव भवितुमर्हन्ति, न तु द्योतकाः।

---

१. शृङ्गारप्रकाशः–१, पृ० ८। २. क्षीरतरङ्गिणी–चुरादिः–३२९।
३. सारस्वतीये धातुपाठ उद्धृतः—दि डिस्क्रिप्टिव कैटेलाग आफ संस्कृत मैन्यु० न० ६७८, पृ० २६०, आड्यार लाइब्रेरी।
४. हृदयहारिणीव्याख्या–सरस्वतीकण्ठाभरणम्–सू० १२८।
५. आशुबोधव्याकरणम्–संज्ञाप्रकरणम्–३२। ६. उपसर्गवर्गः–२।
७. शृङ्गारप्रकाशः–१, पृ० १६। ८. आशुबोधव्याकरणम्–संज्ञाप्र०–३३।
९. प्रक्रियासर्वस्वम्–सुब्विधिखण्डम्–पृ० १९२।

प्राकृतभाषाऽनुशासनकृतत्रिविक्रम[1]-अप्पय्यदीक्षितौ[2] च निपातोपसर्गवाचकतापक्ष-पातिनौ। इमावपि मन्येते यन्निपातोपसर्गा नियतार्थवृत्तयः = निश्चितार्थकाः, सन्ति। अप्पय्यदीक्षितस्तु[3] निपातोपसर्गाणां तथैव प्रकृतित्वं प्रतिपादयति यथा पूर्वं चर्चा कृता।

पालिशब्दानुशासनकृता मोग्गलनाथथेरेणापि[4] निपातोपसर्गाणां स्वतन्त्रार्थकत्वमतो वाचकत्वमभ्यधायि। अत एव प्राचीनप्राकृतमयेष्वशोकाभिलेखेषु च निपातोपसर्गाणां विकासः स्वायत्तार्थत्वेनोपलभ्यते। गिरनार-कालस्योरभिलेखयोः दुस् इत्युपसर्गः √कृ [= करणे] इति धातुना संयुज्यमानः सन् एकं स्वतन्त्रार्थकं पदं निर्माति—'दुस् + √कृ > दुष्करम् > दुकरम्—र > ल् > दुकलम् = श्रेयस्करमित्यर्थः[5]'।

एवमेव पञ्चमशताब्द्यां निर्मितमृच्छकटिकनाटके प्रयुज्यमानायाः प्राकृतभाषाया अपि विमर्शनेनैवंविधाः केवलनिपातरूपा उपसर्गरूपाश्च शब्दा दृश्यन्ते, ये सर्वथा स्वतन्त्रार्थकत्वेन प्रयुज्यमाना अवलोक्यन्ते। 'अन्तर्' इत्युपसर्गः चित्तार्थेऽन्योन्यार्थे च प्रयुज्यमानः सन् किञ्चिद् ध्वनिपरिवर्तनेन सर्वतोभावेन संज्ञाशब्दानामिव नूतनता-माप्नोति। यथा—'अन्तरम् > अन्तलम् > अतलम् = चित्तम्, अन्योन्यं वार्थः' इति। मृच्छकटिकव्याख्याकृतलल्लदीक्षितस्यायमेवाभिप्रायः[6]। मृच्छकटिकनाटके प्रयुक्तः चित्तार्थकान्तर्शब्द एव तैत्तिरीयब्राह्मणे[7]—'अन्त्रम् > आन्त्राणि रूपेण नामशब्दा-नामिव व्यवहारपदवीमेति। तद्यथा—अन्तर् > अन्त्रम् > आन्त्राणि। वस्तुतः प्राकृत-पाल्यपभ्रंशभाषासूपसर्गनिपातानां किञ्चिद् ध्वनिभेदेन सर्वथा नवीनशब्द-निर्माणभावना दृश्यते।

अत्राधुना तावन्निपातोपसर्गाणां वाचकताविषये पाश्चात्त्य-पौरस्त्याधुनिकसंस्कृत-भाषागवेषकाः किं कथयन्तीत्यपि विमर्शनीयं वर्तते। यतो हि संस्कृतभाषाया अनुसन्धाने एतेषामध्यवसायः, विशेषतो विभिन्नार्यभाषाणां सामीप्यसम्पादने, तासामैक्यसम्पादने चातिश्रेयस्करः सञ्जातः। मैक्समूलर[8]-मैकडानल[9]-ह्विट्नी[10]-बरो[11]-गोल्डस्टूकर[12]-स्पेजर[13]—वान्द्रियैज[14]—ब्लाख[15]-मेश्चानिनोव[16]-जैक्सन[17]-मोनियरविलियम्स[18]—थामस-

---

१. प्राकृतशब्दानुशासनम्—२।१।७७।

२. प्राकृतमणिदीपः—२।१।७६—श्रीनिवासकृता दीधितिव्याख्या।

३. प्राकृतमणिदीपः—१।२।५।

४. अभिधानप्पदीपिका—१३।

५. अशोक के अभिलेख—गिरनार—५।१, कालसी—५।१३।

६. मृच्छकटिकम्—१, पृ० ३७—लल्लदीक्षितव्याख्या।

७. तै० ब्रा० २।४।३।

८. संस्कृत ग्रामर—पृ० १५३।

९. ए वैदिक ग्रामर—पृ० २०८।

१०. दि संस्कृत ग्रामर—पृ० ३९६।

११. संस्कृत लैंग्वेज—पृ० १४७।

१२. पाणिनि—पृ० २२५।

१३. संस्कृत सिन्टैक्स—पृ० ११४।

१४. भाषा—पृ० १३५।

१५. भारतीय आर्यभाषा—पृ० १४।

१६. इच वर्ड हैज इट्स ओन मीनिंग एण्ड देयर इज नो वर्ड विदाउट मीनिंग (ध्वनिसिद्धान्त पृ० २१—भोलाशंकर व्यास)।

१७. संस्कृत ग्रामर—पृ० २०९।

१८. ए संस्कृत इंग्लिश डिक्शनरी—पृ० २१९।

क्लार्क[1]-गुणे[2]-आप्टे[3]–प्रभृतयो भाषाविदो निपातोपसर्गाणां वाचकतां प्रख्यापयन्ति। ह्विट्नी-स्पेजर-मैकडानल-वान्द्रियैजप्रभृतयस्तु निपातोपसर्गाणां नैसर्गिकीवाचकतामर्थवत्ताञ्चोद्घोषयन्ति स्म। एतेषां सिद्धान्त एवास्ति यच्छब्दानामर्थादर्थान्तरं भवतु नाम, अर्थाच्छब्दानामर्थाः परिवर्ततां नाम, किन्त्वर्थविहीना शब्दप्रतिमा न भवति। ऐतिहासिकप्रवाहे दैशिकप्रसारे च शब्दानामर्थाः काममर्थान्तरतां भजन्ते, यतो हि भाषासु समाजधर्मितायाः, कालधर्मितायाः, देशधर्मितायाश्च प्रभावः स्वाभाविक एव। भाषा हि नाम मानवस्यातिसुकुमारं किमपि वस्तु। न हि सा निर्धारितेन नियमबद्धेन च मार्गेण सर्वदा धावति, अथ च बीजगणितीयचिह्नानामिव रिक्तार्थत्वेनापि व्यवहर्तुं न शक्यते।

यदा कश्चिच्छब्दः कालक्रमेण च रिक्तार्थतां व्रजति, तत्पूर्वमेव तस्यापरोऽर्थः शब्दानुबिद्धेनेव प्रसिद्धिं प्राप्नोति[4]। अस्य विश्लेषणस्यायमेवाभिप्रायो यद् वाचकतायाः सम्बन्धः सार्थकेन शब्देनास्ति, द्योतकतायास्तु रिक्तार्थकेनोत वा पादपूरकेणाथवा निरर्थकेन भवति। पदद्योतकतावादस्य निरर्थकतावादस्य च खण्डनं करोति महामुनिः पतञ्जलिः—**'अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात्'**[5] इति। निरुक्तव्याख्याताऽऽचार्यदुर्गोऽपि प्रतिपादयति यत्—**'वर्णानर्थक्ये पदानर्थक्यम्, पदानर्थक्ये वाक्यानर्थक्यम्, वाक्यानर्थक्ये सति शास्त्रानर्थक्यम्[6]'** इति। अत एव पदानर्थक्यवादो भाषाशास्त्रीयदृशाऽपि मिथ्या।

अत्र पुनर्वैदिकसाहित्यान्तस्साक्ष्यैरपि भाषाशास्त्रीयदृष्ट्या द्योतकता-वाचकतावादयोः सन्दर्भपुरस्सरं विमर्शनं नितरामावश्यकं प्रतिभाति। भाषाया निरुक्तिप्रसङ्गे लक्षणानि निरुक्तग्रन्थे प्रतिष्ठापितानि सन्ति, तैर्लक्षणैरपि निपातोपसर्गाणां वाचकतापक्ष एव निर्धारितो भवति। तानि लक्षणानि तावत्—

**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्[7]** ॥ इति।

अर्थात् पञ्चविधनिरुक्ते—वर्णागमः, वर्णविपर्ययः, वर्णविकारः, वर्णनाशः, धातूनामर्थातिशयाश्चेति समायान्ति। निरुक्तलक्षणस्यास्य व्यापकता सम्पूर्णवैदिकसाहित्य उपलभ्यते। वस्तुत आधुनिकभाषाशास्त्रस्य मर्मभूतमिदं पद्यम्। कामं हि यदाधुनिकभाषाशास्त्रविद्भिः प्रतिपाद्यते यत् तत्तद्भाषासु शब्दानां योऽर्थसङ्कोचः, अर्थविकासः, अर्थादेशश्च भवति, तदपि पञ्चविधनिरुक्तलक्षणस्यानुवादमात्रमेव। अत्राधस्तात् तावद् यथाक्रममुदाहरणं प्रस्तूयते वर्णागमादीनाम्—

---

१. दि कम्पैरेटिव ग्रामर–पृ० ३३१।
२. तुलनात्मक भाषाविज्ञान–पृ० ५६।
३. संस्कृत इंगलिश डिक्शनरी–पृ० ४६५।
४. भाषा–पृ० २५७।
५. महाभाष्यम्—'हयवरट्'–सूत्रम्, पृ० ९४।
६. निरुक्ते—१।१।४–दुर्गाचार्यः।
७. निरुक्तलघुविवृतिः—पृ० ४।

**(१) वर्णागमः**

(क) सुन्दरी <सु + नरी > सुनरी > सूनरी > सुन्दरी = शोभनमनुष्येत्यर्थः[१] ।

(ख) अपुवायते < अप + √वे [= तन्तुसन्ताने] > अपवायते > अपुवायते = पूतीभवतीत्यर्थः[२] ।

**(२) वर्णविपर्ययः**

(क) श्वापयः < आशु + √आप् [= अभिव्याप्तौ] > श्वापयः = आशुसर्वव्यापिन इत्यर्थः[३] ।

(ख) श्वात्रः < आशु + √त्रै [= पालने] > आशुत्रः > श्वात्रः = आशुत्रातेत्यर्थः[४] ।

**(३) वर्णविकारः**

(क) पलायिताय < परा + √अय् [= गतौ] > परायिताय > पलायिताय = हविर्भूत्वा देवसकाशं प्राप्तायेत्यर्थः[५] ।

(ख) स्न < स्म > स्न = ऐतिह्यार्थे, वर्तमानार्थे, पादपूरणार्थे च । अत्र 'स्म' इति निपातो वर्णविकारमनुभवन् 'स्न' इति रूपं प्राप[६] ।

**(४) वर्णनाशः**

(क) धिष्ठितम् < अधि + √स्था [= गतिनिवृत्तौ] > अधिष्ठितम् > धिष्ठितम् = स्थितमित्यर्थः[७] ।

(ख) परि < उपरि > परि—तव परि = तवोपरीत्यर्थः[८] ।

(ग) दूढ्यः < दुर् + धियः > दुर्धियः > दूढ्यः = पापबुद्धीनित्यर्थः[९] ।

(घ) बेकुरयः < वि + √कृ [= करणे] > विकरयः > बिकरयः > बेकुरयः = वृष्ट्यादिकरणशीला इत्यर्थः[१०] ।

---

१. तै० सं०—१।६।३—भट्टभास्करभाष्यम्; २. तदेव ।
३. तै० आ०—१।९।३८—भट्टभास्करभाष्यम् ।
४. तै० स०—१।३।३—'श्वात्रोऽसि = आशुत्राताऽसि । आशुशब्दस्य पूर्वापरवर्णविपर्ययः' ।
५. तै० सं०—७।१।२९—भट्टभास्करभाष्यम् ।
६. तै० सं०—१।११।५३—'स्न-इति ऐतिह्ये, पादपूरणे च । छान्दसो मकारस्य नकारः' (भट्टभास्करभाष्यम्) ।
७. गीता—१३।१७, भागवतम्—८।१७।२४, १२।९।३२ ।
८. ऋ० सं०—१०।१८।१३—'उपरि शब्दस्य च उकारलोपः' (स्कन्दः) ।
९. ऋ० सं०—१।९४।८—स्कन्दभाष्यम् ।
१०. तै० सं०—३।४।७—'बेकुरयः = वृष्ट्यादिकरणशीलाः । वेरुपसर्गस्य स्वरव्यञ्जनयोर्व्यावृत्तिः' (भट्टभास्करभाष्यम्) ।

**(५) धातोरर्थातिशययोगः**

(क) अहिः <आ + √हन् [=हनने]>आहिः >अहिः =आगत्य हन्ता मेघानाम्[१]।

(ख) निलयते <निर् + √अय् [=गतौ]>निरयते >निलयते = दूरी-भवतीत्यर्थः[२]।

पुरस्तादुद्धृतानि कानिचिन्निदर्शनानि वर्णागम-वर्णविपर्यय-वर्णविकार-वर्णनाश-धातोरर्थातिशययोगपरिणामानि सन्ति ।

अत्र तावद् विमर्शपदवीमारोहतीयं समस्या यद् वर्णागमवर्णविकार-वर्णनाशादिभिः कथं साधयितुं शक्यते यन्निपातोपसर्गाः स्वतन्त्रार्थाश्चासन्, अत एव तेऽर्थवाचकाः सन्ति ? कैश्चिदुदाहरणैः समाधानं भविष्यत्यस्याः समस्यायाः। बहव एतादृशाः संज्ञाशब्दा नामशब्दाश्च संस्कृतभाषायां व्यवह्रियमाणाः सन्तो दृष्टिपथमायान्ति, येष्विमानि निरुक्तप्रतिपादितानि पदधर्मिकाणि कार्याणि सञ्जातानि, किन्तु तेषामर्थावबोधे न काचिद् विप्रतिपत्तिर्भवति । 'सुन्दरः'[३] 'घनः'[४], 'बिन्दुः'[५], 'विंशतिः'[६], 'रज्जुः'[७], 'सिकता'[८] इत्यादयो शब्दा वर्णागम-वर्णविपर्ययादिकार्याणि पदधर्मित्वेनानुभवन्तः सन्तः स्वीयामात्मशक्तिम्=अर्थावबोधशक्तिं व्यञ्जयन्ति । अत्रायं प्रश्नः समुदेति यदुपर्युदाहृताः शब्दाः किं स्वात्मशक्तिम् = अर्थाव-बोधशक्तिं न वहन्ति ? उत्तरं तु स्पष्टमेव । यदीमे शब्दास्तान्येव कार्याण्यनुभवन्तः स्वार्थं वहन्ति, तर्हि तेनैव नियमेन तान्येव कार्याण्यनुभवन्तो निपातोपसर्गा अपि कथं न स्वार्थं वहन्ति ? वहन्त्येव । समर्थयेते च यास्क-महाभाष्यकारावमुं सिद्धान्तम् । तद्यथा—**'अथाप्याद्यन्तविपर्ययो भवति स्तोका रज्जुः, सिकतास्तर्क्विति[९]', 'लोपागम-वर्णविकारज्ञो हि सम्यग् वेदान् परिपालयिष्यतीति । रक्षार्थं वेदानामध्येयं व्याकरणम्[१०]'** इति । आभ्यां यास्क-पतञ्जलिसिद्धान्ताभ्यामिदमेव निष्कृष्यते यद् भाषाया ऐतिहासिक-परिवर्तने देशकालप्रभावाच्छब्देषु विकृतिर्भवत्येव, किन्तु न तेनार्थक्षतिर्भवति । एतत्तु भवितुं शक्यत एव यद् विकारमापन्नेन केनचिच्छब्देनान्यार्थसम्पादनं नाम, किन्त्वर्थ-विहीनः शब्दस्तु न कल्प्यते ।

---

१. तै० सं०–३।१।११–'अहिः =आगत्य हन्ता मेघानाम् । आङ्पूर्वाद्धन्तेः डिप्रत्ययः । उपसर्गस्य 'ह्रस्वत्वम्' (भट्टभास्करभाष्यम्) ।

२. तै० ब्रा० ३।१।२४ ।

३. तै० सं० १।६।३ ।

४. निरुक्तम्—२।१८ ।

५. निरुक्तलघुविवृतिः—२।७।८ ।

६. संस्कृत लैंग्वेज—पृ० ३१२ ।

७. निरुक्तम्—२।२९ ।

८. तदेव ।

९. तदेव ।

१०. महाभाष्यम्—१।१।१ ।

अत्रेदमप्यवधारणीयमस्ति यद् यासां भाषाणां कालिकदृष्ट्याऽतिविस्तीर्ण इतिहासो भवति, तासु भाषासु निश्चितरूपेण शब्दानां केचिदर्था विस्मर्यन्ते, केचिद् नवीनार्था आरोप्यन्ते, केचिदुभयार्थकाः शब्दा एकमर्थमेव वहन्ति, केचिदेकार्थकाः शब्दा उभयार्थतामथ चानेकार्थतां व्रजन्ति। सभाजयति च तत्त्वमिदं महामुनिः पतञ्जलिः। तथा हि—'कथं पुनर्ज्ञायते अयं प्रकृत्यर्थः, अयं प्रत्ययार्थ इति? अन्वय-व्यतिरेकाभ्याम्। अन्वयाच्च व्यतिरेकाच्च। कोऽसावन्वयो व्यतिरेको वा? इह पचतीत्युक्ते कश्चिच्छब्दः श्रूयते, पच्छब्दश्चकारान्तः, अतिशब्दश्च प्रत्ययः। अर्थोऽपि कश्चिद् गम्यते, विक्लित्तिः कर्तृत्वमेकत्वं च। पठतीत्युक्ते कश्चिच्छब्दो हीयते, कश्चिदुपजायते, कश्चिदन्वयी। पच्छब्दो हीयते, पठशब्द उपजायते, अतिशब्दोऽन्वयी। अर्थोऽपि कश्चिद्धीयते, कश्चिदुपजायते, कश्चिदन्वयी। विक्लित्तिर्हीयते, पठिक्रियोपजायते, कर्तृत्वं चैकत्वं चान्वयी। ते मन्यामहे यः शब्दो हीयते तस्यासावर्थः, योऽर्थो हीयते, यः शब्द उपजायते तस्यासावर्थः, योऽर्थ उपजायते। यः शब्दोऽन्वयी तस्यासावर्थः, योऽर्थोऽन्वयी[1]' इति। महामुनिपतञ्जलेः प्रतिपादनस्यास्यायमेवाशयो यदैतिहासिकसंस्रवेऽनुभवन्त्येव हि शब्दा अर्थानुर्वरत्वम्। भाषाया लम्बायमान इतिहासे कालस्य, देशस्य, तत्तज्जातीनाम्, तत्तद्भाषाणां च प्रभावस्त्वपरिहार्यत्वेन स्वीक्रियत एवाधुनिकभाषाशास्त्रमर्मज्ञैः। संस्कृतभाषाया इतिहासस्त्वविच्छिन्नरूपेणातिविशालतामातनोति। अतोऽस्यां भाषायां तासां तासां परिस्थितीनां प्रभावस्तु सञ्जात एव। प्रसङ्गोऽयमुदाहरणैः स्फुटतां यास्यति।

ऋग्वेदे 'असुर'शब्दः 'अरि'शब्दश्चानेकार्थकावास्ताम्। असुरशब्दस्य तत्र चत्वारोऽर्था उपलभ्यन्ते—असुरः = प्रज्ञावान्, बलवान्, राक्षसः, शत्रुरिति। छान्दोग्य-ब्राह्मणे[2], अवेस्ताभाषायां[3] च किञ्चिद् ध्वनिभेदेनायमसुरशब्दोऽनेकार्थको विजृम्भते। यथा—असुरः > अहुरः > अहुरा = स्वामी, बलिष्ठः, दैत्यश्च। अनेकार्थकोऽयम् असुर-शब्दोऽधुना संस्कृतभाषायाम् अन्यास्वप्याधुनिकभारतीयभाषासु च दैत्यार्थस्यैव वाहकः संवृत्तः। एवमेव 'अरि'शब्दोऽपि ऋग्वेदे चतुरर्थक आसीत्—अरिः = ईश्वरः, मित्रः, गन्ता, शत्रुश्चेति[4]। अयमेव 'अरिशब्दः' 'अर्यः = मित्रादयः', 'आर्यः = श्रेष्ठः' इत्यादि-शब्दानामुपादानकारणम्। अवेस्ता[5]-लैटिन-हित्तीभाषाभिरपि[6] प्रायेण 'अरि'शब्द-स्यैष्वेवार्थेषु संवादो भवति—अरिः > अवे० अलि > लै० अलि > अलिउस > हि० अर = मित्रः, भक्तः, पूज्यश्चेति।

---

१. महाभाष्यम्—१।३।१।
२. छा० ब्रा० १।६।२२।
३. अवेस्ता—पृ० २८।
४. ऋ० सं० १०।२८।१—'अरिः = ईश्वरः, अर्यः = मित्रादयः। सर्वत्र 'अरि'-शब्दस्यार्थस्तु स्कन्दस्वामिनोऽभिमतः।
५. अवेस्ता—पृ० ६८।
६. दि संस्कृत लैंग्वेज, पृ० ४०।

किं बहुना, तत्तद्भाषाणां सर्वस्वभूतो निषेधार्थको 'नञ्' इति निपातोऽपि वैदिकसाहित्ये कुत्रचिद् उपमार्थीयः[१], कुत्रचिद् निषेधार्थीयः[२], कुत्रचित् समुच्चयार्थीयः[३], कुत्रचित् सम्प्रत्यर्थीयः[४], पादपूरणार्थीयः[५], कुत्रचिद् अतिशयार्थीयः[६], कुत्रचिद् अङ्गीकरणार्थीयः[७], कुत्रचिच्चानर्थीयः[८] सन् व्यवहारपदवीमारोहति। पाणिनेरर्वाक्कालिके संस्कृतसाहित्येऽयं नकारः केवलो निषेधार्थस्यैव समुद्वाहकोऽभूत्। मन्ये यन्महामुनिपाणिनिनैव ञ्-कारानुबन्धः संश्लेषितोऽस्मिन्। तत्पूर्वं निरनुबन्धकोऽयम् 'न'-कार आसीदित्यपि संभाव्यते। अनुबन्धासञ्जनादेवास्यार्थशक्तिः सङ्कुचिता संयमिता च पाणिनिना। अत्राववेयं वर्तते यदिदमर्थपरिवर्तनं सहस्राब्दीपर्यन्तमविच्छिन्नरूपेण संप्लवमानासु भाषास्वेव सङ्घटते। अतिविस्तृतकालसापेक्षमिदं परिवर्तनम्। एवमेव निपातोपसर्गाणामर्थाः कालक्रमेण केचिद् विस्मृताः, केचिद् विस्मारिताः, केचिच्चान्यार्थतामपि गताः। संवदति चेदं तथ्यं वरोमहोदयः[९]।

**द्योतकत्व-वाचकत्ववादस्य तोलनात्मकं परीक्षणम्**

अत्र पुनराचार्यशाकटायन-गार्ग्य-तत्समर्थकैश्च प्रवर्तितयोर्द्योतकता-वाचकतावादयोः समीक्षणमत्यावश्यकं प्रतिभाति। प्रथमं द्योतकशब्देन किं गृह्यते इत्येव विचारणीयमस्ति। शाकटायनमतं यास्केनेवमुद्धृतम्—**'नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति'**[१०] इति। अस्यैव द्योतकताप्रतिपादकस्य वाक्यस्यार्थः सर्वैर्द्योतकतापक्षाश्रयिभिराचार्यैः स्वस्वग्रन्थे समर्थितः संपोषितश्च। अस्य वाक्यस्यार्थस्त्वयमेव भवति यन्नामाख्यातयोर्यः कर्म = अर्थः, तत्र निपातोपसर्गादय उपसंयुज्य = तैः सह एकीभूय, तमेवार्थं द्योतयन्ति = विशिषन्ति, अर्थादुपरागेणान्यादृशान् कुर्वन्ति। अस्मिन् शाकटायनसिद्धान्ते प्रथमाक्षेपस्त्वयमेवोदेति यदर्थरहितानां निपातोपसर्गाणां योगस्तु भवति सार्थकैर्नामाख्यातैः, तत्कथं नामाख्यातार्थेषूपसंयोगः = विशेषार्थसंयोजनं भवितुमर्हति निपातोपसर्गादिभिः ? यतो हि अर्थद्वारक एव शब्दस्य शब्दान्तरेण योगो भवति, न तु शब्दद्वारकः, शब्दे शब्दासम्भवात्। अतो नामाख्यातैः सह निपातोपसर्गाणामाश्लेषोऽर्थात्मसहकृत एव सङ्घटते। अत एवाचार्यकैयटो व्याख्याति यच्छब्दो न कदाचित् स्वार्थपरित्यागेनार्थान्तरे प्रवर्तते—'अथवा शब्दो न कदाचित् स्वार्थपरित्यागेनार्थान्तरे प्रवर्तते, अर्थस्त्वर्थान्तरे समारोपितो यदा शब्दप्रवृत्तिनिमित्तं भवति, तदा

---

१. ऋ० सं० १।५।१५, अथर्ववे० ४।२६।७, तै० सं० १।१।१४, शतपथब्रा० १४।२।५।१६।
२. ऋ० सं० १।१६४।४८, वाररुचनिरुक्तसमुच्चयः—१।२६।
३. ऋ० सं०—१।१२७।१०, १।१९०।२, १।२।७, २।११।२०।
४. ऋ० सं०—५।६४।७; ६।४।३; १०।२९।१।
५. ऋ० सं०—८।७९।७, १०।८९।१३।
६. ऋ० सं०—४।२३।४—सायणभाष्यम्।
७. महाभारतम्—उद्योगप० १४२।२।
८. ऋ० सं०—१०।१०५।५—सायणभाष्यम्।
९. दि संस्कृत लैंग्वेज—पृ० ४०।
१०. निरुक्तम्—१।३।

गौणव्यवहारः'[1] इति । अमुमेवाशयमनुसरन् हरदत्तमिश्रोऽपि ब्रवीति यच्छब्दयोर्मिथुनीभावं त्वतिरिक्तस्यार्थस्य प्रसवायैव भवति—'कथं पुनर्धातौ नामोपसर्गौ वर्तेत, शब्दे शब्दासम्भवात् । अर्थे वृत्तिर्विज्ञायते'[2] इति । अन्यत्रापि कैयट[3]-हरदत्त[4]-जिनेन्द्रबुद्धि[5]-प्रभृतीनामयमेवाभिप्रायो यदन्योन्यं समस्यमानैः पदैः सार्थकैर्भवितव्यमेव, शब्दसङ्घातस्यायमेव हेतुः । अपरञ्च, यदि समस्यमानेषु पदेषु कश्चिच्छब्दोऽर्थविरहितः, कश्चिच्च सार्थको भवेत्, तदा **'अर्थः पदमैन्द्राणाम्',**[6] **'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्',**[7] **'समर्थः पदविधिः'**[8] इत्यादिसूत्राणामस्वारस्यमेव । एवं हि निर्णीयते यच्छाकटायनमते नामाख्यातयोर्निपातोपसर्गाणां यद् योगो भवति तत्त्वर्थद्वारक एव ।

अपराऽऽपत्तिस्त्वियं जागर्ति शाकटायनवाक्ये यद् द्योत्यास्तु भवन्ति नामाख्यातार्थाः, न तु नामाख्याताः, यतो हि नामाख्यातानां द्योतनेनापि किम् ? यदि नामाख्यातार्थाः द्योत्याः, न तु नामाख्याताः, तर्हि नामाख्यातार्थेषु द्योत्यमानेषु निपातोपसर्गैरर्थवद्भिर्भवितव्यमेव, यतो ह्यर्थद्योतनेऽर्थस्यैवोपसंयोगः सापेक्षः । अत एव निपातोपसर्गा द्योतका इति मतं न समीचीनं प्रतिभाति ।

महाभाष्यकारस्तद्व्याख्यातारौ कैयट-नागेशावपि 'अधिपरी अनर्थकौ'[9] इति सूत्रं व्याचक्षाणाः सन्तः प्रतिपादयन्ति यद् अनर्थकशब्दस्य कोऽर्थः ? महाभाष्यकारः सुमदेव[10] स्पष्टयति यत्—'ये खलु कञ्चिदन्यार्थं न प्रकटयन्ति, केवलं धातुनाऽभिहितां क्रियां कथयन्ति, ते खल्वनर्थकाः' इति । यद्येवम्, तर्हि धातुभिः क्रियायां कथितायां सत्याम्, पुनस्तस्याः कथनाय निपातोपसर्गसंयोगस्यावसर एव नास्ति, 'उक्तार्थानामप्रयोगः' इति नियमात् । अतः कथितस्यार्थस्य पुनः कथनायोपसर्गसंयोगस्यौचित्यमेव नास्ति । निरुक्तव्याख्याता दुर्गाचार्यस्तु 'धातूनामनेकार्थाः'[11] इति सिद्धान्तं विवृण्वन् वक्ति यत्—'धातवः खल्वनेकार्था भवन्ति, उपसर्गसंयोजनेन तेषामर्थेषु कश्चिदेकोऽर्थः प्रकाशते । अत उपसर्गसंयोगेन प्रतीयमानोऽर्थो द्योत्यार्थो भवति । उपसर्गास्तु तस्यार्थस्य द्योतका भवन्ति' इति ।

दुर्गाचार्यस्यायं पक्ष एव **'धातूनामनेकार्थाः'** अतिदुर्बलः प्रतिभाति । यतो हि धातुनाऽनेकार्थानां बोधस्त्वभिधाशक्त्या न भवति, ते तु लक्षणया व्यञ्जनया वाऽभिव्यज्यन्ते । यदि धातूनामनेकार्था अभिधाशक्त्यैव बोध्येरन्, तदा 'तिष्ठते' इत्ययं धातु-

---

१. प्रदीपः—महाभाष्ये—पृ० ८।३।८२ ।
२. पदमञ्जरी–५।१।११८ ।
३. प्रदीपः–महाभाष्ये–६।१।१३५ ।
४. पदमञ्जरी–४।१।७८ ।
५. न्यासः–२।३।२९ ।
६. निरुक्ते–१।१–दुर्गाचार्यव्याख्यायामुद्धृतम् ।
७. अष्टाध्यायी–१।२।४५ ।
८. अष्टाध्यायी–२।१।१ ।
९. महाभाष्यम्–१।४।९२ ।
१०. 'सुमत्' इति वैदिको निपातः स्वयमित्यर्थे तत्र प्रयुज्यते ।
११. निरुक्तम्–१।३–दुर्गाचार्यव्याख्या ।

गत्यर्थमप्यभिधाशक्त्यैव ब्रवीतु नाम, किं तत्र प्रोपसंयोजनेन ? 'संतिष्ठते' इत्यनेनैव 'सङ्गच्छते' इत्यस्यार्थप्रतीतिः स्यान्नाम ? 'आगच्छति' इत्यनेनैव 'निर्गच्छति' इत्यस्याप्यर्थावबोधः कथं न भवति ? गच्छतिक्रिया त्वेकैव, उपसर्गास्तु भिन्ना भिन्नाः, तेषामर्था अपि भिन्नाः। अतः समीक्षणेनैवं प्रतिभाति यन्निपातोपसर्गेष्वेवैतादृशी काचिद् अर्थप्रतिमाऽस्ति, यया स सोऽर्थो बोध्यते। महाभाष्यकारेणाप्ययं पक्षः सभाजितः। तेनोक्तं यत्—'इह तर्हि व्यक्तमर्थान्तरं गम्यते—'तिष्ठति', 'प्रतिष्ठते' इति। तिष्ठतीति व्रजिक्रियाया निवृत्तिः, 'प्रतिष्ठते' इति व्रजिक्रिया गम्यते। ते मन्यामहे उपसर्गकृतमेतद्, येनात्र व्रजिक्रिया गम्यत इति। 'प्रोऽयं' दृष्टापचार आदिकर्मणि वर्तते'[1] इति।

अत एव महिमभट्टस्तद्व्याख्याता रुय्यकोऽपि व्यक्तिविवेके वक्ति यद्—'द्योतकत्वम्,[2] प्रकाशकत्वम्, व्यञ्जकत्वं चेत्येक एवार्थ इति सत्यम्। तदेवं विशेषणविशेष्यस्वरूपेऽवस्थिते सहभावावगमौ द्योत्यद्योतकभावभ्रमहेतुः' इति। व्यक्तिविवेकव्याख्याता तु पदेषु द्योत्यद्योतकभावस्य निःसारतां विवृण्वन् नामाख्यातोपसर्गनिपातेषु विशेष्यविशेषणभावमङ्गीकरोति। एतेन विशेष्यविशेषणभावाङ्गीकारेण निसर्गत एव निपातोपसर्गाणामर्थवाचकत्वमायाति। अत एव हरदत्तमिश्रेणोदघोषि यत् कुत्रचित् क्रियाद्वारकोऽर्थप्रकर्षो भवति, कुत्रचिच्चोपसर्गनिपातद्वारकः। तथा हि हरदत्तमिश्रः—**'उच्छब्दो[3] हि ससाधनक्रियावचन उद्गते वर्तते, तस्य क्रियाद्वारकः प्रकर्षः। अतिशयेनोद्गत इति। क्वचिच्चोपसर्गद्वारकः प्रकर्षो भवति'** इति। अनेन हरदत्तमिश्रसिद्धान्तेनापि निष्क्रष्टुं प्रभवामो यन्नामनिपातयोः, आख्यातोपसर्गयोर्वा विशेष्यविशेषणसंसर्ग एव शब्दशास्त्रसम्मतो भाषाशास्त्रसम्मतश्च ज्यायस्त्वेनौचित्यपक्षाश्रयी।

एवमेवान्येऽप्याक्षेपाः समापतिष्यन्ति निपातोपसर्गाणां द्योतकतास्वीकारे। निपातोपसर्गाणां द्योतकतावादस्य मिथ्यात्वं प्रमाणयन्ति केचन वैदिकवाङ्मये प्रयुज्यमाना उत्कर्षापकर्षवाचकाः शब्दाः। ऋग्वेदसंहितायां प्रयुज्यमानाः—**'प्रऽवतम्[4]', 'प्रऽवत्[5]', 'प्रऽवत्वंती[6]', 'प्रऽवत्वान्[7]', 'प्रऽतरम्[8]'** इमे प्रयोगाः प्रकृतिप्रत्ययवन्तः सन्तः स्वीयां रूपप्रतिमाम् अर्थप्रतिमां च समेधयन्ति। एषु प्रयोगेषूपसर्गात् परौ द्वौ प्रत्ययौ—'वत्', 'तरश्च' संयोज्येते। अत्रोपसर्गस्यावान्तरपदत्वेन प्रत्ययात् पृथक्करणमवग्रहद्वारा सम्पाद्यते। अवग्रहेण समस्तस्यैकस्वर्यमैकार्थ्यं च भवतः। अतोऽत्रोपसर्गाः प्रकृतिभूताः सन्तः प्रत्ययार्थास्कन्दनेनार्थवन्तो दृश्यन्ते। अमीषां वैदिक-

---

१. महाभाष्यम्—१।३।१।
२. व्यक्तिविवेकः—१।७१-९२।
३. पदमञ्जरी—४।१।७८।
४. ऋ० सं०—५।३१।१।
५. ऋ० सं०—९।७४।७।
६. ऋ० सं०—५।५४।९।
७. ऋ० सं०—१।१८१।१।
८. ऋ० सं०—१।५३।११।

शब्दानां स्वतन्त्रार्थस्य संवादोऽपि भवत्यन्याभिरपि भारोपीयार्यभाषाभिः[1]। तोलनीयं तावत्—'प्रऽतरः > अवे० फ्रतरः = [अग्रस्थाता] > ग्री० > प्रोतेरोस् = अग्रतः' इति। अमीभिस्तुलाबोधकैः प्रयोगैर्योऽर्थो निष्कृष्यते, स तु प्रकृत्यंशेभ्य एवायाति, न तु प्रत्ययांशेभ्यः। समर्थ्यते सिद्धान्तोऽयं मैकडानल[2]-बरोमहोदयाभ्याम्[3]।

इत्थमेव केचन संख्याशब्दा अपि वैदिकलौकिकोभयभाषायां व्यवह्रियमाणा अवलोक्यन्ते, येषामात्मलाभो रूपलाभश्च निपातपदेभ्यः समभूत्। तत्र 'अन्', 'त्वः', 'प्र', 'बेकनाटान्', 'सकृत्', 'समानः', 'सहस्रम्', प्रभृतयः संख्याशब्दा निपातोपसर्गविवर्तभूताः। 'कुवित्' इति निपातोऽपि बह्वर्थे संख्यावत् प्रयुज्यमानोऽवलोक्यते वैदिकसंहितासु। अत्राधस्तादेकैकस्योदाहरणं प्रस्तूयते—

(क) अन् = अनेकार्थे।

'अन्' इति निपातोऽनेकवचनार्थे व्यवह्रियमाणोऽवलोक्यते तैत्तिरीयारण्यके। तथा हि—'अनवर्णे इमे भूमी इयं चासौ च रोदसी[4]' इति। तैत्तिरीयारण्यकस्य भाष्यकर्त्रा भट्टभास्करेण व्याख्यातं यत्—'अन् इति निपातोऽनेकसंख्यावाचकः'[5] इति।

(ख) कुवित् = भयो भूयः करणार्थे[6]।

'कुवित्' इति निपातो वैदिकभाषायां भूमार्थे व्यवहृतः। कस्यचिदपि कार्यस्यासकृदभ्यसनार्थेऽयं निपातः संख्यात्वेन व्यवहारपथमवतरति। उपसर्गवदप्यस्य प्रयोगो बह्वर्थ एवावलोक्यते। तथा च ऋक्संहितायां सायणः—'कुवित् बहुनामैतत्। कुवित् श्रवतः = बहुवारं शृणुताम्[7]' इति।

(ग) त्वः = एकार्थे।

'त्वः' इति निपातोऽपि वैदिकसाहित्ये एकार्थिकां संख्यामवबोधयति। यथा ऋग्वेदे—'उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्[8]' इति। अस्या ऋचो व्याख्याता सायणाचार्यो व्याख्याति यत्—त्वशब्द एकवाची। त्वः = एकः शृण्वन् अपि एनां वाचं न शृणोति। त्वस्मै = एकस्मै अपि तन्वम् = आत्मीयं शरीरं विसस्रे = स्वयं वाग्विविधं गमयति[9]' इति। एवमेव प्रायः सर्वासु संहितास्वयं निपात एकत्वसंख्यां बोधयति।

---

१. दि संस्कृत लैंग्वेज, पृ० १४९।
२. ए वैदिक ग्रामर–पृ० ११६;
३. दि संस्कृत लैंग्वेज–पृ० १४९।
४. तै० आ०–१।८।२८।
५. तै० आ०–१।८।२८–भट्टभास्करभाष्यम्।
६. ऋ० सं०–१।३३।१, ७।९१।१, शतपथब्रा० ५।५।४।२४।
७. ऋ० सं०–८।२६।१०–सायणभाष्यम्।
८. ऋ० सं० १०।७१।४–सायणभाष्यम्।
९. तदेव।

(घ) प्र = प्रथमार्थे, एकार्थे[1] च ।

अयं प्रोपसर्गस्तैत्तिरीयब्राह्मण एकत्वसंख्यामभिव्यनक्ति । तथा च मन्त्रः–'यस्मात् पशवः प्र प्रेव भ्रंशेरन्, स एतेन यजेत्' इति । तन्मन्त्रव्याख्यात्रा माधवभट्टेन व्याख्यायि यत्—'एकः प्रशब्दः प्राथम्यवाची, अपरः प्रकर्षवाची[2] । प्रथममेव पशवो यस्मात् पुरुषात् 'प्रेव भ्रंशेरन् = प्रकर्षेण भ्रष्टा इव भवन्ति' इति । अनेन सन्दर्भेणैतद्वक्तुं प्रभवामो यद् वैदिकसाहित्ये प्रशब्द एकत्वसंख्यावोधकोऽप्यासीत् ।

(ङ) बेकनाटाः = वृद्धिजीविनो वार्धुषिकाः ।

'बेकनाटाः' इति पदे 'बे' इति शब्दो 'वि' इत्युपसर्गस्यापभ्रंशभूतः सन् द्वित्व-संख्यार्थे वैदिकसाहित्ये व्यवहृतः । ऋक्संहिताव्याख्यात्रा सायणेन[3], तैत्तिरीयसंहिता-व्याख्यात्रा भट्टभास्करेणाथ[4] च निरुक्तकारेणापि[5] 'बेकनाटाः' इति पदेऽवयवभूतः 'बे' इति शब्दो 'वि' इत्युपसर्गापभ्रंशभूत इति व्याख्यायि । तथा च सायणभाष्यम्— **'ईदृशेन द्विविधेन बलेन इन्द्रः विश्वान्=सर्वान्, बेकनाटान्=वृद्धिजीविनो वार्धुषिकान्, अनेन कुसीदिनो = वृद्धिजीविनो वार्धुषिका उच्यन्ते । कथं तद्व्युत्पत्तिः ? 'बे' इत्यपभ्रंशो द्विशब्दार्थे । एकं कार्षापणमृणिकाय प्रयच्छन् द्वौ मह्यं दातव्य इति नयेन दर्शयन्ति, ततो द्विशब्देनैकशब्देन च नाटयन्तीति बेकनाटाः । ईदृशान् पणीन् = पणिसदृशान् शूद्रकल्पान्'[6]** इत्यर्थः । एवमत्र व्युत्पत्त्या—'वि + एक + √नट [ = अवस्यन्दने] > व्येकनाटाः > वेकनाटाः > बेकनाटाः = वार्धुषिकाः—'वे' शब्दो वीति उपसर्गस्यापभ्रंशभूतः सन् द्विसंख्यां बोधयति । समर्थयते चामुं सिद्धान्तं भट्टभास्करः— **'वेरुपसर्गस्य स्वरव्यञ्जनयोर्व्यावृत्तिरिति'[7]** । मन्ये यद् विंशतिशब्देऽप्यवयवभूतो द्वित्वसंख्याबोधको 'वि' इत्युपसर्ग एव ।

(च) सकृत् = एकवारम् ।

'सकृत्' इति निपात एकवारार्थे व्यवह्रियते सम्पूर्णे संस्कृतवाङ्मये । अवेस्ता-फ़ारसी-स्लावोनिक-लिथुआनी-प्रभृतिष्वप्यार्यभाषासु[8] 'सकृत्' इति निपातोऽस्मिन्नेवार्थे व्यवहृतः । 'सकृत्' इति पदे 'सम्' इत्युपसर्गोऽवयवभूतः । ऋग्वेदे बहुत्र 'सम्' इति शब्द एकत्वसंख्यापर्यायत्वेन व्यवहृतः । ऋग्वेदस्य भाष्यकर्तारौ स्कन्दसायणावप्येवमेव व्याख्यातवन्तौ । तथा च स्कन्दस्वामी—'उच्यते, समाने—एकशब्दपर्यायोऽत्र समान-शब्दः । 'समानबन्धू' (ऋ०सं० १।११३।२), समानः सन्नुभौ लोकावनुसञ्चरन्ति' (बृ०उ० ४।३।७) इति च यथा । समाने = एकस्मिन् योनौ । एवम् (ऋ० सं० १०।१९१।४) आकूतिः = सङ्कल्पोऽध्यवसायः, समानी = एकविधोऽस्तु इति । एवं यथा—'समनाः',

---

१. तै० ब्रा० २।१४।४८ ।
२. तै० ब्रा०—माधवीयभाष्यम् ।
३. ऋ० सं०—८।६६।१० ।
४. तै० सं०—३।४।७ ।
५. निरुक्तम्—६।५।४—दुर्गाचार्यव्याख्या ।
६. ऋ० सं०—८।६६।१०—सायणभाष्यम् ।
७. तै० सं०—३।४।७ ।
८. संस्कृत लैंग्वेज—पृ० २५७, ६२ ।

'समानः' इत्यनयोरवयवभूतेनैव 'सम्' उपसर्गेण एकत्वसंख्यायाः प्रतिपादनं भवति, तथैव 'सकृत्' इति निपाते समूहभूतेन समुपसर्गेण एकत्वसंख्या प्रतिपाद्यते। सिद्धान्तस्यास्य प्रमाणम् ऋग्वेद एव—

**सकृद्ध द्यौरजायत सकृद् भूमिरजायत।**
**पृश्न्यो दुग्धं सकृत् पयस्तदन्यो नानुजायते[1] ॥**

मन्त्रस्यास्य व्याख्यात्रा स्कन्दस्वामिना 'सकृत्'घटकः 'सम्' इत्युपसर्ग एकत्वसंख्यार्थे व्याख्यातः।

अस्य 'सम्' इत्युपसर्गस्य तत्समूहिभूतस्य 'सकृत्' इति निपातस्याप्यस्मिन्नेवार्थे संवादो भवति विविधाभिर्भारोपीयार्यभाषाभिः। यथा—'सम् > अवे० हम् > प्रा० फा० हम् > प्रा० स्ला० सां > सु > लिथु० सम्' एकसार्द्धम्, सार्द्धम् इत्यर्थः। एवमेव—'सकृत् > अवे० हकरत् > लिथु० कर्तस् > प्रा० स्ला० क्रतुः = एकवारम् इत्यर्थः। 'सहस्रम्' इति शब्देऽपि समुपसर्गस्यैवार्थयोगः स्पष्टतया प्रतिभाति। किं बहुना, संस्कृत-वाङ्मयेऽनन्तसंख्यावाचका ये संख्याशब्दा दृश्यन्ते, तेऽप्युपसर्गसंवलिता एवानन्तार्थिकां संख्यां बोधयन्ति। यथा—'सहस्रम्', 'अयुतम्', 'नियुतम्', 'प्रयुतम्', 'अर्बुदम्', 'न्यर्बुदम्', 'समुद्रः', 'परार्धः' इत्यादयः। शुक्लयजुर्वेदीयमन्त्रेण समर्थितं भवति तथ्य-मिदम्—'इमा मे अग्न इष्टका धेनवः सन्त्वेका च दश च दश च शतं च शतं च सहस्रं च सहस्रं चायुतं च अयुतं च नियुतं च नियुतं चार्बुदं च प्रयुतं च न्यर्बुदं च समुद्रश्च मध्यं चान्तं परार्धश्चैता मे अग्न इष्टका धेनवः सन्त्वमुत्रामुष्मिल्लोके'[2] इति।

एवं तुलाबोधकेन पर्यवेक्षणेन निर्धार्यते यत् पुरस्ताद् उदाहृताः संख्याशब्दा निपातोपसर्गविवर्तभूताः। निपातोपसर्गशक्त्यैवैते संख्याशब्दाः स्वरूपात्मलाभमलभन्त इति तथ्यम्। अत्रावधातव्यमस्ति यत् संख्या हि नाम द्रव्याश्रया भवति। द्रव्यानुविद्धैव संख्या स्वीयामर्थमूर्तिं विशदयति। अर्थात् संख्यायाः सम्बन्धः स्थूलवस्तुसापेक्षः। स्थूलद्रव्यवाचका एव शब्दाः सत्त्वगन्धिनो भवन्ति। अत एव भर्तृहरिणोक्तम्—सत्त्वभूतोऽर्थ एव संख्यावान् भवितुमर्हति। इदं द्रव्यमेकम्, इदं द्वितीयम्, इदं च तृतीयमित्यादिका लोके व्यवह्रियमाणा भेदाः संख्यानिबन्धना एव।

**संख्यावान् सत्त्वभूतोऽर्थः सर्व एवाभिधीयते।**
**भेदाभेदविभागो हि लोके संख्यानिबन्धनः ॥**
**संख्या नाम न संख्याऽस्ति संज्ञैषेति यथोच्यते।**
**रूपं न रूपमित्येवं संज्ञा सा हि सितादिषु ॥[3]**

---

१. ऋ० सं०–६।४८।२२–स्कन्दभाष्यम्। २. शुक्लयजुर्वेदः–१७।२।
३. वाक्यपदीयम्—३।११।१, ३।११।२५।

इत्थं द्रव्याश्रितशब्दानां संख्यात्वे निर्णीते सति इदमपि निर्णीतं भवति यद् द्रव्याश्रितशब्दाः सत्त्वगन्धिनो भवन्ति। अत एव निपातोपसर्गैः सङ्घटिताः संख्याशब्दा अपि सत्त्वगन्धिकोटिमारोहन्तीति। यदीमे निपातोपसर्गनिष्पन्नाः संख्याशब्दाः सत्त्वगन्धिनोऽर्थाद् द्रव्यप्रतिमावाचकाः, तर्हि **"चादयोऽसत्त्वे**[१]**"** इति सूत्रस्य का गतिरिति? एभिः प्रमाणैर्विश्लेषणैश्च सिद्धान्तयितुं शक्यते यन्निपातोपसर्गा वाचका एव, न तु द्योतका इति।

एवं संख्याशब्दानां पर्यवेक्षणादनु निपातोपसर्गनिष्पन्नानां संज्ञाशब्दानां विमर्शनं प्रासङ्गिकं प्रतिभाति। व्यवह्रियन्ते हि संस्कृतभाषायां केचनैतादृशा अपि नामशब्दा येषामुपादानकारणभूता निपातोपसर्गा एव। यद्यपि शाकटायनो ब्रवीति यत्—'सर्वं नाम धातुजम्[२]' इति, तथापि केचनैतादृशा अपि संज्ञाशब्दाः सन्ति, ये निपातजाः, उपसर्गजाश्च परामृष्टाः। पुरस्तात् केचन निपातोपसर्गविवर्तभूताः संज्ञाशब्दा उदाह्रियन्ते, ये निपातोपसर्गद्योतकतावादस्य मिथ्यात्वं प्रख्यापयिष्यन्तीति—

(क) अणुः = स्थवीयांसमनु यो वर्तते स अणुः।

अत्राणुशब्दोऽनूपसर्गस्य विकृतिभूतः। 'अनु' इत्युपसर्ग एव यदा सुपा सम्बन्धाद् नाम भवति, तदा णत्वं पृषोदरादित्वादासाद्याणुर्भवति। नामशब्देनात्र सुबन्तं द्रव्यभूतमुच्यते। निरुक्तकारस्यायमेवाशयः—**'अणुरनु स्थवीयांसम्। उपसर्गो लुप्तनामकरणः। यथा सम्प्रति**[३]**'** इति। निरुक्तव्याख्यात्रा दुर्गाचार्येणापि व्याकृतं यत्—'यद् द्रव्यम्' अणुशब्देन बोध्यते, तत् स्थवीयांसमनु भवति, अर्थात् स्थूलद्रव्यातिरिक्तप्रत्ययमात्रोपलब्धिमान् भवति' इति। एवं हि दृश्यते यद् 'अनु' इत्युपसर्ग एव किञ्चिद् विकारमापन्नो द्रव्यमभिदधाति।

(ख) अनुः = कश्चिद् वैदिको राजा।

ऋग्वेदसंहिताया अन्तःसाक्ष्येण ज्ञायते यदासीत् तदानीं कश्चित् 'अनुवंशः'। यथा रघुवंशे राघवा जाताः, तथैव अनुवंशे आनवाः, पुरुवंशे पौरवाः, यदुवंशे यादवाश्च। 'अनुः' इति संज्ञाशब्दः 'अनु' इत्युपसर्गेणैवात्मलाभमलभत। तथा च ऋग्वेदे—'यदिन्द्राग्नी यदुषु तुर्वशेषु, यद्द्रुह्युष्वनुषु पुरुषु स्थः[४]' इति। अस्या ऋचो व्याख्यात्रा सायणाचार्येण व्याख्यातं यत्—'अनुषु = प्राणवत्सु मनुष्येषु' इति। 'अनुः' इति नामधेयस्यास्यैव राज्ञ आनवसंज्ञकः पुत्रोऽभूत्। अनुः > अनुषु, अनुः > आनवः[५] > आनवाय[६] > आनवे[७] > आनवस्य[८] इत्यादयो विभक्तिकारक-

१. अष्टाध्यायी—१।४।५७।
२. निरुक्तम्—६।४।
३. निरुक्तम्—६।८–दुर्गव्याख्या।
४. ऋ० सं०–१।१०८।८–सायणभाष्यम्।
५. ऋ० सं०–८।७४।४।
६. ऋ० सं०–६।६२।९, निरुक्तम्–२।३।
७. ऋ० सं०–८।४।१।
८. ऋ० सं०–७।१८।१३।

लिङ्गसङ्ख्यान्विताः संज्ञाशब्दा 'अनु' इत्युपसर्गपरिणामभूताः । उपसर्गनिष्पन्ना इमे संज्ञाशब्दाः साक्षार्थवाचकाः, न तु द्योतका इति ।

(ग) उमा<उ+मा>उमा=पार्वती ।

'उमा' इति संज्ञपदमपि निपातद्वयसङ्घातभूतम् । उ+मा>उमा=पार्वती इत्यर्थः । महाकविकालिदासेनैवमेव व्याख्याऽकारि 'उमा' पदस्य—

**तां पार्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव ।**
**उ मेति मात्रा तपसे निषिद्धा पश्चादुमाख्यां सुमुखी जगाम[1] ॥**

श्लोकममुं व्याचक्षाणोऽरुणगिरिनाथो ब्रवीति यत्—'उ इति तपोवाचको निपातः । मा इति निषेधे । तपसे मा भवेति निषिद्धेत्यर्थः' इति । अनया व्युत्पत्त्या संज्ञाशब्दोऽयं निपातद्वयसङ्घातभूत इति ।

(घ) कुहयाकृते=जिज्ञासुभिः पुरस्कृते इत्यर्थः ।

'कुह' शब्दो वैदिकनिपातः 'कुत्र' इति निपातार्थे प्रयुक्तः । अस्मादेव 'कुह'-शब्दात् क्यचि कृते 'कुहया' इति संज्ञाशब्दः शोभनमनुष्या इत्यर्थे व्यवहृत ऋग्वेदे । तथा हि मन्त्रः—

**यत्त्वा पृच्छादीजानः कुहया कुहयाकृते ।**
**एषो अपश्रितो बलो गोमतीमव तिष्ठति[2] ॥**

मन्त्रममुं व्याचक्षाणः सायणाचार्यो व्याख्याति यत्—'हे कुहयाकृते=शोभनमनुष्ये, जिज्ञासुभिः पुरस्कृते । कुहशब्दात् क्यच् । एतादृशे हे कुहया ! कुत्र तिष्ठसि' इत्यर्थः । अनेन वैदिकसन्दर्भेण निपातोपसर्गैः संज्ञाशब्दनिर्माणभावना प्रमाणीकृता । अत्रापि 'कुहया' इति निपातनिष्पन्नेन शब्देन लिङ्गसंख्याविभक्तिमद् द्रव्यं बोध्यते ।

(ङ) नोनुवा=नो नो शब्दकारिणी, आक्रोशकारिणी वा ।

'नोनुवा' इति संज्ञाशब्दो नो नो शब्दकारिणीं काञ्चित् स्त्रियं बोधयति । 'नो नो' शब्दकारिणी 'नोनुवा' शब्देन लोकेऽप्युच्यते । 'नोनुवा' शब्दस्यापि निष्पत्तिः—'न+न>नो नो>नोनुवा=आक्रोशवती, नोनोशब्दकारिणी वा—'नञ्' इति निपातेनैवाजायत । समर्थयते तथ्यमिदं दुर्गाचार्यः—'अथ[3] सदान्वे—इत्यनवगतम् । सदा नोनुवे इति शब्दसमाधिः । सदान्वे=सदा नो नो शब्दकारिके इति हि विस्फुटोऽर्थः । तत्र 'नोनुवा' इत्यस्य न्वाभावः' इति । नञ् इति निपातनिष्पन्नेनानेन 'नोनुवा' शब्देनापि लिङ्गसंख्याविभक्तिमद् द्रव्यमभिव्यज्यते ।

---

१. कुमारसम्भवम्—१।२५—अरुणगिरिनाथव्याख्या । २. ऋ० सं० ८।२४।३० ।
३. निरुक्तम्—६।६।१—दुर्गाचार्यव्याख्या ।

(च) पुरुः = एतन्नामको राजा देशश्च ।

'पुरुः' इति शब्दो वैदिकलौकिकोभयसाहित्य एतन्नामानं राजानं बोधयति। ऋग्वेदे तु देशवाचकोऽप्ययमुपलभ्यते[1]। वस्तुतः 'पुरुः' शब्दो वैदिक उपसर्गः। यथा—'पुरुहूताः = बहुभिराहूताः[2]' इति। वैदिकभाषायामयमुपसर्गो बह्वर्थवाची। सम्पूर्णा वैदिकभाषाऽस्योपसर्गस्य चित्रात्मकेनार्थेनाभिव्याप्ता दृश्यते। अनेनैवोपसर्गेण[3] पुरुः>पुरयस्य[4]>पुरुषु[5], पुरुः>पुरूरवाः[6]>पौरवः[7]>पोरवः[8]>पोलवः[9]इत्यादि-संज्ञाशब्दानामुद्भवोऽभूत्। सभाजयति च सिद्धान्तममुं दशपाद्युणादिवृत्तिकारः—'पुरुरवा[10] इत्ययं शब्दो निपात्यतेऽसि प्रत्यये—√रु [=शब्दे] पुरुशब्दपूर्वः। पुरु+√रु>पुरूरवाः = पुरु रूयते स्वयशः सर्वत्रेति पुरूरवाः = राजा' इति। एवं निरुक्त्यैतत् सिद्ध्यति यदिमे संज्ञाशब्दाः 'पुरुः' इत्युपसर्गविवर्तभूताः।

(छ) सनकः = एतन्नामक ऋषिः।

सनकः = वैधात्रः। 'सनकः' इति नामशब्दो नित्यार्थकेन 'सना' इति निपातेन निष्पन्नः। विधातुश्चत्वारो मानसपुत्रा अभूवन्—सनत्कुमारः, सनातनः, सनकः, सनन्दनश्चेति। तथा च भागवते—

**तप्तं तपो विविधलोकसिसृक्षया यः।**
**आदौ सनात् स्वतपनः स चतुः सनोऽभूत्[11] ॥**

अमुं श्लोकं व्याचक्षाणः श्रीधरस्वामी व्याख्याति यत्—'स हरिः चतुः सनोऽभूत्। सनत्कुमारः, सनकः, सनन्दनः, सनातन इति चत्वारः सनशब्दनाम्नि यस्य सः। कथम्भूतात्? स्वतपसः सनात् = अखण्डितात्' इति।

वामनपुराणेऽपि सनकादीनां सृष्टिरुपवर्णिता दृश्यते—

**धर्मस्य भार्या हिंसाख्या तस्यां पुत्रचतुष्टयम्।**
**सम्प्राप्तं मुनिशार्दूल योगशास्त्रविचारकम् ॥**
**ज्येष्ठः सनत्कुमारोऽभूद् द्वितीयश्च सनातनः।**
**तृतीयः सनको नाम चतुर्थश्च सनन्दनः[12] ॥** इति।

'सनत्कुमारः' इति शब्दं व्याकुर्वाणः क्षीरस्वाम्याह[13]—'सत् = नित्यं कुमारस्तेन सनत्कुमारः' इति। क्षीरस्वामिनो व्युत्पत्त्या विस्फुटो भवति यत् सृष्टिसंप्लवे ये सत् =

---

१. ऋ० सं०—८।४।१—वेङ्कटमाधवभाष्यम्।
२. ऋ० सं०—६।६३।१—स्कन्दभाष्यम्।
३. ऋ० सं०—७।१८।१३।
४. ऋ० सं०—६।६३।९।
५. ऋ० सं०—१।१०८।८।
६. दशपाद्युणादिवृत्तिः—९।९२।
७. अभिज्ञानशाकुन्तलम्—५, पृ० १७६।
८. तदेव।
९. अभिज्ञानशाकुन्तलम्—५, पृ० १७९।
१०. दशपाद्युणादिवृत्तिः—९।९२।
११. श्रीमद्भागवतम्—२।७।५।
१२. वामनपुराणम्—५७।३–५।
१३. अमरकोषः—१।१।५१।

नित्यं कुमाराः = चिरयौवना आसन्, त एव सनत्कुमारादिशब्दैर्व्यपदिष्टाः। अनेन सन्दर्भेण संवदति भागवतव्याख्याता श्रीधरस्वामी—'यद्यपि प्रतिकल्पं सनकादिसृष्टिर्नास्ति, तथापि ब्राह्मसर्गत्वादिहोच्यते। वस्तुतस्तु मुख्यसर्गादय एव प्रतिकल्पं भवन्ति, सनकादयस्तु ब्राह्मकल्पसृष्टा एवानुवर्तन्ते'[1] इति। अमीभिर्विमर्शनैः सुप्रथिततरं भवति यत् सनकादिसंज्ञाशब्दा नित्यार्थकेन चिरार्थकेन वा 'सना' इति वैदिकनिपातेन लिङ्गसंख्याकारकविभक्तिमन्तोऽभूवन्। अत एव महाभारते उल्लिखितं यत्—

**यथोत्पन्नस्तथैवाहं कुमार इति विद्धि माम्।**
**तस्मात्सनत्कुमारेति नामैतन्मे प्रतिष्ठितम्॥**[2] इति।

भट्टनीलकण्ठेनापि गीतायाम् 'सनातनः' इति शब्दव्याख्यानावसरे सिद्धान्तितं यत् 'सना' इति निपातेन देशतः कालतो वस्तुतश्च परिच्छेदरहितं वस्त्वभिधीयते। यथोक्तं नीलकण्ठेन—'सना इति निपातो नैरन्तर्ये। तच्च देशतः कालतो वस्तुतश्च परिच्छेदरहितः। परमते परमाणूनां कालतः परिच्छेदाभावेऽपि देशतः परिच्छेदोऽस्ति। सोऽपि त्रिविधः—सजातीय-विजातीय-स्वगतभेदरूपः। यथा वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादितः। वृक्षान्तरात् सजातीयो, विजातीयः शिलादितः। ततश्च सना = नैरन्तर्येण त्रिविधपरिच्छेदराहित्येन भवति = अस्तीति सनातनोऽखण्डैकरसो यस्मात् तस्मान्नोत्पत्याद्याश्रय इत्यर्थः'[3]।

ऋग्वेदे तु 'सनकः' इति शब्दो वृत्रानुचरार्थे व्यवहृतः। तत्रापि लिङ्गसंख्याकारकविभक्तिमानयम् 'सनकः' इति शब्दः सत्त्वगन्धितामवाप्नोति। तथा च मन्त्रः—**'धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः'**[4] इति।

मन्त्रममुं व्याचक्षणौ स्कन्द- मुद्गलीयवृत्तिकारौ प्रतिपादयतो यत्—'सनकाः = एतन्नामका वृत्रानुचराः' इत्यर्थः। अस्मिन् संज्ञाशब्दे 'सना' इति निपातोऽवयवीभूतः सन् चिरशब्दपर्यायित्वेन व्यवहृत इत्यपि व्याख्याति स्कन्दस्वामी—'सनकशब्दस्य पुराणवचनस्येदं रूपम्। अयज्वानः सनकाः = चिरन्तना अयष्टारः' इति। अन्यत्रापि 'सनजा' इति शब्दो व्याकुर्वाणेन स्कन्दस्वामिनोक्तं यत्—'सनशब्दश्चिरपर्यायः,[5] चिरजाते के ? सामर्थ्याद् द्यावापृथिव्यौ' इति।

अन्यास्वप्यार्यभाषासु[6] संज्ञाशब्दत्वेनैवास्य 'सना' इति निपातस्य संवादोऽस्मिन्नेवार्थे दृश्यते—'सना > लै० सेनेक्स > सेनिआर > लिथु० सेनास् > गोथि० सेनिस्त = शाश्वतिक इत्यर्थः।

---

१. भागवतम्–३।१२।
२. महाभारतम्–हरिवंशे।
३. गीता–२।२४।
४. ऋ० सं०–१।३३।४।
५. ऋ० सं० १।६२।७।
६. ए संस्कृत इंग्लिश डिक्शनरी—पृ० ११४१।

इत्थं सन्दर्भाणामेषां परामर्शात्मकेन तोलनात्मकेन च विमर्शनेनैतद् विस्फुटतरो भवति यत् प्राग्वैदिककाले, वैदिककाले च नाम-निपात-उपसर्गाश्चाविशेषेण संज्ञापद-निर्माणे क्षमा आसन् । अतिप्राचीनाभिर्यूरोपीयभाषाभिरपि तथ्यमिदं प्रमाणितम् ।

(ज) हा + हा > हाहा, हू + हू > हूहू = गन्धर्वादयः ।

'हाहा' 'हूहू' इति निपातसमुदायोऽपि नामशब्दानामिव प्रयुज्यते संस्कृत-भाषायाम् । महाभारते, अमरकोशे च 'हा हा, हहा', 'हूहू, हुहुः' इत्यादि संज्ञाशब्दा निपातोपादानकारणभूता इति व्याख्यातम् । तथा च महाभारते—'गीतमाधुर्यसम्पन्नौ विख्यातौ च हहा हुहुः'[1] इति । अमरकोशव्याख्यात्रा सर्वानन्देनोक्तं यत्—शृङ्गार-प्रकाशे[2] तु निपातत्वमनयोः'[3] इति ।

एवमेव 'परि' इत्युपसर्गोऽवेस्ताभाषायाम्[4]—'परी = अप्सरा' इति संज्ञाशब्दत्वेन व्यवहृतः । स एव शब्दः फारसीभाषातोऽधुना हिन्दीभाषायामपि तस्मिन्नेवार्थे व्यवह्रियते—'परि > अ० परी > फा० परी > हि० परी > परियाँ = अप्सराः' इत्यर्थः ।

एवं निपातोपसर्गविवर्तभूतानां संख्याशब्दानां संज्ञाशब्दानां च वैयुत्पत्ति-केनार्थानुसन्धानेन वक्तुं पार्यते यन्निपातोपसर्गा अपि लिङ्ग-संख्या-कारक-विभक्ति-जुषो भवन्तः सत्त्वगन्धित्वेन व्यवहृताः संस्कृतवाङ्मये । अतो नैसर्गिकी अर्थवाचकता सिद्ध्यति तेषाम् । निष्कर्षरूपेणात्र कानिचन तथ्यानि प्रस्तूयन्ते द्योतकता-वाचकतावादविषये ।

आधुनिकभाषाशास्त्रसिद्धान्तेन शब्दानां द्योतकतायाः सम्बन्धो भवति रिक्तार्थकैः शब्दैः । आकारेषु लघुरूपतामापन्नाः शब्दास्तदैव रिक्तार्थतां व्रजन्ति, यदा तेषां भूयो भूयो वाक्येष्वावृत्तिर्भवति । आधुनिकमनोविश्लेषणशास्त्रेणापीदं तथ्यं प्रमाणितं भवति । मानवबुद्धिः स्थूलार्थकान् शब्दान् सद्यो गृह्णाति, सूक्ष्मार्थकांस्तु अतिप्रयत्नेन । अतो यस्याः कस्या अपि भाषायाः स्थूलार्थाभिधायिनः शब्दा अनायासेन बुद्धिग्राह्या भवन्ति, सूक्ष्मार्थाभिधायिनस्तु प्रयत्नेन । तद्वदेव मानवबुद्धिषु शिथिलतां प्राप्तासु सूक्ष्मार्थाभिधायिनो निपातोपसर्गादयः स्मृतिपटलाच्छीघ्रमेव विलुप्ता विस्मृताश्च भवन्ति । कदाचिदस्य कारणमिदमेवास्ति यद् बौद्धिकप्रयत्नेनाथ च सङ्कल्पेनैव सूक्ष्मार्थाभिधायिनः शब्दा बुद्धिं व्याप्नुवन्ति, प्रयत्नशैथिल्यं विस्मरन्ति च । इत्थं सूक्ष्मार्थाभिधायिनां शब्दानां भूयो भूय आवृत्त्याऽथ च प्रयत्नशैथिल्येनैते शब्दाः (निपातोपसर्गादयः) रिक्तार्थतां व्रजन्त इव प्रतिभान्ति ।

अत एवाधुनिकमनोविश्लेषणशास्त्रिणः, भाषाविश्लेषणशास्त्रिणश्च निभालयन्ति यत् प्रायेण सर्वासां भाषाणां व्याकरणेषु यो हि स्थैर्याभावः, विकल्पमूलकानां नियमानां व्यवहाराश्च दृश्यन्ते, तेषां मुख्यं कारणं मानवमनोभाव एवास्ति । अत एव रिक्तार्थवद्

---

१. महाभारतम्—उद्योगप० १८।५ ।
२. अमरकोशः—१।१।५२ ।
३. तदेव—सर्वानन्दव्याख्या ।
४. अवेस्ता—पृ० ५३ ।

भासमानानां शब्दानामपि नास्ति बीजगणितीयचिह्नानामिव भाषायां स्थानम्। भाषासु बीजगणितीयचिह्नसदृशी काचन परिभाषा न भवति, यतो हि गभीरतराणां विचाराणां तार्किकाभिव्यक्तिषु मनोभावस्य मुख्यः प्रभावो भवति। येन भाषायां वैकल्पिकनियमान्नां प्रयोगस्तु स्वाभाविक एव। अस्य कारणं तु मानवजीवनस्य तास्ता दशा एव सन्ति, याभिर्मनोभावो निरन्तरं परिवर्तितः परिवर्धितश्च समेधते। इदं स्वाभाविकमस्ति यत् कालप्रभावाद् देशप्रभावाच्च भाषायां केचिच्छब्दाः सबलार्था भवन्ति, केचिच्च दुर्बलार्थाः, किन्त्विदमावश्यकं नास्ति यत् सबलार्थाः शब्दाः सदा प्राचीनतरा एव भवन्तु। अयं तु प्रयोक्तृसापेक्षो धर्मः। व्यवहर्तॄणां प्रयोगैरेव कश्चिच्छब्दः सबलार्थतां प्राप्नोति, कश्चिच्च दुर्बलार्थताम्। अत एव भाषास्वर्थसङ्कोचः, अर्थविकासः, अर्थादेशाश्च भवन्ति। यथा—'असुरः' इत्यत्रार्थसङ्कोचः, 'तैलम्' इत्यत्रार्थविकासः, 'दुहिता' इत्यत्रार्थादेशश्च सञ्जातः।

अनेनैव प्रयोक्तृगतधर्मेणातिप्रभाविता संस्कृतभाषा दृश्यते। कदाचिन्निपातोपसर्गाः स्वतन्त्रार्था आसन्, कदाचित् क्रियानिरपेक्षाश्च प्रयुज्यमाना आसन्, कदाचिच्च क्रियानुषङ्गिणः सञ्जाताः। किन्त्वेतेन तेषामर्थविकासः, अर्थसङ्कोचः, अर्थादेशाश्चैवाभिलक्ष्यन्ते, न तु रिक्तार्थकत्वम्, अनर्थकत्वं वा। अस्य भाषाशास्त्रीयसिद्धान्तस्य विकासः प्रथमं संस्कृतभाषाशब्दशास्त्र एवाभूत्। तथा हि—

**धात्वर्थं बाधते कश्चित्कश्चित् तमनुवर्तते।**
**विशिनष्टि तमेवान्य उपसर्गगतिस्त्रिधा**[1]॥ इति।

अर्थात् कश्चिदुपसर्गो धात्वर्थं बाधते = अर्थादेशं करोति, कश्चित् तमनुवर्तते = अर्थं सङ्कोचयति, तमेवान्यो विशिनष्टि = अर्थं विस्तारयतीत्यर्थः।

ऐतिहासिकदृष्ट्या निपातोपसर्गादीनां वाचकताप्रख्यापने संस्कृतभाषायाः पद्यवद्धताऽथ च दण्डायमानसमासप्रणाली च मुख्यतया बाधके भवतः। प्रमाणितो भवत्ययं सिद्धान्तो निरुक्त[2]–ऋक्प्रातिशाख्याभ्याम्—'नेयन्त इत्यस्ति संख्येह वाङ्मये मिताक्षरे चाप्यमिताक्षरे च ये'[3] इति।

अस्य प्रातिशाख्यश्लोकस्य व्याख्यातोव्वटाचार्यो विवृणोति यत्—'ते = निपातोपसर्गाः, मिताक्षरे = पद्ये, अमिताक्षरे = गद्ये च संख्यातुं न शक्याः' इति। इदं प्रातिशाख्यवचनं सङ्केतयति यद् अमिताक्षरे = गद्ये निपातोपसर्गाः स्वातन्त्र्येण प्रयुज्यमाना आसन्।

---

१. जैनशाकटायनीयधातुपाठः–१२। २. निरुक्तम्—१।९।
३. ऋ० प्रातिशाख्यम्–१२।९।

तथ्यमिदमाधुनिकभाषाशास्त्रविद्भिः—मैकडानल[1]–वरो[2]–वान्द्रियैज[3]–ब्लाख[4]–प्रभृतिभिरपि प्रमाणितम्। इमे सर्वे मन्यन्ते यत् समस्तपदानां वाहिकासु, अथ च छन्दोमयोषु भाषासु निपातोपसर्गादयश्छन्दःपरिपूर्तिकरत्वेन, पदपूरकत्वेनापि प्रयुज्यन्ते। यतो हि यदा भाषायां कृत्रिमसमस्तपदानि निर्मीयन्ते, अथ च छन्दस्सु स्वरवर्णगणनया सन्निवेश्यन्ते, तदा सूक्ष्मार्थवाहका भाषाप्राणसदृशाश्च निपातोपसर्गादय भाषाशरीर उपेक्ष्यन्ते। यथा मानवजीवनं यान्त्रिकसभ्यतायाः प्रभावेणातिप्रभावितं सदेकरसतां नीरसतां च प्राप्नोति, तथा भाषाऽपि कृत्रिमलम्बायमानसमस्तपदानां वाहिका सती कृत्रिमतां प्राप्नोति। अतो निःसन्देहरूपेण निष्कृष्यते यद् द्योतकतावादस्य प्रचारोऽवैज्ञानिक ऐतिहासिकदृशा तथ्यहीनश्च प्रतिभाति।

● ● ●

१. वैदिक ग्रामर–पृ० १।
२. संस्कृत लैंग्वेज–पृ० २८३।
३. भाषा–पृ० २०१।
४. भारतीय आर्यभाषा–पृ० २४०।

## चतुर्थोऽध्यायः

## उपसर्गाः पदविज्ञानञ्च

निपाता उपसर्गाश्च दृश्यन्ते केन हेतुना ।
बहुष्वर्थेषु येष्वेते दृश्यन्त उपमादिषु ॥
बहुष्वर्थेषु धातूनां वृत्तौ यत्कारणं भवेत् ।
तदेवात्रापि भवति सा च शक्तिरिति स्थितिः[1] ॥

'उपसर्गाः, पदविज्ञानञ्च' इत्ययमध्यायो भागद्वये स्वीयमात्मविस्तारतामेष्यति । आद्ये विभागे **'उपसर्गाणां सिद्धान्तप्रत्यभिज्ञानम्'** इति विषयो व्याकरिष्यते, द्वितीये तु **'उपसर्गाणां विनियोगविज्ञानम्'** इति विषयमाधारीकृत्योपसर्गार्थराशेर्भाषायां तद्विनियोगश्चेति दृशाऽऽनुसन्धानिकं तथ्यं प्रस्तोष्यते । इत्थमाद्यो विभागः 'सिद्धान्तप्रत्यभिज्ञानम्' द्वितीयस्तु 'विनियोगविज्ञानम्' इति संज्ञाभ्यामपि व्यपदेष्टुं शक्यते ।

भाषा हि नाम मानवस्य सामाजिकी सम्पत्तिः । भाषामाश्रित्यैव मानवसमुदायः स्वीयं निखिलं सामाजिकसंश्लेषमातनोति । महती खल्वियं भाषानाम्नी गम्य-गमकपद्धतिः, बोध्य-बोधकपद्धतिः, संज्ञा-संज्ञिपद्धतिश्च । पाश्चात्त्यशाब्दिकमतानुसारेण प्रयोगात् प्रागेव सिद्धं वस्त्वेव भाषाशब्दवाच्यं भवति[2] । वक्त्र्यपेक्षया पूर्वसिद्धं तद्वस्तु । वक्ता तत्पूर्वसिद्धं वस्तु शैशवे महता कालेन महताऽभ्यासेन चात्मसात्करोति । अत एव वक्त्र्यपेक्षया पूर्वसिद्धमिदं वस्तु समाजधर्मत्वेनाङ्गीक्रियत आधुनिकभाषाशास्त्रविद्भिः ।

इत्थं भाषा हि नाम सामाजिको धर्मः, तस्या यस्तात्कालिकः प्रयोगः स तु वक्तृगतो धर्मः । प्रयोगो हि नाम वक्त्रा बुद्धिपूर्वकं क्रियमाणा काचित् क्रिया । वक्ता हि स्वगतान् भावानर्थांश्चाभिव्यङ्क्तुं वाक्यानि रचयति । वाक्यरचनायामस्ति वक्तुः किञ्चित् स्वातन्त्र्यम् । अतो भाषायाः सर्वेष्वपि भागेषूपविभागेष्वस्ति किञ्चिद् गमकम्, किञ्चिच्च गम्यम्, किञ्चिद् अभिव्यङ्ग्यम्, किञ्चिच्चाभिव्यञ्जकम् । प्रायेण शब्दरूपं गमकम् उत वा व्यञ्जकम्, अर्थरूपं च गम्यमुत वा व्यङ्ग्यं भवति । प्रमाणयति च तथ्यमिदं भोजराजः शृङ्गारप्रकाशे—**'शब्दो ह्याकाशादेव जायते, मुखादेव प्रभवति, न गोत्वादेः । तदाहुः—मुखे हि शब्दमुपलभामहे भूमावर्थमिति । यदाऽपि नित्यः शब्द इति मतम्, तदाऽपि शब्दस्य गोत्वादयो वाच्या विशेष्याः प्रत्याय्या एव भवन्ति'** इति ।

एवं भाषाया गवेषणम्, विश्लेषणम्, स्वरूपनिर्द्धारणम्, प्रकृतिप्रत्ययनिरूपणम्, पदानां वाक्यानां च श्रेणिविभजनम्, नामाख्यातोपसर्गनिपातसमुदायस्य भाषाशास्त्रीय-

---

१. ऋग्वेदानुक्रमणी–६।१४–१५ । २. आस्पेक्ट्स आफ लैंग्वेज–पृ० १५७–५८ ।

मर्थनिश्चयनं च प्राचीनभारतीयभाषाशास्त्रनिष्णातैः शाब्दिकैर्वैदिकसंहितासमय एव कृतमासीत् ।

अध्यायस्यास्य मुख्यः प्रतिपाद्यविषय उपसर्गाणां सिद्धान्तः, तेषां विनियोगश्चास्ति । भाषाप्रतिमासङ्घटने तेषां प्रयोगोऽत्यन्तमहत्त्वमादधाति । अतोऽत्र भाषाविषये नात्राप्रस्तुतचर्चा भवति । यथा समाजस्य निर्माणमथवा सङ्घटनं च विभिन्नैर्मानवसमुदायैर्भवति, तथैव भाषाया अपि मूर्तेरुदयो विविधैः पदनिकायैः सञ्जायते । शब्दराशेर्यो यः श्रेणिविभागोऽवलोक्यते, तत्रानन्यसाधारणमुपसर्गाणां स्थितिः । वस्तुत उपसर्गसत्तामस्वीकृत्य विश्वस्य काऽपि प्राचीनाऽर्वाचीना वा भाषा स्वीयामलौकिकीं सुषमाम्, पदलालित्यम्, अर्थराशेरनुकूलविस्तरं वा कर्तुमक्षमा भवति । संस्कृतवाङ्मये त्वावैदिकवाङ्मयाल्लौकिकवाङ्मयं यावदुपसर्गाणां विषये यथा भाषाशास्त्रीयम्, दार्शनिकं च विश्लेषणं दृश्यते, न तथाऽन्यासु कासुचिद् भाषासु ।

**ऐतिहासिकः पदविभागः**

वाङ्मये पदराशिः कतिविधो भवतीति विप्रतिपद्यन्ते विविधाः सूरयश्चिरन्तनसमयात् । यथोक्तं भर्तृहरिणा[१]—

**द्विधा कैश्चित् पदं भिन्नं चतुर्धा पञ्चधाऽपि वा ।**
**अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत् ॥**[२] इति ।

केचिन्नामाख्याते इति द्विविधं पदमिति वदन्ति । अपरे उपसर्गनिपातयोः सह संख्यानेन पदानि चतुर्धा भवन्ति, इत्याचक्षते । अन्ये पुनः कर्मप्रवचनीयानां पृथक् सत्तामङ्गीकृत्य नामानि, आख्यातानि, उपसर्गाः, निपाताः, कर्मप्रवचनीयाश्चेति पञ्चपदजातान्युदाहरन्ति । वार्ताक्षौदुम्बरायणावाचार्यौ उल्लिख्य नामाख्याते इति द्वे पदे स्त इति तयोर्मतं भर्तृहरिर्वाक्यपदीये[३] निर्दिशति । 'सुप्तिङन्तं पदम्'[४] इति सूत्रे सूत्रकारेण सुबन्तम्—(देवदत्त इत्यादि) नाम, तिङन्तम्—(गच्छति इत्यादि) आख्यातमिति समस्तपदराशिर्द्विधैव विभक्तः । उपसर्गनिपातकर्मप्रवचनीयानामपि प्रातिपदिकत्वेन सुबन्तत्वात् ते सुबन्त एवान्तर्भवन्ति, इत्युद्घोष्यते महामतिपाणिनिना । अनुसरन्ति च सिद्धान्तममुम्—महेश्वर[५]-हेलाराज[६]-दुर्ग[७]-आशुबोधकारप्रभृतयः[८] शाब्दिकाः । तथा च हेलाराजः—'सिद्धार्थाभिधायि नामपदमिति तदर्थगतं विशेषं द्योतयन्निपातस्तत्रैवान्तर्भवति । सिद्धं ह्यर्थं साक्षाद् वाभिदधातु, तद्गतं विशेषं वा प्रकाशयतु, नेयता भेदः । स्वरादयस्तु केचित् सत्त्वप्रधाना एवेति तेऽपि नामपदमेव ।

१. शृङ्गारप्रकाशः–२, पृ० ४७ ।
२. वाक्यपदीयम्–३।१।१ ।
३. वाक्यपदीयम्–३।१।१ ।
४. अष्टा०–१।४।१४ ।
५. निरुक्तम्–१।१–महेश्वरव्याख्या ।
६. वाक्यपदीयम्–३।१।१–हेलाराजव्याख्यानम् ।
७. निरुक्तम्–१।१–दुर्गवृत्तिः ।
८. आशुबोधव्याकरणम्–संज्ञाप्रकरणम्, सू० ३२ ।

ये तु हिरुगादयः क्रियाप्रधानास्तेषामाख्यातेऽन्तर्भावः। न हि तिङन्तमेवाख्यातम्, क्रियाप्रधानस्य सर्वस्यैव तल्लक्षणत्वात्। अत एवोपसर्गकर्मप्रवचनीयपदान्यप्याख्यात-पदमेव, साध्यार्थगतविशेषद्योतनात्। एवं निपातोऽपि'[1] इति।

एवमेव महेश्वरोऽपि निरुक्तव्याख्यान उद्देश्यविधेयाभ्याम् आहोस्वित् साध्य-साधनाभ्यां वाक्यार्थमूर्तेरुदयेन पदद्वैविध्यमेव भजते—'भावस्य साध्यत्वात्, सत्त्वस्य च साधनत्वात्, साध्यस्य प्रधानत्वात्' इति। लाघवात् तत्त्वतश्चैष विभागो न्याय्य एव, अतो नात्र कस्यापि विमतिः। सुबन्ततिङन्तयोरेव वाङ्मयस्य सुतरां समावेशात्।

आधुनिकैः—मैकडानल[2]–मैक्समूलर[3]–वान्द्रियेंज[4]–डेनिस्टन[5]-वरो[6]–ह्विट्नी[7]–गुणे[8]-प्रभृतिभिर्भाषाशास्त्रज्ञैरप्यैतिहासिकेन गवेषणेन प्रत्यपादि यत् पदविज्ञानदृष्ट्या पदद्वैविध्यमेवाङ्गीकरणीयमिति। मैक्समूलरमहोदयो विवृणोति यत्—'प्राग्वैदिककाले[9] सम्पूर्णः पदराशिर्द्विविध आसीत्—नामरूपात्मक आख्यातरूपात्मकश्च। साम्प्रतं ये निपातोपसर्गाः सम्मूर्च्छितार्थका निरर्थका वा दृश्यन्ते, कामं ते कदाचित् स्वतन्त्रार्थाः स्वतन्त्रप्रयोगार्हाश्चासन्। एवंविधानां पदानां वैयुत्पत्तिकार्थानुधावनेऽकृतभूरि-परिश्रमैः शब्दतत्त्वगवेषणाक्षमैः शाब्दिकैस्ते द्योतकाः, अनर्थकाः, रिक्तार्थका वा व्यपदिष्टाः' इति।

इदमेव तथ्यमुद्घोषितं माधवभट्टेनापि। स वक्ति यत्—'वैदिकभाषातत्त्व-विद्भिः शौनकप्रभृतिभिराचार्यैर्निपातोपसर्गादीनामर्था दुर्ज्ञातत्वात् = विस्मृतार्थत्वाद् नोपवर्णिताः। केचनाचार्या मन्यन्ते यत्तेषां शब्दानाम् = निपातोपसर्गाणामर्थाः सुज्ञातत्वात् = सर्वजनप्रसिद्धत्वात् तैर्नोपदिष्टाः' इति। तथा चोक्तम्—

**सुज्ञातोऽर्थस्ततो नोक्त इति केचिदवस्थिताः।**
**दुर्ज्ञातोऽर्थस्ततो नोक्त इति केचिदभाषत**[10] ॥ इति।

एवमेव निरुक्तव्याख्यात्रा दुर्गाचार्येणापि पद्यमेकमुदाहृतम्। तेन श्लोकेनापि सङ्केतितं भवति यत् सूरिभिश्चतुर्विधपदेषु द्विविधस्यैवार्थनिर्णयः कृतः, अर्थान्नामाख्या-तस्यैवार्थः सर्वजनसुलभत्वात् परिसंख्यातः। निपातोपसर्गाणामर्थास्तु विस्मृतत्वात् सर्वजनदुर्बोध्यत्वाच्च संदिह्यमानैस्तैर्नालोचि।

---

१. वाक्यपदीयम्—३।१।१।
२. वैदिक ग्रामर–पृ० २७६।
३. दि लेक्चर्स आन साइंस आफ लैंग्वेज–पृ० ३८२।
४. भाषा–पृ० ७०।
५. दि ग्रीक पार्टिकल्स–पृ० २५।
६. संस्कृत लैंग्वेज–पृ० ३२५।
७. संस्कृत ग्रामर–पृ० ३९१।
८. तुलनात्मक भाषाविज्ञान-पृ० ६५।
९. लैक्चर्स आन दि साइंस आफ लैंग्वेज–पृ०२७०।
१०. ऋग्वेदानुक्रमणी–८।२।४।

तथा च दुर्गाचार्यः—

**चतुर्विधपदेष्वत्र द्विविधस्यार्थनिर्णयः ।**
**क्रियते संशयोत्पत्तौ नोपसर्गनिपातयोः**[1] ।। इति ।

पद्येऽस्मिन् दुर्गाचार्योऽङ्गीकरोति यन्निपातोपसर्गाणामर्थेषु संदिह्यमानैः सूरिभिस्ते न परिसंख्याताः । नामाख्यातानामर्था लोकप्रसिद्धा भवन्ति, अतस्तेषां निर्वचनं परिसंख्यानं च दृश्यते । सन्दर्भेणैतेनेदमेव निष्कृष्यते यल्लोकमानसैर्विस्मृता विस्मारिता भ्रंशिता वा निपातोपसर्गाणामर्थाः सूरिभिः शाब्दिकैर्नोदघाटि । वैयुत्पत्तिकार्थान्वेषणे पराङ्मुखैः शाब्दिकैस्ते (निपातोपसर्गाः) असत्त्वगन्धिनः, द्योतकाः, अनर्थकाश्चोद्घोषिताः । शब्दशास्त्रे उत्तरोत्तरं शैथिल्यं भजमानानाम्, अथ चैतिहासिकगवेषणपराङ्मुखानामात्मतुष्टिमवलम्बतां संक्षेपरुचीनां वैय्याकरणानामौदासीन्यात् प्रयत्नशैथिल्याच्च शब्दशास्त्रीयाः सिद्धान्तरत्नानि ग्रन्थरत्नानि च विस्मृतानि विलयं च गतानि इति सनिर्वेदं सङ्केतयति महामतिर्भर्तृहरिः[2]—

प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान् ।
संप्राप्य वैयाकरणान् संग्रहेऽस्तमुपागते ।।
कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ।।
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ।
तस्मिन्नकृतबुद्धीनां नैवावस्थितनिश्चयः ।।
वैजिसौभवहर्यक्षैः शुष्कतर्कानुसारिभिः ।
आर्षे विप्लाविते ग्रन्थे सङ्ग्रहप्रतिकञ्चुके ।।
यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः ।
काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः ।।
पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः ।।
न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम् ।
प्रणीतो गुरुणाऽस्माकमयमागमसंङ्ग्रहः ।। इति ।

अमीभिर्भर्तृहरिश्लोकैर्निष्कृष्टं भवति यत् संक्षेपरुचीनां वैयाकरणानामकृतबुद्धित्वाद् विविधाः शब्दशास्त्रीयाः सिद्धान्ताः ग्रन्थाश्चास्तमुपगताः । मन्ये यदेवंविधे सिद्धान्तरत्नाकरायमाणे व्याकरणागमे विप्लाविते सति निपातोपसर्गसिद्धान्तानां विप्लवनं त्वकिञ्चित्करमेव ।

आचार्यभर्तृहरेरिमे श्लोका ऐतिहासिकदृशाऽतिमहत्त्वमाप्नुवन्ति । क्रमशः कथं शब्दशास्त्रीयाः पदविज्ञानसम्मताश्च वादा विलुप्ता इति स्पष्टं सङ्केतितं भर्तृहरिणा ।

१. निरुक्तम्–१।१–दुर्गवृत्तिः । २. वाक्यपदीयम्–२।४७८-४८४ ।

मन्ये यदस्य मुख्यं कारणं तु संस्कृतभाषायाः सुविपुलमैतिह्यमेवास्ति । कामं हि संस्कृतभाषा कालिकायामे प्रायो दशसहस्राब्दीपर्यन्तमनुधावति । एतादृशेऽतिविस्तीर्ण ऐतिहासिकानुधावने तत्तद्राजनीतिक-ऐतिहासिक-कालिक-दैशिकपरिस्थितिभिश्च दुष्प्रभाविता सिद्धान्ता ग्रन्थाश्चास्तंगताः ।

संस्कृतभाषाया अस्मिन्नेव कालप्रवाहेऽनेकार्थाः शब्दा एकार्था सञ्जाताः, एकार्थाश्चानेकार्थाः । कुत्रचिदनेकार्था एकार्थाश्च शब्दा रिक्तार्था अनर्थकाश्चाप्युपपन्नाः । अत एव लोकमानसैर्विस्मृतार्थकाः शब्दाः संक्षेपरुचिभिः शाब्दिकैर्द्योतकत्वेनामृष्टाः । प्रमाण्यते च सिद्धान्तोऽयं महाभाष्यकारेण—'को हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुम्'[1] इति । अनेन भाष्यकर्तुः सङ्केतेनापि सिद्धान्तितुं प्रभवामो यत् संस्कृतभाषायां पदविज्ञानदृष्ट्याऽर्थविज्ञानदृशा च शब्दा उत्तरोत्तरं स्खलितार्थाः सम्मूर्च्छितार्थाश्च सञ्जाताः । एवं स्खलितात्मशक्तिमन्तः शब्दा एव पदराशेः चातुर्विध्यविभागस्य हेतुत्वमापन्ना इति । पदद्योतकतावादस्य प्रचारः स्वयमेवोद्घोषयति यद् आद्यो विभागस्तु द्विविध एवासीदिति—नामरूपेण, आख्यातरूपेण च । अत एव माधवभट्टेनोदघोषि यत्—'आचार्यशाकल्यः, यास्कः, पाणिनिश्च ऋगर्थविदः, किन्त्वेतेऽपि यथाशक्त्यनुधावन्त्येव, न हि कृत्स्नतया सर्वम् ऋगर्थं कथयन्ति—

शाकल्यः पाणिनिर्यास्क इत्यृगर्थपराश्रयः ।
यथाशक्त्यनुधावन्ति न सर्वं कथयन्त्यमी[2] ॥

एवमेव महाभारतव्याख्यात्रा देवबोधाचार्येणाप्युक्तं यत्—महाभारते महर्षिव्यासेन प्रयुक्तो यः शब्दसागरः, सोऽपार एव; तदपेक्षया महर्षिपाणिनिनिर्दिष्टाः शब्दाः स्वल्पा एव । महर्षिव्यासेन माहेन्द्राद् व्याकरणसागरादुद्धृत्य शब्दा गृहीताः । यदि तेषु केचन पाणिनीयव्याकरणे न दृश्यन्ते, तेन तस्यासाधुत्वप्रतिपादनं नैव समर्थनीयम् । तथा च देवबोधाचार्यः—

**न दृष्ट इति वैयासे शब्दे मा संशयं कृथाः ।**
**अज्ञैरज्ञातमित्येव पदं न हि न विद्यते ॥**
**यान्युज्जहार माहेन्द्राद् व्यासो व्याकरणार्णवात् ।**
**शब्दरत्नानि किं तानि सन्ति पाणिनिगोष्पदे[3] ॥**

अनेनोद्धरणेनापि सिद्ध्यति यच्छब्दानां तेषामर्थानां च सङ्कोच उत्तरोत्तरं सञ्जातः ।

अत्रेदं प्रतिभाति यदपारेऽस्मिन् शब्दराशौ सर्वे शब्दाः स्वयमेवार्थप्रत्यायकाः, तत्र साधुत्वासाधुत्वमीमांसा द्योतकता-वाचकताजिज्ञासा वा नैव घटते । यतः पाणिनिना केषाञ्चिदेव शब्दानां साधुत्वासाधुत्वचिन्ता कृता, न सर्वेषाम् । ये च

---

१. महाभाष्यम्–२।१।१ ।
२. ऋग्वेदानुक्रमणी–८।१।७ । ३. महाभारतम्–मङ्गलश्लोकः, देवबोधाचार्यव्याख्या ।

पाणिनिव्याकरणे परिगृहीताः शब्दाः, तेषामल्पत्वं गोष्पदमात्रत्वं च महाभारतटीकाकारैः श्रीदेवबोधाचार्यैरुक्तमेव ।

अमीभिर्गवेषणैरथ च निरुक्तव्याख्यातुर्दुर्गाचार्यव्याख्यानेनाथ चाशुबोधव्याकरणकर्तुः सिद्धान्तेनापि निष्कृष्यते यत् प्राग्वैदिककाले प्रारम्भिकवैदिकसंहितासमये च सर्वविधाः शब्दाः सुस्पष्टार्थाः; अथ च स्वतन्त्रप्रयोगार्हाश्चासन् । दुर्गाचार्येण प्रतिपादितं यत्—'स्त्रीपुंनपुंसकभेदं निपातोपसर्गाणामपि वा क्वचिन्नामत्वमपेक्ष्य बहुवचनेनोक्तं नामानीति'[१] इति । एवमेवाशुबोधकारेणापि निर्दिष्टं यत्–'नामधातूपसर्गनिपाताः प्रकृतिः'[२] इति । आभ्यां दृष्टान्ताभ्यामपि निर्गलितो भवति यत् समस्तः पदराशिः संस्कृतभाषायाः प्रारम्भिकसमये द्विधैव विभक्तः स्वीकृतश्चासीत् ।

अत एव वैदिकवाङ्मये केचन नामशब्दा निपातोपसर्गमूला अपि दृश्यन्ते। एतेषां संज्ञाशब्दानामुपादानकारणत्वेन निपातोपसर्गा एव व्यापृताः । तद्यथा—'अणुः', 'अनुः', 'आनवाय', 'आनवे', 'आनवस्य', 'अनुषु', 'अन्त्रम्', 'आन्त्राणि', 'उमा', 'पुरुः', 'पुरुम्', 'पुरयस्य', 'पूरूणाम्', 'पुरुषु', 'सनातनः', 'सनन्दनः', 'सनत्कुमारः', 'सनकः', 'हाहा', 'हूहू' प्रभृतयो नामशब्दा निपातोपसर्गविवर्तभूताः । इमे संज्ञाशब्दाः सम्पूर्णे संस्कृतवाङ्मये भाषायाः सौन्दर्यं समेधयन्ति । अमीषां निपातोपसर्गविवर्तभूतानां संज्ञाशब्दानां वैयुत्पत्तिकं विश्लेषणं वैशद्यतया तृतीयेऽध्याये सञ्जातम् । अतोऽत्र परिसंख्यानमात्रमपि बहु मन्यते ।

इमानि दृष्टान्तानि सुबन्तरूपं तिङन्तरूपं च पदद्वयविभागं प्रमाणयन्ति। वाक्यप्रतिमायाः सङ्घटनमपि द्विविधपददलैः—उद्देश्यदलैः, विधेयदलैश्च सञ्जायते। उद्देश्यकोटौ नामादयः संगृह्यन्ते, विधेयकोटावाख्यातादयः । अतः सर्वासु प्राचीनभारो[३]-पीयासु भाषास्वाद्यः पदविभागो द्विविध एवासीत्—नामत्वेन, आख्याततत्वेन च ।

**पदचातुर्विध्यविकासः**

एवं हि वैदिकवाङ्मयस्याद्यो द्विविधपदविभाग एव कालान्तरे पदचातुर्विध्यरूपेण विवर्तितः। इदं हि विवर्त्तनं नामातिविस्तृतकालसापेक्षमासीत् । अनेकसहस्राब्दीं यावद् व्यवह्रियमाणाया वैदिकभाषायाः प्रयोक्तृशैथिल्यात् संक्षेपरुचित्वाच्च केचन शब्दा अन्योन्यसङ्घर्षणेन लघुरूपतामापन्नाः । आकारेषु लघुरूपतां भजमानानां तेषां शब्दानां वैयुत्पत्तिका अर्थास्तिरोहिताः । तदनु संक्षेपरुचिभिः शाब्दिकैस्ते शब्दा निपातसंज्ञया उपसर्गसंज्ञया च लाञ्छिताः । मन्ये यत् पदचातुर्विध्यविभागकल्पना ऋग्वेदस्य चरमे चरणे सञ्जाता । ऋग्वेदीयमन्त्रे 'चत्वारि वाक्परिमिता पदानि[४]' इत्यत्र पदशब्दो बहुवचनान्तत्वेन निर्दिष्टोऽस्ति । पदशब्दस्य व्याकरणं निर्वचनं तु शब्दशास्त्रेऽ-

---

१. निरुक्तम्–१।१–दुर्गाचार्यव्याख्या । २. आशुबोधव्याकरणम्–संज्ञाप्र० सू० ३२ ।
३. दि ग्रीक पार्टिकल्स–पृ० १३२ । ४. ऋ० सं०–१।१६४।४५ ।

नेकविधमुपलभामः। आचार्ययास्क[1]-पाणिनि[2]-शौनक[3]-कौटल्य[4]-पतञ्जलि[5]-अमरसिंहप्रभृतिभिः[6] शाब्दिकैरथ च ऋग्[7]-यजुः[8]-तैत्तिरीयप्रातिशाख्यकर्तृभिरपि[9] पदलक्षण-निर्धारणे महान् प्रयत्नः कृतः। अमीभिराचार्यैः प्रतिपादितस्य पदलक्षणस्यानु-रोधेनेदमेव निश्चीयते यद् ऋग्वेदमन्त्र उपवर्णितस्य 'पदानि'शब्दस्यापि स एवार्थो भवितुमर्हति, योऽर्थः पुरस्ताच्चर्चितैराचार्यैः स्वीकृतः, अर्थात् **'अर्थः पदम्[10]' 'सुप्तिङन्तं पदम्[11]', 'वर्णसङ्घातः पदम्[12]'** इति स्वीकृते सति 'पदानि'शब्दस्य विशेषणत्वेन 'चत्वारि' इति पदस्यान्वयात्, कानि तानि चत्वारि पदानीति जिज्ञासायम्—'नामाख्यातोपसर्गनिपाताः'[13] इति उत्तरीतुं शक्यते। तत्र 'पदानि' इति विशेष्यम्, 'चत्वारि' इति विशेषणम्। अनयोर्विशेष्यविशेषणास्कन्दनेन स्वत एव प्रथिततरं भवति यत् पदचातुर्विध्यविभागस्यादिकालो भारतीयवाङ्मयस्यादिग्रन्थत एव निर्धारितो भवति।

### उपसर्गशब्दस्याभिधानिकानि वैचित्र्याणि

उपसर्गशब्दस्य कानि कान्याभिधानिकवैचित्र्याणि सन्ति? अर्थादुपसर्गशब्दः संस्कृतवाङ्मये कस्मिन् कस्मिन्नर्थे प्रयुज्यमानो दृश्यत इत्यपि प्रसङ्गोपात्तो विषयः। अयमुपसर्गशब्दः शाङ्खायनब्राह्मणे[14] ऐतरेयब्राह्मणे[15] गोपथब्राह्मणे[16] च विभिन्नेष्वर्थेषु प्रयुक्तो दृश्यते। एवमेव शुक्लयजुःप्रातिशाख्ये[17] अथर्वप्रातिशाख्ये[18] अमरेशस्य वर्णरत्नदीपिकायाम्[19] अर्थशास्त्रे[20] सर्वदर्शनसङ्ग्रहे[21] वेङ्कटमाधवस्य[22] ऋग्भाष्ये, सायणस्य ऋगुपोद्घाते[23] च साभिनिवेशमस्य भाषाशास्त्रीयं विवेचनमुपलभ्यते। ऐतरेयब्राह्मणे, ताण्ड्यमहाब्राह्मणे च महानाम्न्यामृचि संश्लिष्यमाणानामष्टाक्षरात्मकपञ्चपदानां कृत उपसर्गशब्दो व्यवहृतः, तानि पञ्च पदानि त्वैतरेयब्राह्मणव्याख्यात्रा सायणाचार्येणैवं व्याख्यायि—मघवन्नित्यस्मिन्ननुवाके[24] प्रोक्ता ऋचो महानाम्न्यस्तासां सम्बन्धिन उपसर्गाः पञ्चविधाः। ते चाश्वलायनेन दर्शिताः—'प्रचेतनं प्रचेतयाऽऽयाहि पिब मत्स्व। क्रतुश्छन्दकृतं बृहत्सुम्न आ धेहि नो वसवित्यनुष्टुप्'। एतेषु पञ्चसूपसर्गेषु

---

१. निरुक्तम्–१।१। २. अष्टा०–१।४।१४।
३. बृहद्देवता–२।११७। ४. अर्थशास्त्रम्–२।१०।२८। ५. महाभाष्यम्–१।२।६४।
६. अमरकोषः–पङ्क्तिः–३१४। ७. ऋ० प्रा०–१।१०१।
८. शुक्लयजुःप्रा०–३।२। ९. तैत्ति० प्रा० २३।३। १०. निरुक्तम्–१।१।
११. अष्टा०–१।४।१४। १२. अर्थशास्त्रम्–२।१०।
१३. निरुक्तम्–१३।९। १४. शाङ्खायनब्रा०–१७।१।
१५. ऐतरेयब्रा०–१६।४। १६. गोपथब्रा०–१।१।२४–२७।
१७. शुक्लयजुःप्रातिशाख्यम्–८।४७। १८. अथर्वप्रा०–१।१।
१९. वर्णरत्नाकरदीपिका–पृ० २३६। २०. अर्थशास्त्रम्–२।१०।
२१. सर्वदर्शनसंग्रहः–पृ० १४०। २२. ऋग्भाष्यम्—अष्टकम्–२।१।
२३. ऋग्भाष्योपोद्घातः–पृ० २१। २४. ऐतरेयब्रा० १६।४–सायणभाष्यम्।

मिलित्वा द्वात्रिंशदक्षरसद्भावादियमेकाऽनुष्टुबिति सूत्रस्यार्थः। एवमेवाग्निवेश्य गृह्यसूत्रे[१] निदानसूत्रे[२] हिरण्यकेशीयगृह्यसूत्रे[३] आपस्तम्बगृह्यसूत्रे[४] आश्वलायन गृह्यसूत्रेष्वपि[५] च 'प्रवहः', 'मतिन्नम्', 'हरिहः', 'स्वित्' शब्दा अपि अनुष्टुब् ऋचि संयुज्यमानाः सन्त उपसर्गाभिख्यामाप्नुवन्ति। अयमुपसर्गशब्दो द्राह्यायणगृह्यसूत्रे[६] चन्द्रसूर्यग्रहयोर्ग्रहणार्थे, बोधायनगृह्यसूत्रे[७], अथर्वपरिशिष्टे[८] विष्णुधर्मसूत्रे[९] च महोपद्रवात्मकेऽनिष्टार्थे च प्रयुक्तोऽवलोक्यते। तथा चाथर्वपरिशिष्टम्—

**उपसर्गभये चैव परचक्रभये तथा।**
**अनावृष्टिभये चैव कोटिहोमान् प्रयोजयेत्॥**

मैत्र्युपनिषदि[१०] वाल्मीकीयरामायणे[११] योगसूत्रे[१२] मार्कण्डेयपुराणे[१३] प्रवोधचन्द्रोदयनाटके[१४] चोपसर्गशब्दस्य प्रयोगो ज्ञानान्तरायरूपविक्षोभार्थे, महोपद्रवार्थे, विघ्नरूपार्थे चोपलभ्यते।

वैदिकसाहित्य एव माध्यन्दिनसंहितायाम्[१५] काठकसंहितायाम्[१६] मैत्रायणिसंहितायाम्[१७] कपिष्ठलसंहितायाम्[१८] पैप्पलादसंहितायाम्[१९] चायमुपसर्गशब्दो निक्षेपार्थे, संयोजनार्थे च व्यवहृतो वर्तते। सुश्रुतसंहितायां तु रोगकृतोपद्रवार्थ उपसर्गशब्दस्य प्रयोगो जातः। तथा हि श्लोकः—

**राजीमद्वा चन्द्रकैः सन्ततं वा पूयप्रख्यं कर्दमाभं तथोष्णम्।**
**हन्यादेतद् यत्प्रतीपं भवेच्च क्षीणं हन्युश्चोपसर्गाः प्रभूताः॥**[२०] इति।

सुश्रुतसंहिताव्याख्यात्रा व्याख्तातं यत्—'उपसर्गाः = उपद्रवाः। ते च तन्त्रान्तरे पठिताः, ज्वरशोफादयः। एते उपद्रवाः क्षीणम् = अतिसारिणं हन्युरिति योजनीयम्' इति। अस्मिन् टीकावाक्ये 'क्षीणम् = अतिसारिणम् उपसर्गा हन्युः' इत्यत्र क्षीणम् = निर्बलम् उपसर्गा हन्युरित्यनेन **'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते'** इति

---

१. आग्निवेश्यगृह्यसू०—२।१।५।
२. निदानसूत्रम्—२।१२।१०।
३. हि० के० गृ० सूत्रम्—२।४।१०।
४. आपस्तम्बगृ० सू०—६।१५।१०।
५. आश्वलायनगृ० सू०—६।२।९।
६. द्रा० गृ० सू०—३।२।३०—रुद्रस्कन्दवृत्तियुतम्।
७. बो० गृ० सू०—३।५।८।
८. अथर्वपरिशिष्टम्—३१।४।५।
९. विष्णु धर्मसूत्रम्—७१।७६।
१०. मै० उ०—७।८।
११. वाल्मोकिरा०—अयोध्याका०—६३।२।
१२. योगसूत्रम्—३।३७।
१३. मार्कण्डेयपुराणम्—९२।७।
१४. प्रवोधचन्द्रोदयम्—६, पृ० २०४।
१५. माध्यन्दिनसं०—११।३८।
१६. काठकसं०—८।२।
१७ मैत्रायणिसं०—१।६।३, ३।१।५।
१८. कपिष्ठलसं०—६।७, ३०।३।
१९. पैप्पलादसं०—५।३१।१।
२०. सुश्रुतसं०—उत्तरतन्त्रे—अ० ४०।२०।

वाक्यस्य संवादो भवति । उभयत्रापि क्षीणबलेषु (अतिसारग्रस्तेषु, दुर्बलार्थकधातुषु च) उपसर्गैरर्थविप्लवः क्रियते । यतो हि बलवतैव हठात् क्षीणबलान्यन्यथाक्रियन्ते, उद्धार्यन्ते च । अत एव मैक्समूलरमहोदयेनोक्तं[1] यत् प्रायेण शब्दानामर्थपरिवर्तनं शब्दान्तरसंश्लेषणेनैव भवति । दुर्बलार्थाः सबलार्था वा शब्दा विजातीयशब्दास्कन्दनेनैव जहत्स्वार्थवृत्तिमन्तोऽजहत्स्वार्थवृत्तिमन्तो वा क्रियन्ते ।

भवतु नाम, धर्मशास्त्रे तु दिव्य-नाभंस-भूमिजभेदेन त्रिविध उत्पातरूप उपसर्गस्तु रूढ एव । अत एव वाल्मीकीयरामायण उक्तं यत्—'यथा तमः सूर्यमाच्छादयति, तथैव नानाविध उत्पातरूपा उपसर्गाः, =उपद्रवा रामलक्ष्मणावापेदे—

**रामलक्ष्मणयोश्चैव विवासाद्वासवोपमम् ।**
**आपेदे उपसर्गस्तं तमः सूर्यमिवासुरम् ।।** इति ।

एभिर्नानाविधशास्त्रीयैर्दृष्टान्तैश्चित्रात्मकानि तथ्यानि निःसरन्ति किलोपसर्गाणां विषये । अत्रेदमवधारणीयमस्ति यद् भाषाक्रोडेऽसकृदभ्यस्यमानाः शब्दग्रामा भाषाया ऐतिहासिकसंस्रवे स्त्रीयमौर्वरत्वं जहति । तदनु, और्वरत्वशक्तिस्खलिता ते ध्वनिग्रामा वाक्यशोभाकरा इव व्यवहर्तृभिर्यथाकथोच्चार्यन्ते स्म । न हि तेषामुच्चारणे वक्तुः कोऽप्यभिनिवेशो दृश्यतेऽर्थावबोधस्य । न ह्येतादृशमौर्वरत्वशक्तिस्खलनं केवलं निपातोपसर्गेष्वेव सङ्घटते, अपि तु शब्दमात्रे । एवं सम्मूर्च्छितेषु उत वा और्वरत्वशक्तिस्खलितेष्वाहोस्विद् रिक्तार्थकेषु शब्देषु यदोपसर्गानिपाता वाऽऽसज्यन्ते, तदा स्तम्भितार्थेषु पदेषु जायते कश्चित् संक्षोभ उत वाऽर्थविप्लवः । अर्थादर्थविप्लवे जाते सति अनुर्वराः शब्दाः पुनर्नवनवैरर्थैरुत्तभ्यन्ते । एष एव भाषाया अविच्छिन्नधारायां शब्दानामर्थपरिवर्तनस्य मुख्यः सिद्धान्तः । अस्मिन्नेव सन्दर्भे पुरस्ताच्चर्चिता विविधशास्त्रीयाः—ज्ञानान्तरायरूपाः, उपद्रवरूपाः, विघ्नरूपाः, उपद्रवजनितरोगरूपाश्च—उपसर्गशब्दस्यार्थास्तोलनीयाः । वस्तुतो विक्षोभो हि नामात्मशक्तिजागरणम् । ऋते विक्षोभं नात्मावबोधो भवति प्राणिषु । अत एव कविशिरोमणिना कालिदासेन विज्ञापितं यत्—

**ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।**
**प्रायः स्वं महिमानं क्षोभात् प्रतिपद्यते हि जनः ।।**[3]

असावेव विक्षोभसिद्धान्तः शब्देष्वपि चरितार्थो भवति ।

**उपसर्गपदस्य वैयुत्पत्तिकोऽर्थः**

इत्थं संस्कृतवाङ्मयस्य विविधासु ज्ञानशाखासूपसर्गशब्दो नानाविधेष्वर्थेषु विनियुक्तो विजृम्भते । ऐतिहासिकदृशा गवेषणेनेदं वक्तुं पार्यते यत् पदचातुर्विध्यरूप-

---

१. लेक्चर्स आन दि साइंस आफ लैंग्वेज़–पृ० २४८ ।
२. वाल्मीकिरा०–२।६३।२ ।
३. अभिज्ञानशाकुन्तलम्–६।३१ ।

विभागस्योद्भवस्तु वैदिककालिकः। मन्ये यत् प्राग्वैदिकभाषायां द्विविधपदविभाग एव स्यादिति। अत्रेदमपि परीक्षणीयमस्ति यदुपसर्गशब्दस्य वैयुत्पत्तिकोऽर्थः किंमूलकः? उप + √सृज् + घञ् > उपसर्गः [ = उपसर्जनम्] इत्यर्थः। उपसृज्यते इत्युपसर्गः, अथवा उपसृजतीत्युपसर्ग इति व्युत्पत्तिः। ऋग्वेदभाष्यकारेणाचार्यसायणेनेत्थं व्याख्यायि—**'प्रागुपसृजत आख्यातपदस्येत्युपसर्गः'**[1] इति। निरुक्तव्याख्याता दुर्गाचार्य्यस्त्वन्यथैव व्याकरोत्युपशर्गशब्दम्—**'उप = उपगृह्य आख्यातम्, तस्यैवार्थविशेषं सृजन्तीत्युपसर्गाः'**[2] इति। प्रायेणोभाभ्यामप्याचार्याभ्यां भङ्ग्यन्तरेणैक एवार्थः स्वीकृत उपसर्गशब्दस्य। नाट्यशास्त्रे तूपसर्गशब्दस्य व्युत्पत्तिर्भाषाशास्त्रसम्मता दृश्यते—

**प्रातिपदिकार्थयुक्ता धात्वर्थानुपसृजन्ति ये स्वार्थे।**
**उपसर्गा ह्युद्दिष्टास्तस्मात्संस्करतस्तस्मिन्**[3] ॥

अर्थात् प्रातिपदिकार्थसहिता एत उपसर्गा धात्वर्थान् स्वार्थे उपसृजन्ति = अतिरिक्तमर्थविम्वं प्रोद्भावयन्त्युत्पादयन्ति वा। प्रमाणयति च व्याख्यामिमाम् अभिनवगुप्ताचार्यः—'धात्वर्थानुपसृजन्ति = उपरागेणान्यादृशान् कुर्वन्ति। तेनोपरागेण प्रातिपदिकार्थस्य युक्तसम्बन्धे प्रकरोतीति हि शब्दः' इति। एवमेवोपसर्गशब्दो व्याख्यातुकामेन महेश्वरेणोक्तं निरुक्ते यत्—**'उपेत्य नामाख्यातयोरर्थस्य विशेषं सृजन्ति = उत्पादयन्ति इत्युपसर्गाः'**[4] इति। वस्तुत उपसर्गशब्दस्य व्याख्येयं विमर्शप्रधाना भाषाशास्त्रसम्मता पदविज्ञाननिबन्धना च प्रतिभाति। यतो ह्यन्योन्यं संश्लिष्यमाणैः पदैः सार्थकैर्भवितव्यमेव। न हि सार्थकनिरर्थकयोः पदयोः सङ्घातो भवति। अत एव कैयटेनोक्तं यत्—**'शब्दो न कदाचित् स्वार्थपरित्यागेनार्थान्तरे प्रवर्तते, अर्थस्त्वर्थान्तरे समारोपितो यदा शब्दप्रवृत्तिनिमित्तं भवति, तदा गौणव्यवहारः'**[5] इति। अस्माद् यदोपसर्गो निपातो वा नामाख्यातैः सहासज्यन्ते, तदा सन्धीयमानयोरुभयोः पदयोर्मौलिकोऽर्थस्तद्वन्नैवावतिष्ठते, अपि तु जहत्स्वार्थवृत्तिभाग् भवतीति। अस्यां प्रक्रियायां समुदायार्थः प्रधानो भवति, न त्ववयवार्थः।

वस्तुतस्तु भाषाया अप्येकं प्रसवविज्ञानं भवति। यस्मिन् कश्चिच्छब्दः कस्मिंश्चिच्छब्दे संश्लिष्यते, तत्र कश्चिदपरस्यार्थस्य प्रसवः सञ्जायते। कुत्रचित् कश्चिच्छब्दो विश्लिष्यते, तत्र कस्यचिदर्थस्य हानिर्भवति, कुत्रचिच्चातिप्रसवात् कश्चिच्छब्दो रिक्तार्थतामेति, अतस्तत्र प्रसवशक्तेः प्रतिबन्धकता सञ्जायते। यत्र तु विजातीययोर्द्वयोः सन्धिर्भवति, तत्र कामं कस्यचित् तृतीयस्यार्थस्योद्भवः स्वीकर्त्तव्यो भवति। स्वीकुर्वन्ति

---

१. ऋ० सं०–१।१६४।४५।
२. निरुक्तम्–१।१।३ दुर्गव्याख्या।
३. नाटयशास्त्रम्–१४।२६–अभिनवगुप्तव्याख्या।
४. निरुक्तम्–१।१।३–महेश्वरव्याख्या।
५. महाभाष्यम्–८।३।८२–प्रदीपः।

च तथ्यमिदम्—यास्क[1]-पतञ्जलि[2]-कैयट्[3]-उव्वट[4]-हरदत्त[5]-नागेश[6]-लेफेवर[7]-ह्विट्नी[8]-वान्द्रियैज़प्रभृतयः[9] पाश्चात्त्यपौरस्त्यभाषाशास्त्रविदः।

एवं यदा शब्दाः क्रमशोऽर्थस्यान्तर्धानात् स्वीयमात्मशक्तिमौर्वरत्वं च जहति, तदा पुनस्तेषामुद्धरणायोत्तम्भनाय वा कश्चिदनुबन्ध उपसर्गो निपातो वा तेष्वासज्यते। आसञ्जनेनानेन धात्वनुबन्धयोर्धातूपसर्गयोः, नामनिपातयोर्नामोपसर्गयोर्वा यः सन्धिः सम्पद्यते, तस्मिन्नेकः स्फुलिङ्गतुल्यो नवीनोऽर्थः सम्मूर्च्छित इव तिष्ठति। प्रयोगदशायां स एव स्फुलिङ्गतुल्योऽर्थोऽर्थज्वालारूपेण सम्पूर्णं भाषाकलेवरमाभासयति। उक्तं च महेश्वरेण निरुक्तव्याख्यायाम्—

**पूर्वामवस्थामजहत् संस्पृशन् धर्ममुत्तमम्।**
**सम्मूर्च्छित इवार्थात्मा जायमानोऽभिधीयते**[10]॥ इति।

प्रमाणयन्ति च सिद्धान्तममुम्—यास्क[11]-पतञ्जलि[12]-मैक्समूलर[13]-वान्द्रियैज[14]-प्रभृतयो भाषाशास्त्रिणः।

वाजसनेयिप्रातिशाख्येऽप्युपसर्गाणामग्निगर्भत्वमुद्घोषितम्। तथा च श्लोकः—

**सर्वं तु सोम्यमाख्यातं नाम वायव्यमिष्यते।**
**आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः**[15]॥

श्लोकममुं विवृण्वन् अनन्तभट्टो ब्रवीति यत्—'**सर्वमाख्यातं सोमदैवत्यम्, नामपदं सर्वं वायुदैवत्यम्, उपसर्गोऽग्निदैवत्यः, निपातो वरुणदैवत्यः**' इति। अस्य प्रातिशाख्यवाक्यस्यानुसन्धानेनापि वक्तुमुत्सहे यत् सन्धीयमानयोः पदयोरभ्यन्तरे नूतनोऽर्थबिम्बरूपः स्फुलिङ्गस्तिष्ठत्येव। मृच्छकटिकनाटके पात्रभूतो विटो गाढतिमिराच्छन्नमार्गे पलायमानां वसन्तसेनामुद्दिश्य ब्रवीति यत्—'जलदोदरसन्धिलीनां सौदामिनीमिव प्रदोषतिमिरे पलायमाना त्वं कामं न दृश्यसे, किन्तु माल्यसमुद्भवो गन्धस्त्वां सूचयिष्यति—

**कामं प्रदोषतिमिरेण न दृश्यसे त्वं**
**सौदामिनीव जलदोदरसन्धिलीना।**
**त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयं**
**गन्धश्च भीरु मुखराणि च नूपुराणि**[16]॥

---

१. निरुक्तम्—१।२। २. महाभाष्यम्—४।१।४८। ३. प्रदीपः—१।३।८६।
४. वाजसनेयिप्रा०—८।५२—उव्वटभाष्यम्। ५. पदमञ्जरी—५।१।११८।
६. उद्द्योतः—६।१।१३५। ७. रेस एण्ड लैंग्वेज—पृ० २२।
८. लाइफ एण्ड ग्रोथ आफ लैंग्वेज—पृ० २९४-९५। ९. भाषा—पृ० १९९।
१०. निरुक्तम्—१।१।२—महेश्वरव्याख्या। ११. तदेव। १२. महाभाष्यम्—१।३।१।
१३. लेक्चर्स आन दि साइंस आफ लैंग्वेज—पृ० ३८१। १४. भाषा—पृ० २३९।
१५. वाजसनेयिप्रातिशाख्यम्—८।५२। १६. मृच्छकटिकम्—१।३५।

तद्वदेव सन्धिषु लीनानामर्थानां गन्धः केन वार्यते ? अनेन विश्लेषणेन स्थिरीकर्तुं शक्यते यद् यत्र यत्र शब्देषु सन्धिर्भवति, तत्र सर्वत्र कश्चिद् रिक्तार्थकः शब्दः केनचित् पूर्णार्थकेन शब्देनोद्धार्यते । जहत्स्वार्थाजहत्स्वार्थवृत्त्योरयमेवाभिप्राय इति मन्ये ।

**उपसर्गाणाम् अर्थबिम्बोपसर्जनम्**

पूर्वमुपसर्गशब्दस्य विविधा वैयुत्पत्तिका अर्था विवेचिताः । तेन विवेचनेनैतन्निष्क्रष्टुं शक्यते यद् उपसर्गो हि नाम सम्मूर्च्छितानां शब्दानामात्मशक्तिजागरणम्, अथवा नामाख्यातयोः सामान्यार्थातिरिक्तविशेषार्थबिम्बोपसर्जनम्, आहोस्वित् स्थूलसत्ताबोधकैर्नामपदैर्बोध्यमानव्यापारप्रतियोग्यनुयोगिव्यापारप्रोद्भावनम्, उदस्विच्छब्दरूपप्रतिमाभेदोपसर्जनं च ।

अस्मादेव व्याहारशब्दो वरप्रदाने—'वि + आ + √हृ [ = हरणे] > व्याहारः = वरप्रदानम्' प्रयुक्तः । यथोक्तं महाकविभवभूतिना—'ये व्याहारास्तेषु मा संशयो भूत्[1]' इति । अनुव्याहारशब्दो निन्दार्थे, शापार्थे च—'अनु + वि + आ + √हृ [ = हरणे] > अनुव्याहारः[2] = शापः, अनुव्याहारी[3] = निन्दकः'—प्रयुक्तोऽवलोक्यते । तथैव अनुयोक्ताशब्दो भृतकाध्यापकार्थे, अनुयुक्तशब्दो भृतकाध्येतार्थे—'अनु + √युज् [ = योगे] > अनुयोक्ता = भृतकाध्यापकः' व्यवहृतः । तथा चोक्तं महाभारते—

अनुयोक्ता च यो विप्रो अनुयुक्तश्च भारत ।
गर्हितस्तावपि श्राद्धं ब्रह्मविक्रयिणौ हि तौ[4] ॥

एवमेव—उपाकर्मशब्दः स्वाध्यायस्वीकारार्थे, उपाकृत्यशब्दोऽधीत्येत्यस्यार्थे—'उप + आ + √कृ [ = करणे] > उपाकृत्य = अधीत्येत्यर्थः'—विनियुक्तोऽवलोक्यते । तथा च महाभारते—

कृपणं स्वरथे सन्नं पश्य कृष्ण यथागतम् ।
उपाकृत्य तु वै विद्यामाचार्येभ्यो नरर्षभाः[5] ॥ इति ।

नामपदानामिवाख्यातपदानामप्यतिरिक्तार्थलाभो भवति निपातोपसर्गस्कन्देनैव । आख्यातैर्योऽर्थबिम्बः प्रसूयते, तत्प्रतियोगिभूतोऽर्थ उपसर्गैः प्रसूयते । यथा—√छदि [ = वरणे] इत्ययं धातुरुपोपसर्गेण सह प्रार्थनायां प्रयुक्तः—'उप + √छदि [ = वरणे] > उपच्छन्दयति = प्रार्थयतीत्यर्थः । पठितं च रघुवंशे—'तस्मादुपच्छन्दयति

---

१. उत्तररामचरितम्–४।१८ ।

२. शतपथब्राह्मणम्–१।४।३।११—'एनं होतारम्, यदि द्वेष्यः अनुव्याहरेत् = शपेत् । अनुव्याहारः = शापः (धूर्तस्वामिभाष्यम्) ।

३. शतपथब्रा०-१।६।१।१६-सायणभाष्यम्, सत्याषाढश्रौतसूत्रम्-२४।८।२८-वांछेश्वरसुधीव्याख्या ।

४. महाभारतम्—अनुशासनप०–२३।१७—नीलकण्ठव्याख्या ।

५. महाभारतम्—द्रोणप०–१४७।२१—नीलकण्ठव्याख्या ।

प्रयोज्यं मयि त्वया न प्रतिषेधरौक्ष्यम्'[1]। व्याख्यातं च हेमाद्रिणा—'उपच्छन्दनम् = प्रार्थना, छन्दसोपसान्त्वयन् = उपच्छन्दयन्, कर्तृकरणार्थे णि च'। ग्राम [ = आमन्त्रणे] इति धातुः समुपसर्गेण सह युद्धार्थे प्रयुज्यते—सम् + √ग्राम [ = आमन्त्रणे] > संङ्ग्राम= युद्धे, सङ्ग्रामयते[2] = युद्ध्यतीत्यर्थः'। एवमेव √ध्वंस [ = गतौ] इति धातुर्व्युपसर्गेण सह निवासार्थेऽवलोक्यते—'वि + √ध्वंस् [ = गतौ] > विध्वंसयति = निवासयतीत्यर्थः'। तथा व्याख्यातं दुर्गासप्तशत्याम्—'बभूवुः शत्रवो भूपाः कोलविध्वंसिनस्तथा'[3] इति। व्याख्याति च श्लोकमिमं चतुर्धराचार्यः—कोलांविध्वंसिन इति—विध्वंसितुम् = अध्यासितुं शीलं येषाम्। विशब्देन धातोरन्यार्थकरणात्। तेन कोलाविध्वंसिनः = कोलानिवासिनो भूपास्तस्य शत्रवो बभूवुरित्यर्थः'।

प्रापणार्थको णीञ् धातुरपि प्रोपसर्गेण युतस्सन् कथनार्थे प्रयुक्तो दृश्यते—'प्र + √णी(ञ्) [ = प्रापणे] + त > प्रणीतः = उक्त इत्यर्थः'। उदाहृतं च रघुवंशे—

नृपस्य वर्णाश्रमपालनं यत्स एव धर्मो मनुना प्रणीतः।
निर्वासिताप्येवमतस्त्वयाऽहं तपस्विसामान्यमवेक्षणीया ॥[4]

मल्लिनाथेनायं श्लोको व्याख्यातो यत्—'मनुना प्रणीतः = मनुनोक्तः' इति।

इत्थं √ष्ठा < स्था [ = गतिनिवृत्तौ] इति धातुः समुपसर्गसहितो नाशार्थे दृश्यते—'सम् + √ष्ठा < स्था [ = गतिनिवृत्तौ] > सन्तस्थुः = नाशं गता इत्यर्थः'। पठितं च महाभारते—'प्रसह्य तरसा सर्वे सन्तस्थुः कालमोहिताः'[5] इति। व्याकरोति च पद्यमिदं नीलकण्ठभट्टः—'सन्तस्थुः = नाशं गताः। सम्पूर्वस्य तिष्ठतेः समाप्तिवाचित्वात्' इति।

**भावावबोधकाः वस्तुवाचकाश्च शब्दाः**

पुरस्ताद् विमृष्टानामाख्यातपदानां येऽतिरिक्ता अर्थाः प्रतियोग्यनुयोगिरूपाः प्रसूतास्त उपसर्गार्थारोपणेनैव निःसृताः। हरदत्तमिश्रो व्यवस्थापयति यदर्थद्वारक एव शब्दानामन्योन्यमनुयोगो विप्रयोगश्च भवति, यतो हि शब्दे शब्दारोपणेनापि किं सेत्स्यति ? अतो विज्ञायते यदर्थे वृत्तिरस्ति। तथा च पदमञ्जरीकारः—'कथं पुनर्धातौ नामोपसर्गो वर्तेत, शब्दे शब्दासम्भवात् ? अर्थे वृत्तिर्विज्ञायते'[6]। अत्रेदं विचारणीयमस्ति यन्नामपदैरेव वस्तुप्रतिमा प्रत्याय्यते। आख्यातपदैः, निपातपदैः, उपसर्गपदैश्च भावप्रत्ययाः, व्यापारप्रत्ययाः, उत्कर्षापकर्षप्रत्ययाश्च प्रत्याय्यन्ते।

वस्तुतः कस्याश्चिदपि भाषायाः शब्दानां द्विधा विभागः कर्तुं पार्यते—भावावबोधकत्वेन, वस्तुवाचकत्वेन च। भावावबोधकेषु तावद् धातवः, निपाता उपसर्गाश्चान्त-

---

१. रघुवंशम्—५।५८।
२. क्षीरतरङ्गिणी—चुरादिः—३२९।
३. दुर्गासप्तशती—१।४।
४. रघुवंशम्—१४।६७।
५. महाभारतम्—शान्तिप०—२१०।१७।
६. पदमञ्जरी—५।१।११८।

र्भवन्ति, वस्तुवाचकेषु केवलं संज्ञाशब्दाश्चाधिक्रियन्ते। अतो भावावबोधकाः शब्दा भूयांसः, वस्तुवाचकास्त्वल्पीयांस एव। भावावबोधकाः शब्दा वस्तुसत्तया सह न संवदन्ते, अतस्ते सूक्ष्मार्थाः, अथ च वैतसीवृत्तियुता भवन्ति। वस्तुवाचकाः शब्दास्तु स्थूलार्थमूर्त्या सह संवदन्त एव, अतस्ते स्थूलार्थाः, अथ च रूढार्था अपि भवन्ति। अत एव भावावबोधकानां शब्दानामर्थास्तेषां सूक्ष्मत्वाद् हैयङ्गवीनत्वाच्च क्वचिद्धीयन्ते, क्वचिदुपचीयन्ते, क्वचिच्चान्वीयन्ते। यतो ह्येतेषां शब्दानां संवादिका काचिद् वस्तुमूर्तिर्बहिर्नावतिष्ठते। वस्तुसत्ताबोधकानां शब्दानां तु संवादिका स्थूलार्थप्रतिमाऽस्त्येव, अतस्तेषामर्थानां हानम्, उपचयनम्, अन्वयश्च तथाऽऽशु न सङ्घटते, यथा भावावबोधकानां शब्दानाम्। बहिःसत्तया तेषामर्थपरिवर्तनं संरोत्स्यते। भावावबोधकानां शब्दानामर्थपरिवर्तनं त्वाशु सङ्घटते, यतो हि नास्ति तस्य संरोधिका काचित् स्थूलसत्ता बहिः। एकस्य विषयस्त्वान्तरो भावसम्मर्दः, अपरस्य पदार्थसम्मर्द इति।

अत्रावधेयमस्ति यद् वस्तुबोधकाः शब्दास्तैरनुबिद्धा भवन्ति, अतस्त उद्देश्यदले रूढिकोटौ वान्तर्भवन्ति। भावावबोधकास्तु शब्दा भावप्रत्ययप्रत्यायका भवन्ति, अतस्ते विधेयदले गण्यन्ते। एभिर्भावप्रत्ययसंवाहकैः—आख्यात-उपसर्ग-निपातपदैरेव वस्तुप्रत्ययवाहकानां शब्दानामुद्भवः प्रसवो वाऽङ्गीकर्तव्यः। यतो ह्युर्वरतायाः खनिभूता एते। वस्तुतस्तु 'धातवोऽनेकार्था भवन्ति' इति सिद्धान्तोऽपि तेषां व्यापारवाचकत्वात्, भावप्रत्ययवाहकत्वाच्च स्वीक्रियते, तद्वदेव निपातोपसर्गा अपि। अत एव माधवभट्टेनोक्तं यत्—'येन हेतुना धातवोऽनेकार्था भवन्ति, तेनैव हेतुना निपातोपसर्गा अपि। तथा च श्लोकः—

निपाता उपसर्गाश्च दृश्यन्ते केन हेतुना।
बहुष्वर्थेषु येष्वेते दृश्यन्त उपमादिषु॥
बहुष्वर्थेषु धातूनां वृत्तौ यत्कारणं भवेत्।
तदेवात्रापि भवति सा च शक्तिरिति स्थितिः॥[१]

अनेन माधवभट्टश्लोकेन निष्कृष्यते यद् या शक्तिर्धातुष्वपोहति, तदेव निपातोपसर्गेष्वपि। अन्यथा रूपप्रतिमाणां सङ्घटने प्रसवने वाऽऽख्यातोपसर्गनिपाताः समानरूपेणाधिकृता न भवेयुरिति। अतोऽर्थशक्त्या सधर्मिका एते। बरोमहोदयोऽपि साधु वक्ति यत्—'निपातोपसर्गाख्यातानामनेकार्थत्वाद् बह्वर्थत्वाद् भाषाया अर्थप्रवाहो महोर्मिमान् भवति। न हि स्थूलार्थकैर्नामपदैर्भाषायाः प्रवाहे काचिद् गतिरुत्पद्यते'[२] इति।

---

१. ऋग्वेदानुक्रमणी–३।६।१४–१५।		२. संस्कृत लैंग्वेज–पृ० ६६।

अमीषां सन्दर्भाणां तोलनात्मकेन विमर्शनेन निर्धार्यते यद् उपसर्गशब्दस्य या व्युत्पत्तयः प्रदर्शिताः पुरस्तात्, ताभिरेतन्निष्क्रष्टुं शक्यते यद् उपसर्गो हि नाम स्वतन्त्रार्थविम्बोत्पादनम्, अथवा नियतार्थरूपप्रतिमातिरिक्तप्रतिमाप्रसवनम्, आहोस्विद् आख्यातबोध्यव्यापारातिरिक्तप्रतियोगिव्यापाराविष्करणम्, अनुयोगिव्यापाराविष्करणं च। एतदेव ह्युपसर्गाणामुपसर्जनत्वम्। अत एव हि स्कन्दस्वामिनोक्तम् ऋग्वेदभाष्ये—**'उपसर्गः=दानकालः, उपसृज्यते यस्मिन् स उपसर्ग[1]:'** इति। अत्रैकस्मिन् पृष्ठे √डी (ङ्) [=विहायसा गतौ] इति धातोरुपसर्गयोगेन प्रसूताः काचन चित्रात्मिका रूपप्रतिमा अर्थप्रतिमाश्च प्रदर्श्यन्ते। कथमेकेन धातुना सह विविधोपसर्गसंश्लेषणेनापरिमितोऽर्थराशिर्विवर्तत इत्यस्य प्रसङ्गोपात्तान्युदाहरणान्यत्र द्रष्टव्यानि।

**ऐतिहासिकसंस्रव उपसर्गसङ्ख्यायामुपचयापचयश्च**

भारतीयवाङ्मयस्याद्यो महीयान् ग्रन्थ ऋग्वेद एव। ज्ञानमयस्य तस्य सर्वविधाः प्रभावा अर्वाक्कालिकवाङ्मये सञ्जाताः। पदविज्ञाननिर्द्धारकाः, धातुप्रत्ययोपसर्गनिपातादीनां निश्चायकाश्च सिद्धान्तास्तत एव प्रामाण्यमर्हन्तीति। वस्तुतो यावन्त्यो ज्ञानशाखाः समस्ते भारतीयवाङ्मये समुल्लसन्ति, तासां सर्वासां प्ररोहस्तु ऋग्वेद एवोपलभ्यते। सर्वविधानां भाषाशास्त्रीयाणां सिद्धान्तानामपि कृते ऋग्वेदो रत्नाकरायते। अत्रोपसर्गाणां प्रयोगविषये, सिद्धान्तविषये, संख्याविषये च चर्चा तत एवारभ्यते। प्रथममत्रेदमवधारणीयं वर्तते यद् वैदिकभाषायाम् उपसर्गाणां काचिद् इयत्तया संख्यासीमा निर्धारिता नावलोक्यते। विधेयदले यत्र यत्रार्थातिशयोऽपेक्ष्यते तत्र निपातकक्षात आहृत्य शब्दाः संयोज्यन्ते, अर्थाद् अर्थभूयस्त्वाय, नूतनशब्दप्रतिमासङ्घटनाय, आख्यातैरभिहितार्थातिरिक्तप्रतियोग्यनुयोग्यर्थाविष्करणाय च निपातभूता एव शब्दा मन्त्रेषु संयोज्यन्ते, वाक्यार्थनिर्णयाय च क्रियया सहान्वीयन्ते। पञ्चविधनिरुक्तलक्षणनिर्वचनप्रसङ्गे शाब्दिकैः **'धातोस्तदर्थातिशयेन योगः'** इति सिद्धान्तः स्वीक्रियत एव। तथा चोक्तं निरुक्तलघुविवृतौ—

**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्[2]॥**

अर्थाद् धातोरभिहितात् प्रसिद्धादर्थादर्थान्तरोऽतिशयार्थविवक्षायामुपसर्गयोगैरेवावाप्यते। अत एव जिनेन्द्रबुद्धिनोक्तम्—'अर्थातिशयः=अर्थविशेषः। प्रसिद्धादर्थादर्थान्तरम्, तेन धातोर्योगः=सम्बन्धः'[3] इति। एतादृशा आहृत्याहृत्याख्यातैः सह

१. ऋ० सं० १।१२१।४—स्कन्दभाष्यम्।
२. निरुक्तलघुविवृतिः—पृ० १०७। ३. न्यासः—६।३।१०९।

मिथुनीकृताः शब्दा एवोपसर्गसंज्ञया निगदिताः। वैदिकवाङ्मये उपसर्गसंख्यासीमानिर्धारणे महदन्तरायभूताऽर्थातिशययोगजिघृक्षैव। अत्रावस्तात् केचनैतादृशाः **'उपसर्गाः क्रियायोगे'** इति परिभाषाऽनुविद्धा अनुस्यूताश्च वैदिकोपसर्गाः प्रस्तूयन्ते, येषां प्रयोगा निरुक्तादनु स्थगितप्रायाः, किन्तु वैदिकसाहित्ये तु ते उपसर्गत्वेनामृष्टा व्याख्यातृभिर्व्याख्याताश्च।

(क) अपाक् [=अधोगमनार्थे]।

'एवैवापागपरे सन्तु दूढ्यो[1]....'। अस्मिन् मन्त्रे 'अपाक्' शब्द उपसर्गरूपेण प्रयुक्तः। व्याख्याति च सायणाचार्यः—'अपरे अपाक् सन्तु=अधोगन्तारो भवन्तु' इति। 'अपाक्+√अस [=भुवि]>अपाक् सन्तु=अधोगन्तारो भवन्त्वित्यर्थः।

(ख) अरम् [=वारणार्थे]।

अयम् 'अरम्' शब्दो वैदिकमन्त्रेषु बहुत्रोपसर्गरूपेण प्रयुक्तोऽवलोक्यते। तथा च मन्त्रः—'हविष्मन्तो अरंकृतः[2]' इति। व्याख्याति च सायणाचार्यो मन्त्रममुम्—'अरंकृतः=अलंकुर्वन्तीत्यरंकृतः'। परवर्तिकालिके संस्कृतसाहित्ये तु 'अलम्' इति निपातो व्यवह्रियते, किन्त्वस्य मौलिकं स्वरूपं तु 'अरम्' इति रेफयुक्तमेवोपलभ्यते। तथा हि—अरम्+√कृ [=करणे]>अरंकृतः>अलङ्कृतः=भूषित इत्यर्थः। दृश्यते च वैदिकरेफध्वनेर्लौकिकसंस्कृतभाषायां लत्वम् 'र्>ल्, यथा—रघुः[3]>लघुः, रघ्वी[4]>लघ्वी' चेति।

(ग) अर्वाक् [=अभिमुखार्थे]।

'अर्वाक्' शब्दोऽपि वैदिकमन्त्रेषूपसर्गवदेव प्रयुक्तोऽवलोक्यते। तथा चाथर्ववेदे—'अर्वाङेहि सोमकामं त्वाहुरयं सुतस्तस्य पिबा मदाय[5]' इति। मन्त्रमिमं विवृण्वनाह सायणाचार्यः—अर्वाङ् एहि=अस्मदभिमुखः सन् आगच्छ इति। विशेषतो√गम्, √भू, √पत्, √कृ—प्रभृतिभिर्धातुभिः सहास्योपसर्गता दृश्यते।

(घ) आशु [=शीघ्रार्थे]।

शीघ्रार्थकः 'आशु' शब्दोऽपि वैदिकसाहित्य उपसर्गवद् व्यवह्रियमाणोऽवलोक्यते। यथा—'आयोर्ददाशुर्वाजेभिराशुषाणाः[6]' इति। वैदिकमन्त्रोऽयं विवृण्वताऽऽचार्यसायणेनोक्तम् यत्—'आशुषाणाः—आशु=शीघ्रं संभक्तारः। आशुशब्दोपपदात् सनतेः कर्मणि अण्' इति। व्युत्पत्त्याऽपि—'आशु+√षण [=संभक्तौ]>आशुषाणाः=शीघ्रं संभक्तारः' इत्यर्थः। एवमेव-√आप्[7] [=व्याप्तौ], √त्रै (ङ्) [=पालने][8]·

---

१. ऋ० सं–१०।४५।७। २. तदेव–१।१४।५। ३. तदेव–१०।४९।२।
४. तदेव–६।६३।९। ५. अथर्ववेदः–२०।९।२। ६. ऋ० सं०–१।१४७।१।
७. तै० आ०–१।९।३८। ८. ऋ० सं०–८।६३।५।

प्रभृतिभिरपि धातुभिः सह 'आशु' शब्द उपसर्गत्वेन प्रयुक्तः। तैत्तिरीयसंहिताव्याख्यात्रा भट्टभास्करेण स्पष्टमस्योपसर्गतोद्घोषिता। स वक्ति यत्—'आशूपसर्गस्य अक्षरयोः स्थानविनिमयः'[1] इति।

(ङ) कुवित् [=बह्वर्थे]।

'कुवित्' शब्दोऽपि वैदिकभाषायामुपसर्गत्वेनासकृद् व्यवहृतः। तथा च प्रयोगः '....मन्त्रं वोचेम कुविदस्य वेदत्'[2]। व्याख्याति च सायणाचार्यः—'कुविद्वेदत् = बहुलं जानातु' इति। अस्य 'कुवित्' पदस्य प्रयोगोऽपि प्रायेण--√विद् [=ज्ञाने], √गम् [=गतौ[3]], √कृ [=करणे[4]]—प्रभृतिभिर्धातुभिरुपलभ्यते।

(च) ज्योक् [=चिरार्थे]।

'ज्योक्' शब्दश्चिरपर्यायः सन् वैदिकसंहितासूपसर्गत्वेन व्यवहृतः। तथाहि मन्त्रः—'....ज्योगभूवन्ननुधूपितासो हत्वी तेषामाभरा नो वसूनि[5]' इति। व्याकरोति चामुं मन्त्रं सायणाचार्यः—'ज्योगभूवन् = चिरकालं सञ्जातम्' इति। अस्यापि प्रयोगः प्रायेण—√जीव[6] [=प्राणधारणे], √भू [=सत्तायाम्]-प्रभृतिभिर्धातुभिः कृतः।

(छ) न [=अतिशयार्थे]।

नशब्दोऽयमृगवेदेऽतिशयार्थे प्रयुक्तोऽवलोक्यते। तथा हि मन्त्रः—'देवो भुवन्नवेदा म ऋतानां नमो जगृभ्वाँ अभि यज्जुजोषत्'[7] इति। मन्त्रोऽयं व्याकुर्वता सायणाचार्येणोक्तं यत्—'न वेदाः =अतिशयेन ज्ञाता भुवत् = भवेत्। अत्र निपातस्थो नकारोऽतिशयवाची' इति। व्युत्पत्त्याऽपि—न + √विद्[8] [=ज्ञाने] > नवेदाः =अतिशयेन ज्ञाता इत्यर्थो निःसरति। अत्र नशब्दस्य प्रयोग उपसर्गरूपेणैव कृतः।

(ज) पुरुः [=बह्वर्थे]।

'पुरुः' इति निपातो वैदिकसाहित्ये बहुत्रोपसर्गरूपेण विमृष्टः। तथा च ऋग्वेदे—'क्व त्या वल्गू पुरुहूताद्य दूतो न स्तोमोऽविदन्नभस्वान्' इति। मन्त्रोऽयं व्याख्यायते स्कन्दस्वामिना—'पुरुहूताः = बहुभिराहूताः' इति। अत्रोपसर्गत्वेन व्याख्यातः स्कन्दस्वामिना पुरुशब्दः। दशपाद्युणादिवृत्तिकारेणापि 'पुरुरवा' शब्दव्याख्यानावसर उक्तं यत्—'पुरुरवा इत्ययं शब्दो निपात्यतेऽसि प्रत्यये। पुरुशब्दपूर्वः √रु [=शब्दे] इति धातुना सह पुरुशब्दस्य दीर्घत्वं निपात्यते। पुरुरूयते स्वयशः सर्वत्रेति पुरूरवाः =

---

१. तै० सं०–१।३।६।
२. ऋ० सं०–२।३५।२।
३. अथर्वसं०–२०।२४।४।
४. शतपथब्रा०–८।१।७।१२।
५. ऋ० सं०–२।३१।१०।
६. ऋ० सं०–१०।३७।७, शतपथब्रा०–१।८।३।१६।
७. ऋ० सं०–४।२३।४।
८. तदेव–६।६३।१।

राजा'[१] इति। अस्य 'पुरुः' इत्युपसर्गस्यापि प्रयोगः प्रायेण—√रु [=शब्दे], √स्तु [=स्तुतौ][२], √ह्वे (ञ्)[३] [=स्पर्धायां शब्दे च], √कृ [=करणे]—प्रभृतिधातुभिः कृतः।

(झ) पुरस् [=अग्रगमनार्थे, सत्कारार्थे च]।

'पुरस्' इत्ययं शब्दः संस्कृतवाङ्मय उपसर्गत्वेन भृशं प्रयुक्तो व्याख्यातश्च। प्रायेणायं शब्दः 'तिरस्' इत्युपसर्गसापेक्षः। वैदिकलौकिकोभयसाहित्ये समानरूपेणाय-मुपसर्गतया व्यवहृतः। तथा च तैत्तिरीयसंहितायाम्—'श्रद्देवा अदधतागच्छत्पुरोधां य एवं विद्वाँन्'[४] इति। मन्त्रोऽयं व्याचक्षाणेन भट्टभास्करेणोक्तं यत्—'पुरश्शब्दस्य उपसर्गवद्भावाद् 'आतश्चोपसर्गे' इत्यङ्' इति। 'पुरस्' इत्युपसर्गोऽयं भारोपीयार्य-भाषोपसर्गेणापि संवदन् सन् प्रायेण—√कृ [=करणे], √गम् [=गतौ], √धा [=धारणपोषणयोः], √नी>णी [=प्रापणे]=प्रभृतिभिर्धातुभिः सहोपसर्गतयैव प्रयुक्तः। पालि-प्राकृत-अपभ्रंशभाषास्वप्यस्य विकासोऽवलोकनीयः। तोलनीयं च—'पुरस्>प्रा० पुरो[५]>पा० पुलो[६]>अवे० परो[७]>ग्री० प्लपोस्[८]=अग्रतः' इत्यर्थः।

(ञ) फूत् [=तीव्रवायुशब्दानुकरणार्थे]।

'फूत्' इति शब्दः √कृ [करणे] इति धातुना सहोपसर्गतया व्यवहृतः। तथा च श्रीमद्भागवते—'ववौ वायुः सुदुःस्पर्शः फूत्कारानीरयन्मुहुः'[९] इति। व्याकरोति च श्लोकमिमं श्रीधराचार्यः—'फूत्कारानिति=तीव्रवायुशब्दानुकरणम्। फूदिति निपातः' इति। इत्थम्—'फूत्+√कृ [=करणे]>फूत्कारः>हिन्दी-फुफुकार' इति।

(ट) मा [निषेधे, अङ्गीकारे च]।

'मा' इति शब्दो यद्यपि निपातस्तथापि बहुत्रास्य व्यवहारः क्रियानुषङ्गतयो-पलभ्यते। लुङ्-लङ्लकारयोरडागमं निषेधयति, तेनापि सिद्ध्यति यदयं वैदिकभाषाया-मुपसर्गतयाऽपि प्रयुज्यमान आसीत्। तथा च ऋग्वेदे—'इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतत्'[१०] इति। व्याक्रियते च मन्त्रोऽयं स्कन्दस्वामिना—'मा गात्=मा प्रापत्। अत्र मा शब्दः क्रिययाऽनुषक्तव्यः' इति, अर्थात् क्रियासाकाङ्क्षस्सन् उपसर्गतयाऽस्य व्यवहारः।

---

१. दशपाद्युणादिवृत्तिः–९।९२।
२. ऋ० सं०–१।११।४–स्कन्दभाष्यम्।
३. तदेव–६।६३।१।
४. तै० सं०–७।४।१—भट्टभास्करभाष्यम्।
५. कर्पूरमञ्जरी–४।१९, कुमारपालचरितम्–१।८७।
६. भविस्सयत्तकहा–संधिः–५।
७. अवेस्ता–पृ० २३।
८. कम्पैरैटिव ग्रामर आफ दि संस्कृत ग्रीक एण्ड लैटिन–पृ० ८१।
९. श्रीमद्भागवतम्–३।१७।५।
१०. ऋ० सं०–१०।१८।४–स्कन्दस्वामिभाष्यम्।

(ठ) वृथक् [ = पृथगर्थे ]।

'वृथक्' इति निपातो वैदिकसाहित्ये यदा कदोपसर्गरूपेणापि परामृष्टः। तथा च ऋग्वेदे—'यतन्ते वृथगग्नयः'[1] इति। सायणाचार्येण व्याख्यातोऽयं मन्त्रः–'अन्तरिक्षे वृथग्यतन्ते = पृथग्गच्छन्ति' इत्यर्थः। एवम्—वृथग् + √यत [ = निकारोपस्कारयोः] > वृथग्यतन्ते = पृथग्गच्छन्तीत्यर्थः'। मन्ये यद् 'वृथा' इति निपातस्य मूलस्तु 'वृथक्' इत्येवास्ति। एतदप्यनुमन्तुं प्रभवामो यत् 'पृथक्' इति निपातस्यापि विकासः, वृथक् इत्यनेनैव सञ्जात इति—'वृथक् > पृथक् = पार्थक्ये' इति।

(ड) वषट् [ = देवहविर्दाने ]।

'वषट्' निपातोऽपि संस्कृतसाहित्ये प्रायः—√कृ [ = करणे]—धातुनोपसर्गतया पुरस्कृतः। अस्य प्रयोगस्तु देवानां हविःप्रदानार्थमेव वैदिकलौकिकोभयभाषायां कृतो वर्तते। तथा चानर्घराघवनाटके—

पश्यैते पशुबन्धवेदिवलयैरौदुम्बरीदन्तुरै-
र्नित्यव्यञ्जितगृह्यतन्त्रविधयो रम्या गृहस्थाश्रमाः।
यत्रामी गृहमेधिनः प्रचलितस्वाराज्यसिंहासना
वैतानेषु कृपीटयोनिषु पुरोडाशं वषट्कुर्वते॥[2] इति।

व्याख्यातश्च श्लोकोऽयं रुचिपत्युपाध्यायेन—'वषट्कुर्वते = जुह्वतीत्यर्थः। तदुक्तम्—'स्वाहा देवहविर्दाने श्रौषड् वौषट् स्वधा' इति। मन्ये यत् केवलं देवकर्तृक-हविःप्रदानार्थत्वादेवास्योपसर्गेषु परिसंख्यानं न कृतमर्वाक्कालिकैराचार्यैः।

(ढ) शू [ = अव्यक्तवाचि ]।

'शू' इत्यव्यक्तानुकरणार्थकस्य निपातस्यापि—√कृ [ = करणे] इति धातुना सहोपसर्गरूपेण प्रयोगोऽवलोक्यत ऋग्वेदे। तथा चोदाहरणम्—**'यत्त सादे महसा शूकृतस्य पार्ष्ण्या वा कशया वा तुतोद'**[3] इति। मन्त्रोऽयं व्याकुर्वता सायणाचार्येणोक्तं यत्—'शूकृतस्य = शूत्कारं कुर्वतः। शब्दानुकरणार्थेऽत्रोपसर्गः' इति। अस्य मौलिकं रूपन्तु 'शूत्' इत्यस्ति। एवम्—'शूत् > शू + √कृ > शूत्करोति > शूकरोति = शू शू इत्यव्यक्तं शब्दं करोतीत्यर्थः'। अस्यापि व्यवहारः प्रायेण √कृ [ = करणे] इति धातुनैवोपलभ्यते।

(ण) सना [चिरार्थे]।

'सना' इति निपातोऽपि क्वचित् √श्रु [ = श्रवणे]—इति धातुनोपसर्गरूपेण स्वीकृतो वैदिकसाहित्ये। तथा च मन्त्रः—'आ तिष्ठति मघवा सनश्रुत इन्द्रो वाजस्य दीर्घश्रवसस्पति'[4] इति। सायणाचार्येणास्योपसर्गता स्वीकृता—'सनश्रुतः = चिर-

---

१. ऋ० सं०–८।३४।४।
२. अनर्घराघवम्–२।१७,३।११।
३. ऋ० सं०–१।१६२।१७।
४. ऋ० सं०–१०।२४।३।

प्रख्यातः' इति । उपसर्गरूपेण 'सना' इत्यस्य संवादोऽपि दृश्यते प्राचीनभारोपीयाभिभाषाभिः[1] । तद्यथा—'सना > लै०सेने > सेनिआ > लिथु० सेनास् > गोथि० सिनिस्' इति।

(त) सीत् [ =उच्चशब्दनिर्घोषे] ।

'सीत्' इत्यव्यक्तानुकरणार्थको निपातः √कृ [=करणे] इति धातुनोपसर्गतयोपयुज्यते । व्याख्यातं च सहजकीर्तिना—**'मन्द्रा मध्यास्तथा ताराः सप्रणादस्तु सीत्कृतम्'**[2] इति । अमरकीर्तिना तु कन्दर्पभोगप्रस्तावेऽस्य √कृ-धातुनोपसर्गता स्वीकृता । तथा च व्युत्पत्तिः—'सीत् + √कृ [ =करणे] सीत्कृतम् = सप्रणादः शब्दं कृतम्'[3] इति ।

(थ) हुरुक् [ =कुटिलार्थे] ।

'हुरुक्' इति निपातः कुटिलार्थकः । अस्योपसर्गरूपेण प्रयोगस्तु—√यत [ =निकारोपस्कारयोः] इति धातुना दृश्यते । तथा च श्रुतिमन्त्रे—**'महाँ अदब्धो वरुणो हुरुग्यते'**[4] इति । मन्त्रोऽयं विशदीकृतः सायणाचार्येण—'हुरुग्यते = कुटिलं गच्छते = इतस्ततः परिचरत इत्यर्थः' इति ।

एवं वैदिकानां विशेषतो वैदिकभाषायामेव विमृश्यमाणानामथ च वैदिकमन्त्रेष्वेव लब्धप्रयोगवतां केचनोपसर्गाणां व्यवहारा अत्रोपलक्षणतयोदाहृताः । वस्तुतो वैदिकभाषा कामं पदानां प्रयोगदृष्ट्याऽतिचित्रात्मिका दृश्यते । अभीमिश्चित्रात्मकप्रयोगैरेतदपि सिद्धान्तितुं शक्यते यत् तदानीं नूनमियं लोकभाषाऽऽसीदिति । पदानां यादृश ऊर्जस्वलो व्यवहारोऽवलोक्यते संहितासु, न तादृशा व्यवहारा दृश्यन्ते परवर्तिसाहित्ये । उपरि चर्चितास्तदतिरिक्ताश्चोपसर्गा यास्कमनु पाणिनिगोष्पदायमाणे तन्त्रेऽसुलभप्रयोगाः संवृत्ताः । मन्ये यदस्य मुख्यो हेतुर्द्योतकतावादस्य मिथ्याऽवैज्ञानिकश्च प्रचार एवासीत् ।

निपातोपसर्गाणां द्योतकतावादस्य सिद्धान्तमवलम्ब्य संक्षेपरुचिभिर्वैयाकरणैराकारेषु लघुरूपा अथ चाविस्पष्टार्थाः केचनैव निपाता उपसर्गत्वेनामृष्टाः । ये निपाताः सुस्पष्टार्था अथ च दीर्घाकारवन्तो वैदिकसाहित्य उपसर्गतया प्रयुज्यमानाश्चासन्, कामं ते द्योतकतावादाग्रहग्रस्तमानसैः शाब्दिकैरुपसर्गकक्षातो न्यक्कृताः । अन्यथा को हेतुरस्ति विंशतिर्द्वाविंशतिर्वोपसर्गाणां सङ्ख्यानिर्धारणे ? अत एव हर्षकीर्तिसूरिणोक्तं यत्—'शाब्दिकैः केचनैवोपसर्गाः परिसंख्याताः । विशेषास्तु कविरूढितः = भाषातत्त्वमर्मज्ञैः कविभिर्विरचितामिताक्षरात्मके मिताक्षरात्मके च वाङ्मये विज्ञेयाः । तथा च हर्षकीर्तिसूरिः—

---

१. ए संस्कृत इंग्लिश डिक्शनरी—पृ० ११४१ । २. सिद्धशब्दार्णवः—२५४—५५ ।
३. धनञ्जयनाममाला—१०६ ।
४. ऋ० सं०—९।७७।५—सायणभाष्यम् ।

**उपसर्गस्य संयोगाद्धिन्नभिन्नार्थवाचिता ।**
**धातूनां याऽभवत्सा तु विज्ञेया कविरूढितः**[१]॥ इति ।

भोजव्याकरणकारोऽपि वक्ति यन्निपातोपसर्गा अनन्ता एव—

**निपातगणतो ग्राह्या निपाता अपरेऽपि च ।**
**अव्ययान्यपराण्येव ग्राह्याण्यव्ययकामतः**[२]॥

अपभ्रंशकाव्यत्रयीकारेणाप्युक्तं यत्—वाचस्पतेरपि मतिः तत्तद्देशिकभाषासु सुलभप्रयोगवतां शब्दानामियत्तया परिसंख्याने न प्रभवति । तथा च श्लोकः—

**वाचस्पतेरपि मतिर्न प्रभवति दिव्ययुगसहस्रेण ।**
**देशेषु ये प्रसिद्धास्तान् शब्दान् सर्वतः समुच्चेतुम्**[३]॥

अत एव निपातसंख्याविषये बृहद्देवतायामुक्तं यत्—निपातानाम् इयन्ता, इदन्ता वा न विद्यते । प्रयोजनवशात् = प्रयोगवशादेतेषामुपचयापचयो भवति—

**इयन्त इति संख्यानं निपातानां न विद्यते ।**
**प्रयोजनवशा ह्येते निपात्यन्ते पदे पदे**[४]॥

बृहद्देवताश्लोकेऽस्मिन् प्रयोजनशब्देनेदमेव निष्कृष्यते यत् कविभिर्यानि शब्दरत्नान्याह्रियन्ते वाङ्मयार्णवात् स्वोद्देश्यलिप्सया, किं तान्येव शब्दरत्नानीयत्तया निश्चेतुं शक्यन्ते ? अतो हेतुनोव्वटाचार्येणोक्तं यत्—**'अथ विंशतिरुपसर्गाः क्रियाविशेषकरा इति सामान्यतोऽर्थः, विशेषार्थास्त्वनन्ता एव**[५]' इति ।

एभिरुद्धरणैर्निष्कृष्यते यदुपसर्गाणां खनिभूतास्तु निपाता एव। तत एव कविभिः प्रयोक्तृभिश्च निःसीमार्थदिदित्सयोपसर्गा आह्रियन्ते । तदाहरणं तु प्रयोजनाधीनम् । यावद् यस्य कवेः प्रयोजनं भवति, तदनुसार्य्येव तेन शब्दा आह्रियन्त इति । शब्दार्णवस्त्वनन्त एव भवति । अस्मादेव महामतिना पाणिनिनाऽपि **'प्राग्रीश्वरान्निपाताः'**[६] इत्यतोऽधिकृत्य **'अधिरीश्वरे'**[७] इति सूत्रयोरभ्यन्तरमेवोपसर्गा अप्यन्तर्भाविताः । **'प्रादयः'**[८] इति सूत्रं कुर्वताऽपि 'आदयः' इति पदेन तस्यायमेव सङ्केतो यन्निपातकक्षात एवोपसर्गा ग्राह्या भवितुमर्हन्तीति ।

**केचन प्राचीनभारोपीयभाषोपसर्गाः**

वैदिकभाषाया गवेषणप्रसङ्गे केचनैतादृशा अप्युपसर्गा दृष्टिपथमायाताः, येषां सङ्कलनमाचार्यपाणिनिमनु निपाताव्ययेष्वेव दृश्यते । भारतीयवाङ्मयस्यानुसन्धानेनेदमपि कथितुं शक्यते यदुत्तरोत्तरमुपसर्गाणां सङ्ख्या तनुतरायते कृशायते वा ।

---

१. सारस्वतीयो धातुपाठः—दि डिस्क्रिप्टिव कैटेलाग आफ संस्कृत मैन्यु० इन आडयार-लाइब्रेरी—पृ० २६० । २. विजयसागरकृतभोजव्याकरणम्—निपातप्रकरणम्—५ ।
३. अपभ्रंशकाव्यत्रयी—भूमिका—पृ० ९४ । ४. बृहद्देवता—२।९५ ।
५. शुक्लयजुर्वेदस्योव्वटकृता प्रस्तावना । ६. अष्टाध्यायी—१।४।५६ ।
७. अष्टाध्यायी—१।४।९७ । ८. अष्टाध्यायी—१।४।५८ ।

वैदिकोत्तरसाहित्ये निपातोपसर्गाणां चिन्तनमर्थनिर्द्धारणं च पदविज्ञानदृष्ट्या नावलोक्यते, अपि तु द्योतकत्व-वाचकत्वदृशा ते विमृष्टाः। पदविज्ञानस्यायमेवाग्रहो यत् सर्वविधाः शब्दाः स्वायत्तार्थकाः, स्वतन्त्रप्रयोगार्हाश्च भवन्ति, किन्तु द्योतकतावादेन तु निपातोपसर्गाः पदपूरकत्वेन, रिक्तार्थकत्वेन, अनर्थकत्वेन चालोच्यन्ते। मन्ये यद् वैदिकवाङ्मयमनु पदविज्ञानसम्मतस्य भाषाशास्त्रानुमोदितस्य च सिद्धान्तस्य तिरस्कारोऽभूत्, येन पदद्योतकतावादस्य प्रचारोऽनुदिनमिवावलोक्यते। अत एव वैदिकभाषोपसर्गाः शाब्दिकैर्निपातत्वेन व्याकृताः।

अत्रेदमपि विचारणीयमस्ति यत् केषाञ्चन वैदिकभाषोपसर्गाणां संवादोऽपि प्राचीनभारोपीयार्य–ग्रीक–लैटिन–अवेस्ता–प्राचीनफारसी–गोथिक–लिथुयानी–भाषो – पसर्गैर्द्रष्टुं शक्यते। ध्वनीनामुच्चारणदृष्ट्याऽर्थदृष्ट्या चैष संवादो न केवलं सांयोगिकः, अपि त्वार्यजातेः कौटुम्बिकसन्निकर्षमूलकोऽथ चैकभाषाप्रसारमूलकश्च प्रतिभाति।

एवं कतिपयानां भारोपीयार्यभाषोपसर्गाणां विमर्शनमत्र कृतम्। प्राचीन-भारोपीयार्यभाषास्वेषामुपसर्गाणां संवादो न केवलं घुणाक्षरन्यायमूलकः, प्रत्युत भाषाप्रसारमूलकः, संस्कृतिमूलकः, कौटुम्बिकसामीप्यमूलकश्चास्ति। आसीत् कदाचित् पुरा स समयः, यस्मिन् समस्ताऽऽर्यजातिरेकस्मिन्नेव कौटुम्बिकसंस्कारसूत्रे प्रतिबद्धाऽऽसीत्। तस्याश्चिन्तनप्रवाहस्य, भाषागतसौन्दर्यविधायकतत्त्वस्य, दार्शनिक-विश्लेषणवीजस्य, अङ्कविद्याया अन्वेषणस्य च विकासः कस्मिंश्चिदेकस्मिन् भूमिभागे समृद्धि प्राप। तदनन्तरं सा जातिः पृथक् पृथङ् निकायरूपेण क्रमशः समस्तां वसुधां व्याप्नोत्, किन्तु तस्या यानि भाषा-संस्कृति-दर्शनविज्ञानमूलकसंश्लेषसूत्राण्यासन्, कामं तानि तद्वन्न विश्लिष्टतां प्राप्तानि, यथा भूभागस्य विश्लेषोऽभूत्। अत एव भाषागत-सम्बन्धः संवादश्चाधुनापि येन केन प्रकारेण संरक्षितः संपोषितश्च वर्तते।

यदि कश्चिच्छब्द उपसर्गरूपेणार्वाक्कालिकसंस्कृतभाषायां न व्यवह्रियते, किन्तु, अवेस्ता-फारसी-ग्रीक-लैटिन-गाथिक-प्रभृतिभाषासूपसर्गत्वेन तस्मिन्नेव ध्वनावर्थेषु च स व्यवह्रियमाणो दृश्यते, तदेदं स्वाभाविकमस्ति यत्तस्य सङ्कलनं निर्धारणं चोपसर्गतयैव भवेत्। तोलनात्मकभाषाशास्त्रस्याप्ययमेवाग्रहः। अत एव महामति-पतञ्जलिनाऽपि सङ्केतितं यत्—'उपलब्धौ यत्नः क्रियताम्। महान् शब्दस्य प्रयोग-विषयः। सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः, साङ्गाः सरहस्या बहुधा भिन्नाः, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाऽथर्वणो वेदः, वाकोवाक्यम्, इतिहासः, पुराणम्, वैद्यकमित्येतावान् शब्दस्य प्रयोग-विषयः। एतावन्त शब्दस्य प्रयोगविषयमननुनिशम्य सन्त्यप्रयुक्ता इति वचनं केवलं साहसमात्रमेव। एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते' इति।

१. महाभाष्यम्—पस्पशाह्निकम्—पृ० ५४।

तद्यथा—शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकारमेनमार्या भाषन्ते 'शव' इति। हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु, गमिमेव त्वार्याः प्रयुञ्जते। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु' इति। एतेन महाभाष्यनिर्देशेनैतत् सिद्ध्यति यत् कदाचिदार्य-जातेर्निकायरूपेण महाभिनिष्क्रमणमभूदितस्ततः। अत एव प्राचीनभारोपीयासु भाषासु सगोत्रीयोऽभिलापवन्धोऽवलोक्यते। न हि तत्र कश्चिद् घुणाक्षरन्यायः, सांयोगिको वा पन्था अवलम्बनीय इति।

**वैदिकभाषायां वीप्सामूलका उपसर्गाः**

दृश्यन्ते हि वैदिकसंहितास्वेतादृशा उपसर्गाणां व्यवहाराः, यैस्तेषां स्वतन्त्र-पदसामर्थ्यमथ च स्वतन्त्रार्थसामर्थ्यं क्रियानिराकाङ्क्षत्वेन, नामनिराकाङ्क्षत्वेन चाभिव्यक्तं भवति। ऋग्वेदसंहितायाम् एकस्यैवोपसर्गस्याभ्यासेन वीप्सया प्रयोगा अवलोक्यन्ते। तेऽधस्ताद् उद्ध्रियन्ते—

(क) अधोऽधः [ = नीचैर्नीचैः]।

'अध' इत्युपसर्ग ऋग्वेदे वीप्सया प्रयुक्तः। तथा हि मन्त्रः—'अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका'[1] इति। अस्मिन् मन्त्रेऽधशब्दोऽर्थभूयस्त्वायाभ्यस्तः। यथा—'अध + अध + √शी (ङ्) [ = स्वप्ने] > अधोऽधः शयीत = भूमौ शयीत' इत्यर्थः।

(ख) अपाप [ = उत्कृष्टतयापोहति]।

'अप' इत्युपसर्गस्याप्यभ्यासोऽवलोक्यते ऋग्वेदे—'अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः'[2] इति। अस्मिन् मन्त्रे 'अप' इत्युपसर्गस्याभ्यासोऽत्युत्कृष्टार्थ-रूपे भूयस्त्वार्थे कृतो वर्तते। सायणाचार्यस्याप्ययमेवाशयः। इत्थम्—'अप + अप + √ऊह [ = वितर्के] > अपापोहति = अत्युत्कृष्टतयापोहति' इत्यर्थः।

(ग) अभि + अभि > अभ्यभि [ = पौनःपुन्येन]।

'अभि' इत्युपसर्गस्याभ्यासो वैदिकसाहित्ये वहुत्रोपलभ्यते। यथा—'अभि त्वा गोतमा गिरा जातवेदो विचर्षणे द्युम्नैरभि प्रणोनुमः'[3] इति। ऋग्वेदीयोऽयं मन्त्रो व्याकुर्वता स्कन्दस्वामिनोक्तं यत्—'अभि' इत्युपसर्गः 'प्रणोनुमः' इत्याख्यातेन सम्बध्यते। अभि अभि प्रणोनुमः। यत्र पौनःपुन्येनोपसर्गाभ्यासः, तत्र तत्सम्बन्धिनः क्रियापदस्याप्यभ्यासो द्रष्टव्यः। अभि प्रणोनुमः, अभि प्रणोनुम इति। अभ्यासे भूयांसमर्थं मन्यन्ते। यथा—'अहो दर्शनीयः, अहो दर्शनीयः' इति। एवम्—'अभि + अभि + प्र + √णू < नू [ = स्तवने] > अभ्यभि प्रणोनुमः = सुष्ठु पुनः पुनः अभिष्टुमः' इत्यर्थः। अत्र स्कन्दाचार्यो निर्दिशति यद् उपसर्गाभ्यासादाख्यातस्याप्यभ्यासः कर्तव्योऽर्थभूयस्त्वाय।

---

१. ऋ० सं०–१०।९५।१५। २. ऋ० सं०–५।३४।३।
२. ऋ० सं०–१।७८।१—स्कन्दभाष्यम्।

(घ) आविस् + आविस् > आविराविः [ = अतिप्रकटः]।

'आविस्' इत्ययमुपसर्गो भागवते वीप्सया व्यवहृतो दृश्यते। अभ्यासादतिस्फुटार्थेऽस्य विनियोगः कृतः। तद्यथा—'नमो[1] भगवते नरसिंहाय नमस्तेजस्तेजसे आविराविर्भव'। भागवतीयोऽयं श्लोको विवृण्वता श्रीधराचार्येणोक्तं यद्—'आविराविः= अतिप्रकटो भव। वीप्सा तु अर्थभूयस्त्वाय' इति।

(ङ) परा + परा > परा परा [ = अत्यन्तपरा]।

'परा' इत्युपसर्गस्याप्यभ्यासोऽवलोक्यत ऋग्वेदे। अभ्यासादेव—'परा परा = अत्यन्तदूरवर्तिनी' इत्यर्थो निःसृतः। तथा च मन्त्रः—'मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत्'[2] इति। मन्त्रस्यास्यार्थो विशदयता स्कन्दस्वामिनोक्तं यत्—'परा परा = अत्यन्तपरा। युष्मत्प्रसादादेव दूरवर्तिनीत्यर्थः' इति। उपसर्गाभ्यासेनार्थभूयस्त्वमत्र।

(च) प्र + प्र > प्र प्र [ = सुष्ठु प्रेरणार्थे]।

'प्र' इत्युपसर्गोऽपि वैदिकसाहित्ये वीप्सया प्रयुज्यमानः सन् अत्युत्कृष्टार्थकः सुष्ठुप्रेरणार्थको वोपपन्नः। तथा हि शुक्लयजुर्वेदे—'अन्नपतेऽन्नस्य नो धेह्यनमीवस्य शुष्मिणः। प्र प्र दातारं तारिष[3]' इति। मन्त्रार्थः कुर्वतोव्वटाचार्येण प्रत्यपादि यत्—'प्र प्र दातारं तारिष = महता प्रकर्षेणान्नस्य दातारं प्र प्र तारिष = प्रवर्धय' इति।

पुरस्ताद् वीप्सया प्रयुक्तानामाहोस्विदभ्यस्यप्रयुक्तानां केषाञ्चनोपसर्गाणां निदर्शनानि प्रस्तुतानि। वैदिकभाषायामेवैतादृशा वीप्साप्रयोगाः। न हि दृश्यते पाणिनिमनु वीप्स्यमानव्यवहारा उपसर्गाणाम्। वस्तुत आसीदेका वैदिकशाब्दिकानां परम्परा, यया वाक्येऽतिशयार्थभूयस्त्वमधिगन्तुं पदानामभ्यासपूर्वको व्यवहारः क्रियते स्म। अत एव दुर्गाचार्येणोदघोषि यत्—'इहाभ्यासबाहुल्यं[4] दृष्ट्वा 'रेजति', 'रेजति', 'स्रवेत्', 'स्रवेत्' इति समाधत्ते—'अभ्यासे भूयांसमर्थं मन्यन्ते' इति। शब्दाभ्यासे यत्रान्यो विशेषो नास्ति, तत्रैवं विशेषमाचार्या मन्त्रार्थतत्त्वविदो मन्यन्ते—'यदुतार्थभूयस्त्वमिति। न ह्यकस्मात् स एव शब्दः पुनरभ्यस्यते। लोकेऽपि चैतद् दृष्टम्—शब्दाभ्यासेऽर्थभूयस्त्वमिति। यथा—अहो दर्शनीयः! अहो दर्शनीयः! इति। गुणातिशये हि स्त्रियः शब्दाभ्यासः, तस्मान्मन्त्रेष्वपि तद्वदेवेति न्याय्यम्' इति। अस्याभ्याससिद्धान्तस्य प्रवर्तकोऽभूत् परुच्छेपर्षिः। निरुक्त आचार्ययास्केन[5] तस्य चर्चा गौरवेण

---

१. श्रीमद्भागवतम्–५।१८।७।
२. ऋ० सं०–१।३८।६—स्कन्दभाष्यम्।
३. शुक्लयजुर्वेदः–११।८३।
४. निरुक्तम्–१०।४२—दुर्गव्याख्या।
५. 'तत्परुच्छेपस्य शीलं परुच्छेप ऋषिः, पर्ववच्छेपः, परुषि परुषि शेपोऽस्येति'–(निरु०-१०।४२)।

कृता । एतस्याभ्याससिद्धान्तशास्त्रिण ऋषेः स्वभाव एवासीद् यत्तेन प्रायेण पदान्यभ्यस्य प्रयुज्यन्ते स्म । पदाभ्यसनेन चार्थात्मनो विस्तर एव तस्य हेतुः । अनेनैव यास्काचार्योद्धरणेनैतदपि सिद्ध्यति यद् वैदिकसाहित्ये नामाख्यातोपसर्गनिपातपदानि स्वातन्त्र्येण प्रयुज्यमानान्यासन् ।

न केवलं नाम्नाम्, आख्यातानामपि तूपसर्गनिपातानामपि वाक्येऽर्थभूयस्त्वायाभ्यस्य प्रयोगा दृश्यन्ते । वैदिकवाङ्मय एतादृशो भाषाशास्त्रीयः सिद्धान्तः स्वीकृत आसीत्, येन वाक्यार्थसौष्ठवायार्थात्मनो विस्तराय, भाषाशैल्यास्तीक्ष्णीकरणाय पदलालित्याय च पदानामभ्यासपूर्वकप्रयोगा उपलभ्यन्ते । पाणिनीयव्याकरणेऽपि यङ्प्रक्रियायाम्, यङ्लुगन्तप्रक्रियायाञ्च धातूनामभ्यासोऽर्थभूयस्त्वायैव विधीयते । एतेनेदमपि निष्कृष्यते यन्नोपसर्गाः केवलं क्रियास्कन्दनेन, नामास्कन्दनेन च स्वीयामर्थशक्तिं स्थापितवन्तः, अपि तु ते तयोर्निराकाङ्क्षत्वेनापि स्वार्थप्रकटनसामर्थ्यमुद्घोषितवन्त इति । यदि पदानि सामान्यरूपेणार्थप्रकाशनाक्षमाणि भवेयुः, तर्हि तैरर्थभूयस्त्वाभिधानम्, अर्थात्मनो विस्तरश्च न स्यात् । सामान्यतोऽर्थवन्त एव शब्दा विशेषार्थाभिधानेऽर्थभूयस्त्वप्रकटने च क्षमा भवन्ति । प्रमाणयति चामुमभिप्रायं महामुनिः पतञ्जलिर्महाभाष्ये—'येषामवयवा अर्थवन्तस्तेषां समुदायोऽप्यर्थवान् भवति, येषां चावयवा अनर्थकास्तेषां समुदायोऽप्यनर्थकः' इति ।

एवं सूक्ष्मेक्षिकया गवेषणया प्रतिपादयितुं शक्यते यद् वैदिकसाहित्य उपसर्गा द्रवपदार्थतुल्या अथवा वैतसीवृत्तिमन्त आसन्, येन भाषायां तेषां प्रयोगाः क्वचित् स्वातन्त्र्येण, क्वचित्क्रियाविशेषणत्वेन, क्वचित् क्रियाङ्गत्वेन, क्वचिच्च क्रियानैरपेक्ष्येण दृश्यन्ते । यथा कोऽपि द्रवणशीलपदार्थोऽनायासेनान्यथापरिवर्तितुं शक्यते, तथैवोपसर्गा अपि स्वार्थपारतन्त्र्याद् वाक्यार्थपारवश्याद्वाऽन्यथाऽन्यथा व्यवहृताः । एतेनैतद् वक्तुं न शक्यते यद् द्रवपदार्थस्य कोऽपि स्वार्थ एव न भवति, तथैवोपसर्गस्यापि । एतत्तु तयोरौदार्यमेवास्ति । नास्ति वैदिकवाङ्मय उपसर्गाणां व्यवहारे प्रयोगे वा एतादृशो दृढतराग्रहो येन तेषां क्रियापूर्वभावित्वं साधयितुं शक्यते । वस्तुतो वैज्ञानिकदृष्ट्या, ऐतिहासिकदृष्ट्योपसर्गाणां तोलनम्—शून्येन (०) कर्तुं शक्यते । यतो हि तदेव (शून्यमेव) पूर्णसंख्याभिधानमर्हति । ईशावास्योपनिषद्येष[1] एवार्थः स्वीकृतश्चास्ति । शून्यशब्दस्यार्थस्त्वभावरूपो न मन्तव्यः । शून्यशब्दो व्याचक्षाणेन दुर्गाचार्येणोक्तं यत्—**'ईश्वरभावः परमाणुभाव इति सोपपदत्वात् । शून्यं तर्हि ? तदपि न । यस्माच्छून्यशब्दोऽपि भावशब्दासङ्गदर्शनम् । न ह्यसत्यर्थे शब्दः प्रयुज्यते । शब्दो हि**

---

१. पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ (ईशावा० उ०–१।१)

**शब्दस्यार्थेन सम्बद्धः। किञ्चित्तदस्ति यच्छून्यमिति। लोके हि प्रसिद्धं गृहं शून्यम्, ग्रामः शून्यः, शून्ये शब्दमहत्त्वे इति। तस्मान्न शून्यशब्देनाभाव एवोच्यते, किं तर्हि? अपेक्षाकृतं शून्यत्वमिति[1]।'** एतेन सन्दर्भेणायाति यत् पूर्णसंख्यासामर्थ्यं धारयतोपसर्गेण यत्र यादृश्यपेक्षा भवति, तत्र तादृश्यर्थप्रतिमा निर्मीयत इति।

यथा वामस्थशून्यसंवलिता संख्याऽपरिमितार्थमभिव्यनक्ति, तद्वदुपसर्गसंवलिताख्यातेन चापरिमितार्थोऽभिव्यज्यते। यथा शून्यनिराकाङ्क्षया संख्यया ससीमार्थोऽभिव्यज्यते, तदधिकमभिव्यङ्क्तुं नास्ति सामर्थ्यं सङ्ख्यायाम्, तद्वदेवोपसर्गनिराकाङ्क्षेण नाम्ना, आख्यातेन वा परिमितार्थादधिको नाभिधीयते। संख्योत्तरप्रयुक्तैः शून्यैर्यथा संख्यायां दशगुणोत्तराऽभिवृद्धिः क्रियते, अर्थात् ससीमार्थो निःसीमार्थे प्राप्यते,, तद्वदुपसर्गा अपि नाम्ना, आख्यातेन वा संयुज्यमानाः सन्तः ससीमार्थाभिधायिनमाख्यातं निःसीमार्थाभिधायि कुर्वन्ति। भेदस्तु शून्योपसर्गयोरेष एवास्ति यत् शून्यस्थितिः संख्याया दक्षिणपार्श्वे भवति, उससर्गाणां तु नामाख्यातयोरव्यवस्थिता एव। वस्तुतो भाषाशरीर एतान्युपसर्गनिपातपदानि प्राणस्थानीयानि सन्ति। यथा प्राणान् विहाय किमपि शरीरं जडतामावहति, तथैव प्राणस्थानीयानुपसर्गादीन् विहाय काऽपि भाषा कामं जडतां प्राप्नोतीति।

इत्थं चतुर्थाध्यायस्य प्रथमे विभागे—**'सिद्धान्तप्रत्यभिज्ञानम्'** विमर्शितम्, द्वितीये विभागे तु—**'प्रयोगविज्ञानम्'**—विमर्शयिष्यते।

**उपसर्गाणां प्रयोगविज्ञानम्**

**अन्वयव्यतिरेकाभ्यां प्रकृतेः प्रत्ययस्य च।**
**पृथगर्थपरिज्ञानमिति शाब्दिकनिर्णयः॥**
**उपसर्गेष्वपि तथा भवेदिति विनिश्चयः।**
**तदेतद्धातुसंज्ञायां स्पष्टमाह पतञ्जलिः॥**
**तिलमात्रे भिद्यमाने पुनश्चाधीयते पदम्।**
**सुसूक्ष्मः शक्यते ज्ञातुं नाप्राज्ञैरिति निर्णयः[2]॥**

यथा पूर्वमेव निवेदितं यत्–**'उपसर्गाः पदविज्ञानञ्च'** इति नामधेयोऽध्यायो भागत्रये विभक्तः। प्रथमे विभागे—**'सिद्धान्तप्रत्यभिज्ञानम्'** द्वितीये **'प्रयोगविज्ञानम्'** तृतीये च **'उपसर्गाणामर्थविकासः'** इति दृशा विमर्शो विधास्यते। तत्र 'सिद्धान्तप्रत्यभिज्ञानम्' इति विभाग उपसर्गाणां विषये प्रथिताः सिद्धान्ताः समीक्षिताः। विशेषतो वैदिकभाषायां व्यवहृतानां केषाञ्चनैतादृशोपसर्गाणां विवेचनं कृतम्, य आचार्ययास्कमन्वसुलभप्रयोगवन्तः सञ्जाताः। साम्प्रतं विविच्यमानेऽस्मिन्निबन्ध एतादृशानामुपसर्गाणां

---

१. निरुक्तम्–१।२—दुर्गव्याख्या। २. ऋग्वेदानुक्रमणी–३।७।२–४।

प्रयोगविषये, अर्थविषये चानुसन्धानिकं तुलाबोधकञ्च गवेषणं विधास्यते, य आ ऋग्वेदाल्लौकिकसंस्कृत-पालि-प्राकृत-अपभ्रंश-हिन्द्यादिभाषास्वैतिहासिकभाषाप्रवाहेऽविच्छिन्नरूपेणामृश्यन्ते। इम उपसर्गा एतादृशाः सन्ति, येषां रूपप्रतिमाऽजस्ररूपेण दशसहस्राब्दीपर्यन्तमविकृताऽथ चापरिवर्तिता चावलोक्यते। भवन्तु नाम तेषामर्थसङ्कोचविकासार्थातिदेशाश्च काले कालेऽन्यथात्वमुपपन्नाः।

आचार्ययास्कमनु निपातोपसर्गद्योतकतावादस्य प्रचारो भारतीयशाब्दिकानां कृते चर्चाया विवादस्य च मुख्यो विषय आसीत्। अत एव तैरेतादृशा उपसर्गा निपाताश्च साग्रहं सोत्साहं च तत्त्वचिन्ताया विषयमानीताः, येषां रूपप्रतिमाऽतितनुतराऽऽसीत्। यतो हि द्योतकतावादस्य प्रतिष्ठापने क्षीणरूपा अस्पष्टरूपाश्चोपसर्गनिपाता यथा सहाया अभूवन्, न तथोपचयावयववन्तो विस्पष्टार्थाश्चोसर्गनिपाताः। वस्तुतो रूपेषु योऽणोरणीयान् भवति, स एव विमर्शकाल उपेक्ष्यते, यद्यपि तत्त्वाववोधदृशा सिद्धान्तोऽयमसैद्धान्तिकः। यतो हि योऽणोरणीयान् भवति, तस्मिन्नेव कार्यकाले महतो महीयस्त्वस्य शक्तिरपोहति। अत एव रूपेषु लघुरूपाणामुपसर्गाणामनन्तार्था दृश्यन्ते वाङ्मये। सभाजितं हि उव्वटाचार्येण—**'अथ विंशतिरुपसर्गाः क्रियाविशेषकरा इति सामान्यतोऽर्थः। विशेषार्थास्त्वनन्ता एव[1]'** इति। शौनकोऽपि बृहद्देवतायां वक्ति यत्—

**उपसर्गास्तु विज्ञेयाः क्रियायोगेषु विंशतिः।**
**विवेचयन्ति ते त्वर्था नामाख्यातविभक्तिभिः[2]** ॥ इति।

अर्थात् क्रियायोग उपपन्ना उपसर्गा विंशतिः, किन्तु तेषामर्थास्त्वनन्ता एव। यतो हि नामाख्यातविभक्तिभिस्तैर्नवनवा अर्था उद्भाव्यन्ते। स्वतः प्रमाणभूतेनाचार्यपतञ्जलिनाऽप्युक्तं यत्—'को हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुम्' इति।

सम्प्रति संस्कृतभाषायां ये कृशकायाः क्षीणकायाश्चोपसर्गा व्यवह्रियन्ते, तेषां विषये शाब्दिकानां समयोऽस्ति यत्ते द्योतका एव, न तु वाचकाः। निपातोपसर्गाणां द्योतकत्ववाचकत्वविषये मयाऽस्य प्रवन्धस्य तृतीयेऽध्याये सविस्तरं सप्रमाणं च विवेचनं कृतम्। अतोऽत्र पुनः सङ्कीर्तनमनुवादमात्रमेव। स्वतः प्रमाणभूतैर्महामुनिपाणिनिभिरप्युपसर्गा भिन्नभिन्नार्थवाचका उद्घोपिताः। न हि दृश्यन्तेऽष्टाध्याय्यामुपसर्गद्योतकतावादस्य प्रमाणानि। अत एव माधवभट्टेन महामुनेरनुवादः कृतः—

**पाणिनिश्चाह भगवान् अर्थान् एषां बहूंस्तथा।**
**उदाहरणमेतेषां बाहुल्यान्न प्रदर्शितम्[3]** ॥ इति।

---

१. शुक्लयजुर्वेदस्योव्वटाचार्यप्रस्तावना। २. बृहद्देवता—२।९।६।
३. ऋग्वेदानुक्रमणी—३।७।१६।

अत्रावस्तात् कानिचन सूत्राणि समुपस्थाप्यन्ते, येषूपसर्गाणामर्थाः स्वयमेव निर्दिष्टा ऋषिणा—'उदोऽनूर्ध्वकर्मणि'[१], 'उपान्मन्त्रकरणे'[२], 'स्पर्धायामाङः'[3], 'अधेः[४] प्रहसने', 'आङ्[५] उद्गमने', 'वेः[६] पादविहरणे', 'सम्प्रतिभ्यामनाध्याने'[७], 'उपाद्यमः[८] स्वकरणे', 'अनुर्लक्षणे'[९], 'तृतीयार्थे'[१०], 'हीने'[११], 'उपोऽधिके[१२] च', 'अपपरी[13] वर्जने', 'आङ् मर्यादावचने'[१४], 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः'[१५], 'अभिरभागे'[१६], 'प्रतिः प्रतिनिधिप्रतिदानयोः'[१७], 'अधिपरी अनर्थकौ'[१८], 'सुः पूजायाम्'[१९], 'अतिरतिक्रमणे[२०] च', 'अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु'[२१], 'अधिरीश्वरे[२२]' इति।

इमानि सूत्राणि व्याकरणकर्तुर्महामुनिपाणिनेर्हार्दमुपश्लोकयन्ति, उपसर्गाणामर्थप्रख्यापने। महामुनिपाणिनिस्तु वैदिकवाङ्मस्याप्रतिममर्मज्ञ आसीत्।

अत एव माधवभट्टेन त्रिषु ऋगर्थवित्सु पाणिनेः चर्चा गौरवेण कृता—

**शाकल्यः पाणिनिर्यास्क इत्यृगर्थपरास्त्रयः।**
**यथाशक्त्यनुधावन्ति न सर्वं कथयन्त्यमी[२३] ॥**

पुरस्तात् परिसंख्यातेषु सूत्रेषु महामुनिपाणिनिना विशेषरूपेण—'उत्', 'उप', 'आङ्', 'अधि', 'वि', 'सम्', 'प्रति', 'अनु', 'अप', 'परि', 'अभि', 'सु', 'अति', 'अपि'प्रभृत्युपसर्गाणां विविधा अर्था निर्दिष्टाः। अन्येषामप्युपसर्गाणां तत्तत्सूत्रेषु तेनार्थाः परिसंख्याताः। निबन्धेऽस्मिन् वैदिकलौकिकोभयभाषायामजस्ररूपेण व्यवह्रियमाणानाम् उपसर्गाणां विविधा अर्थाः प्रयोगाश्च विमर्शयिष्यन्ते। अतोऽत्र पाणिनिनौपलक्षणिकत्वेन सङ्केतिता अर्थास्तेषां प्रयोगाश्च ससन्दर्भमुपस्थाप्यन्ते—

(क) उत् [ = ऊर्ध्वकर्मणि]।

'स विश्वा प्रति उत्तिरन्'[२४] अत्रोच्छब्दं व्याख्याति सायणः–'उत्' = उद्गतान् इति। इत्थम्—'उत् + √तृ [ = प्लवनतारणयोः] > उत्तिरन् = उद्गतानित्यर्थः।

१. अष्टाध्यायी–१।३।२४।
२. अष्टाध्यायी–१।३।२५।
३. अष्टाध्यायी–१।३।३१।
४. अष्टाध्यायी–१।३।३३।
५. अष्टाध्यायी–१।३।४०।
६. अष्टाध्यायी–१।३।४१।
७. अष्टाध्यायी–१।३।४६।
८. अष्टाध्यायी–१।३।५६।
९. अष्टाध्यायी–१।४।८४।
१०. अष्टाध्यायी–१।४।८५।
११. अष्टाध्यायी–१।४।८६।
१२. अष्टाध्यायी–१।४।८७।
१३. अष्टाध्यायी–१।४।८८।
१४. अष्टाध्यायी–१।४।८९।
१५. अष्टाध्यायी–१।४।९०।
१६. अष्टाध्यायी–१।४।९१।
१७. अष्टाध्यायी–१।४।९२।
१८. अष्टाध्यायी–१।४।९३।
१९. अष्टाध्यायी–१।४।९४।
२०. अष्टाध्यायी–१।४।९५।
२१. अष्टाध्यायी–१।४।९६।
२२. अष्टाध्यायी–१।४।९७।
२३. ऋग्वेदानुक्रमणी–८।१।७।
२४. अथर्ववेदः–३६।१।२।

(ख) उप [ = देवपूजायाम् ] ।

तथा च रामायणे—

बहूनामप्यचित्तानामेको भवति चित्तवान् ।
पश्य वानरसैन्येऽस्मिन् यदर्कमुपतिष्ठते[१] ॥

अत्रोपोपसर्गः पूजार्थे प्रयुक्तः । एवम्—उप + √ष्ठा [ = गतिनिवृत्तौ ] > उपतिष्ठते = देवपूजां करोतीत्यर्थः ।

(ग) (१)–आङ् < आ [ = स्पर्द्धायाम् ] ।

तथाहि प्रयोगः—'निषसाद धृतव्रतो वरुणः पस्त्यास्वा[२]' इति । आ–शब्दं व्याकरोति उव्वटाचार्यः—'आ = आधिपत्येन । उपसर्गादत्रार्थपरिपूर्तिः' ।

(२) आङ् [ = मर्यादायाम् ] ।

तथा हि मन्त्रः—'विभक्तासि अपाक् आ' इति । स्कन्दस्वामिनाऽऽकारोऽत्र मर्यादार्थे व्याख्यातः ।

(घ) (१) अधि [ = प्रहसने ] ।

'चक्रे तमधिबभूव = तेन वा जित इत्यर्थः[३]' । अत्राध्युपसर्गः प्रहसने प्रयुक्तः ।

(२) अधि [ = अनर्थकः, पादपूरणार्थकश्च ] ।

तथा चोदाहरणम्—'उच्छा दिवो—अधि धेहि श्रवो नः'[४] ।

व्याख्याति च स्कन्दस्वामी—'अधिशब्दः पदपूरणः' इति ।

(ङ) वि [ = पादविहरणे अतीते च ] ।

तथा हि रघुवंशे—

रात्रिर्गता मतिमतांवर ! मुञ्च शय्यां
धात्रा द्विधैव ननु धूर्जगतो विभक्ता[५] ॥

अत्र 'वि' इत्युपसर्गः पादविहरणे प्रयुक्तः ।

(च) सम् [=अनाध्याने] ।

सम् + आ + √धा [=धारणपोषणयोः] > समाधत्ते = स्मरतीत्यर्थः[६] ।

(छ) (१) प्रति [ = अनाध्याने ] ।

'अनु प्रत्नस्यौकसो हुवे तुवि प्रतिं नरम्'[७] इति । व्याख्याति च मन्त्रोऽयं स्कन्दस्वामी—'प्रतिशब्दोऽनाध्यानेऽत्र' इति ।

---

१. वा० रामायणम् ।
२. शुक्लयजुर्वेद–१०।२७ ।
३. निपाताव्ययोपसर्गवृत्तिः–पृ० ४५ ।
४. ऋ० सं०–६।६५।६–स्कन्दभाष्यम् ।
५. रघुवंशम्–५।६६ ।
६. निपाताव्ययोपसर्गवृत्तिः–पृ० ३९ ।
७. ऋ० सं०–१।३०।९ ।

(२) प्रति [ = लक्षणे] ।

'प्रति त्यं चारुमध्वरं आ गहि'[१] इति ।

स्कन्दाचार्यो व्याख्याति—प्रतिशब्दो लक्षणे । एवमेव—इत्थंभूताख्याने—'तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः'[२] इति ।

(ज) (१) उप [ = स्वकरणार्थे] ।

तथा चोदाहरणम्—'लब्ध्वापि लोके परिणाहिरूपं जातास्तदूर्वोरुपमान-बाह्याः'[३] इति । अत्रोपोपसर्गः स्वकरणार्थे प्रयुक्तः ।

(२) उप [ = अधिकार्थे, उपचर्यार्थे च] ।

'यज्ञ नमश्च त उप च यज्ञस्य शिवे'[४] इति । मन्त्रोऽयं व्याकुर्वता महीधरेणोक्तं यत्—'उपशब्द उपचयार्थे । उपचयो वृद्धिः' इति ।

(झ) (१) अनु [ = लक्षणे] ।

'उमास्तनोद्भेदमनु प्रवृद्धो मनोरथो यः प्रथमं बभूव'[५] । व्याख्याति श्लोकोऽयम् अरुणगिरिनाथः—'अनुर्लक्षणे । उमास्तनोद्भेदकालादारभ्येत्यर्थः' इति ।

(२) अनु [ = इत्थंभूताख्याने[६]] ।

'साधुश्चैत्रो मातरमनु' इति ।

(३) अनु [ = भागे] ।

'यदासामनु स्यात् तद्दीयताम्' इति ।

(४) अनु [ = वीप्सायाम्] ।

'वृक्षं वृक्षमनु सिञ्चति' ।

(५) अनु [ = तृतीयार्थे, सहार्थे] ।

'नदीमन्ववसिता सेना' इति ।

(६) अनु [ = हीने] ।

'अन्वर्जुनं योद्धारः' इति ।

(ञ) अप [ = वर्जने] 'कन्यला····अपदीक्षामयष्ट'[७] इति ।

व्याख्यातश्च मन्त्रोऽयं गुणविष्णुना—'अपदीक्षाम् = दीक्षां वर्जयित्वेत्यर्थः' ।

---

१. ऋ० सं०—१।१९।१ ।
२. रघुवंशम्—६।१२ ।
३. कुमारसम्भवम्—१।३६ ।
४. शुक्लयजुर्वेदः—२।१९ ।
५. कुमारसम्भवम्—७।४२ ।
६. निपाताव्ययोपसर्गवृत्तिः—पृ० ४० ।
७. छान्दोग्यब्रा० १।२।५—गुणविष्णुभाष्यम् ।

(ट) परि [=वर्जने]।

परित्रिगर्तं वृष्टो देवः'[1] इति।

,, [=लक्षणे]—'वृक्षं वृक्षं परि विद्योतते विद्युत्'[2]।

,, [=इत्थंभूताख्याने]–'शोभनश्चैत्रो मातरं परि'।

,, [=भागे]–'यदत्र मां परि स्यात्'।

,, [=वीप्सायाम्]–'वृक्षं वृक्षं परिसिञ्चति'।

,, [=आनर्थक्ये]–'मेधां सायं मेधां····परि'[3] इत्यादयः।

(ठ) अभि [=अभागे]—'हरिमभि वर्तते'[4]।

(ड) सु [=पूजायाम्]–'नि षू नमध्वं भक्ताः'[5]।

वैदिकभाषायां 'सु' इत्यस्य स्थाने 'षू' इत्ययं क्वाचित्कत्वेन प्रयुज्यते। यथा—सु>षु>षू इति।

(ण) अति [=अतिक्रमणे]–'यो विश्वतः सु प्रतीक····'[6]। व्याख्यायते च मन्त्रोऽयं स्कन्दाचार्येण—'अतिमतिक्रान्तार्थे' इति।

(त) अपि [=पदार्थेऽर्थे]–'सर्पिषोऽपि स्यात्'[7]।

,, [=सम्भावनायाम्]–'अहा अरातिमविदः स्योनमप्यभूर्मद्रे'[8] इति। व्याख्याति च मन्त्रममुं सायणाचार्यः—'अपिः सम्भावनायाम्' इति।

,, [=अन्ववसर्गे=कामचारानुज्ञार्थे]–'अपि स्तुहि'।

,, [=गर्हायाम्]–'धिग्देवदत्तमपि स्तुयाद् वृषलम्'[9]।

,, [=समुच्चये]–'स्वधर्ममपि चावेक्ष्य····'[10]।

**उपसर्गानुक्रमे यास्कपाणिन्योर्विसंवादः**

एवं यथाकथाऽऽचार्यपाणिनिना निर्दिष्टार्थानुरोधेन तत्संवादकाः सन्दर्भा विवेचिताः। इमेऽर्थाः पाणिनिना वैदिकवाङ्मयादेवोद्धृता इत्यपि सुविदितं विदुषाम्। निरुक्तग्रन्थ आचार्ययास्केनाप्युपसर्गाणाम् औपलाक्षणिका अर्थाः पठिताः। अत्रेदमपि ध्यातव्यमस्ति यत् पाणिनेः प्रादिगणपठितानामुपसर्गाणामनुक्रमस्तु यास्काचार्यपठितोप-

१. हेमचन्द्रकृतानेकार्थसङ्ग्रहः—निपातप्रकरणम्।
२. निपाताव्ययोपसर्गवृत्तिः–पृ० ५०।
३. अथर्ववेदः–१०८।२।५।
४. अष्टाध्यायी–१।४।९१।
५. ऋ० सं०–३।३५।९।
६. ऋ० सं०–१।९४।७।
७. अष्टाध्यायी–१।४।९६।
८. अथर्ववेदः–१।१०।७।
९. अष्टाध्यायी–१।४।९६।
१०. गीता–२।१२, १३।१८।

सर्गाणामनुक्रमेण सह विसंवदते। आचार्ययास्ककृतनिरुक्ते उपसर्गा उपसर्गसंज्ञयैवामृष्टा व्यवहृताश्च; किन्तु पाणिनेरष्टाध्यायां क्वचित् ते 'प्रादय[१]:' इति संज्ञयाऽऽमृश्यन्ते, क्वचिच्च 'उपसर्गाः क्रियायोगे'[२] इत्यत्रोपसर्गसंज्ञया।

निरुक्त उपसर्गाणां क्रमविधानं तु भाषायाः पदविज्ञानस्य चानुरोध्यस्ति। अष्टाध्याय्यां तु सर्वत्रोपसर्गाणामालोचनं क्रमविन्यासश्चैतादृशोऽवलोक्यते, येन ते द्योतका एव भवेयुः। न हि पाणिनितन्त्र उपसर्गाणां विनियोगः कार्यकारणमूलकः, पदविज्ञानमूलकः, स्वाधीनार्थबिम्बमूलकः, सत्त्वगन्धिमूलकश्च प्रतिभाति। अत एव हि दृश्यते यास्कपाणिन्योः पदनिर्वचने, अर्थनिर्धारणे व्युत्पत्तिव्याकरणे च महान् विसंवादः।

वैदिकसंहिताया भाष्यकर्तारेष्वपि दृश्येते द्वे परम्परे। एका परम्पराऽऽचार्ययास्कमनुहरते, अपरा च महर्षिपाणिनिम्। एकस्यां परम्परायाम्—यास्क-स्कन्द-महेश्वर-गुणविष्णु-अनन्तभट्ट-भट्टभास्करप्रभृतयो भाषाशास्त्रिणः शाब्दिका गण्यन्ते, अपरस्यां च—पाणिनि-सायण-दुर्ग-उव्वट-महीधरप्रभृतयः। दृश्यन्ते ह्युभयोः परम्परयोर्भूयांसः शब्दशास्त्रीयाः, भाषाशास्त्रीयाश्च विसंवादाः। यतो ह्येका परम्परा—'चत्वारि पदजातानि' इति पदविभागमङ्गीकरोति, अपरा च 'सुप्तिङन्तं पदम्' इति। एकया परम्परया समस्तपदराशिः—नाम-आख्यात-उपसर्ग-निपातेषु चतुर्धा विभज्यते, अपरया च—सुबन्तम्, तिङन्तम् इति द्विधैव।

अस्य विसंवादस्य सङ्केतः कृतो माधवभट्टेन—

**माधवस्तत्र वदति स्फुटत्वोद्ग्रहणादिकम्।**
**वाक्यार्थे जनयन्त्येते मन्त्रब्राह्मणयोरिति॥**
**स्फुटत्वोद्ग्रहणादिश्च क्वचित्सूक्ष्मः क्वचित्स्फुटः।**
**यत्र स्फुटस्तदा सार्थाः सूक्ष्मे स्युः पूरणा इति[३]॥**

अर्थात् पाणिनीयानां पदद्योतकत्ववादो न सर्वत्र सिद्धान्तपरः, यतो हि वाक्यार्थेषु निपातोपसर्गाणां स्फुटा अर्थाः प्रतीयन्त एव।

प्रसङ्गेऽस्मिन् यास्कपाणिन्योरुपसर्गक्रमो हि प्रस्तूयते। तदन्वकारादिक्रमेण तेषामर्थास्तत्संवादकाः प्राचीनभारोपीयभाषोपसर्गास्तेषामर्थश्च प्रस्तोष्यन्ते।

**(क) आचार्ययास्कसम्मत उपसर्गक्रमः[४]**

'आ', 'प्र', 'परा', 'अभि', 'प्रति', 'अति', 'सु', 'निर्', 'दुर्', 'नि', 'अव', 'उत', 'सम्', 'वि', 'अप', 'अनु', 'अपि', 'उप', 'परि', 'अधि', इति।

---

१. अष्टाध्यायी—१।४।५८।
२. तदेव—१।४।५९।
३. ऋग्वेदानुक्रमणी—३।१।१७—१८।
४. निरुक्तम्—१।३।

**(ख) पाणिनिगणपाठ उपसर्गक्रमः**[1]

'प्र', 'परा', 'अप', 'सम्', 'अनु', 'अव', 'निस्', 'निर्', 'दुस्', 'दुर्', 'वि', 'आङ्', 'नि', 'अधि', 'अपि', 'अति', 'सु', 'उत्', 'अभि', 'प्रति', 'परि', 'उप' इति ।

**(ग) आचार्यशौनकसम्मत उपसर्गक्रमः**[2]

'प्र', 'अभि', 'आ', 'परा', 'निर्', 'दुर्', 'अनु', 'वि', 'उप', 'अप', 'सम्', 'परि', 'प्रति', 'नि', 'अति', 'अधि', 'सु', 'उद्', 'अव', 'अपि' इति ।

इम उपसर्गक्रमा यास्क-पाणिनि-शौनकाचार्यप्रभृतिभिर्भारतीयशब्दशास्त्र-शिरोमणिभिः पठिताः ।

एतेषूपसर्गसंख्यानक्रमेषु महामुनिपाणिनेः सन्निवेशस्तु यथाकथा गणपाठसंगणन-मात्रमेव । न हि तत्रोपसर्गाणामर्थविषये कश्चिद् विमर्शप्रधानो विवेको दृश्यते । शौनकीयक्रमे तु छन्दानुरोधि सन्निवेशोऽवलोक्यते । पद्यमये श्लोके तेनोपसर्गा व्युत्क्रम्य पठिताः । छन्दसां पूरणार्थं तेनोपसर्गा इतस्ततः सन्निवेशिताः । तत्राप्युपसर्गाणामर्थ-विषये नास्ति कश्चिदालोकः । आचार्ययास्कक्रमस्तु भाषाशास्त्रदृशाऽर्थमनुधावति । तत्रोपसर्गा अन्योन्यं सन्ति सापेक्षाः । उपसर्गार्थस्यानुलोमविलोमास्कन्दनदृष्ट्याऽऽचार्य-यास्कस्य सन्निवेशः समस्तं वैदिकवाङ्मयमभिव्याप्नोति । तत्र सर्व उपसर्गा एतादृश-क्रमेण पठिताः, येन तैरनायासेनानुकूलार्थः प्रतिकूलार्थो वाऽन्यथाकर्तुं पार्यते । अतो यास्काचार्यस्य पाठस्तु पदविज्ञानदृष्ट्याऽपि सुचिन्तितः प्रतिभाति ।

एवमत्रैकस्मिन् वृत्तात्मके पृष्ठे—यास्क-पाणिनि-शौनकादिभिः स्वीकृता विसंवादात्मकाः पाठाः प्रस्तूयन्ते । अस्मिन्नेवानुषङ्गे भोजराजेन पठिता उपसर्गा अपि संवादात्मकानुसन्धानदृष्ट्या समुपस्थाप्यन्ते । यद्यपि भोजराजोऽर्वाक्कालिकः (एकादश-शताब्दीभवः), तथापि तेन रचितानां ग्रन्थानामानुसन्धानिकेन गवेषणेन प्रतिभाति यत् तदानीमपि वैदिकीपदनिर्वचनपरम्परा विद्वद्भिः पुरस्कृताऽऽसीत्, यस्यां निपातोप-सर्गाः स्वायत्तार्थकत्वेन व्यवह्रियन्ते स्म । अत ऐतिहासिकानुसन्धानानुरोधेनापि भोज-राजस्य सिद्धान्ताः समालोचनीयाः प्रतिभान्ति । एवम्—यास्क-पाणिनि-शौनक-भोज-राजप्रभृतिभिः स्वीकृता उपसर्गक्रमाः प्रदर्श्यन्ते । आचार्ययास्केनोरीकृता अर्था अप्युद्ध्रियन्ते—

१. अष्टाध्यायी–१।४।५८ । २. ऋक्प्रातिशाख्यम्–१२।२० ।

आचार्ययास्क—पाणिनि-शौनक-भोजराजप्रभृतिभिः पठिता उपसर्गक्रमाः

| यास्कीयपाठः | पाणिनीयपाठः | शौनकीयपाठः | भोजराजीयपाठः |
|---|---|---|---|
| १. आ [ = अर्वागर्थे] | प्र | प्र | प्र |
| २. प्र [ = प्रातिलोम्ये] | परा | अभि | परा |
| ३. परा [ = प्रातिलोम्ये] | अप | आ | अप |
| ४. अभि [ = आभिमुख्ये] | सम् | परा | सम् |
| ५. प्रति [ = प्रातिलोम्ये] | अनु | निर् | अनु |
| ६. अति [ = अभिपूजितार्थे] | अव | दुर् | अव |
| ७. सु [ = अभिपूजितार्थे] | निस् | अनु | निर् |
| ८. निर् [ = प्रातिलोम्ये] | निर् | वि | दुर् |
| ९. दुर् [ = प्रातिलोम्ये] | दुस् | उप | वि |
| १०. नि [ = विनिग्रहार्थे] | दुर् | अप | आङ् |
| ११. अव [ = विनिग्रहार्थे] | वि | सम् | नि |
| १२. उत् [ = प्रातिलोम्ये] | आङ् | परि | अधि |
| १३. सम् [ = एकीभावे] | नि | प्रति | अपि |
| १४. वि [ = प्रातिलोम्ये] | अधि | नि | अति |
| १५. अप [प्रातिलोम्ये] | अपि | अति | सु |
| १६. अनु [ = सादृश्ये] | अति | अधि | उत् |
| १७. अपि [ = संसर्गे] | सु | सु | अभि |
| १८. उप [ = उपजने] | उत् | उत् | प्रति |
| १९. परि [सर्वतोभावे] | अभि | अव | परि |
| २०. अधि [ = उपरिभावे, ऐश्वर्ये च] | प्रति | अपि | उप |
| २१. .... | परि | .... | व<अव |
| २२. .... | उप | .... | पि<अपि |
| २३. .... | .... | .... | स<सम् |
| २४. .... | .... | .... | श्रत् |
| २५. .... | .... | .... | अन्तर् |

एवं पुरस्तात् प्रदर्शितेषु क्रमेषु समेषामाचार्याणां क्रमोऽन्योन्यं विसंवदते। भोजराजीयः क्रमोऽपि शौनकीयक्रमवन्मिताक्षरे सन्निविष्टोऽस्ति। अतो मन्ये यत्तत्रापि छन्दानुरोध्याग्रहोऽऽसीत्। संस्कृतवाङ्मये, विशेषतो पाणिनिमनु निर्मिते साहित्ये, छन्दःपरिपूरणाय शव्दानामन्यथा प्रयोगाग्रहो दृढतरोऽवलोक्यते। स्यान्नाम शव्दा अनर्थकाः, रिक्तार्थकाः, पादपूरणार्थाः, छन्दःपरिपूरणार्था वा भवेयुः, किन्तु छन्दः-परिपूर्तिस्त्वावश्यक्येव। एतेन व्यापारेण पदशक्तेर्हानिः क्षयो वा भवतु, भवेन्नाम। अत एव शव्दानां द्योतकतावादस्य मुख्यहेतूनि छन्दांस्येव। भोजराजेनातिरिक्ता अपि पञ्चोपसर्गाः पठिताः, येषां सन्निवेशः प्रकोष्ठे कृतो वर्तते।

भाषाया ऐतिहासिकप्रवाहदृष्ट्या भोजराजस्यातिरिक्तोपसर्गपाठरूपसङ्केतस्तु महते श्रेयसे कल्प्यते। नहि केवलाः—'व<अव', 'पि<अपि', 'स<सम्' इत्युपसर्गा एवापचयावशिष्टाः, अपि त्वन्येऽपि। संस्कृतभाषायामन्यासु च भाषासु लोपागमवर्ण-विकाररूप उपचयापचयस्तु पदेषु सङ्घटत एव। तेन धर्मेणोपसर्गनिपाता अप्याक्रान्ता भवन्त्येव। लोपागमवर्णविकारस्य प्रथमः सङ्केतस्तु निरुक्त एवोपलभ्यते। तद्यथा—'अथाप्यस्तेर्निवृत्तिस्थानेषु आदिलोपो भवति—स्तः सन्तीति। अथाप्यन्तलोपो भवति—गत्वा गतम् इति। अथाप्युपधालोपो भवति—जग्मतुर्जग्मुरिति। अथाप्यादिविपर्ययो भवति—ज्योतिः, घनः इति। अथाप्याद्यन्तविपर्ययो भवति—स्तोका, रज्जुः, सिकता इति। अथापि वर्णोपजनः—आस्थत्, भरूजा इति'[1]। भाषाशास्त्रमर्मज्ञस्याचार्ययास्कस्य प्रतिपादनमिदं लोपागमवर्णविकाररूपस्य पदधर्मिकोपचयापचयरूपपदविकारस्यैतिह्यं प्रमाणयति। अत एव पञ्चविधनिरुक्तलक्षणान्यङ्गीकृतानि निरुक्तग्रन्थे। तथा च—

**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्[2]॥**

इमानि लोपागमवर्णविकाररूपनिरुक्तलक्षणानि संस्कृतभाषाया अतिविपुलमैति-हासिकायामं प्रख्यापयन्ति। ऋते सुविपुलमैतिह्यं पदेष्वेतादृशान्युपचयापचयरूप-कार्याणि नैव सङ्घटन्ते। अत एव महामुनिपतञ्जलिनापि समर्थितं पञ्चविधनिरुक्त-लक्षणम्—'**लोपागमवर्णविकारज्ञो हि सम्यग् वेदान् परिपालयिष्यतीति। रक्षार्थं वेदानामध्येयं व्याकरणम्[3]**' इति।

सन्दर्भाणामेतेषां पर्यवेक्षणेन निर्णेतुं शक्यते यत् किल नहि केवलं नामाख्यातेष्वेव पञ्चविधनिरुक्तलक्षणरूपपदधर्मिकाणि कार्याणि परिस्पन्दन्ते, अपि तु निपातोपसर्गे-ष्वपि। दृश्यन्ते हि वैदिकलौकिकोभयभाषायाम् उपचयापचयावशिष्टा निपातोपसर्ग-

---

१. निरुक्तम्—२।२।　　　२. निरुक्तलघुविवृतिः—२।७।८।
३. महाभाष्यम्–१।१।१—पृ० १०।

शब्दाः। पदविज्ञानस्यैतिहासिकविकासदृष्ट्यैतत्कार्यमतिस्वाभाविकमेव। यतो हि भाषायां भूयो भूय आवृत्त्या स्वरूपतोऽणीयस्त्वाच्च निपातोपसर्गाणामर्थाः शनैः शनैरस्पष्टतामधिगच्छन्ति। क्रमशोऽर्थस्यान्तर्धानात् केचनोपसर्गनिपाताः स्वीयामात्मशक्तिमौर्वरत्वञ्चाहासीरन्। एवं यदा कस्यचिदपि शब्दस्य जीवनशक्तेर्ह्रासो भवति, तदा पुनस्तस्योज्जीवनाय, उत्तम्भनाय वा तस्मिन् शब्दग्रामे ध्वनिविपर्ययोऽनायासेन सङ्घटते। ध्वनिविनिमयेनोत वाऽऽसञ्जनेनाहोस्विद् विपर्ययेण पुनः स एव ध्वनिग्रामरूपशब्दः स्वीयमर्थरूपमौर्वरत्वं प्रख्यापयति। ध्वनीनामुपचयापचयरूपविस्फूर्जनमिदं शब्दग्रामधर्मिकः। अमीभिः शब्दग्रामधर्मिकसंप्लवैरुपसर्गनिपातानामप्यर्थाः संप्लवन्ते। ग्रीकभाषाविदुषा डेनिस्टनमहोदयैरप्युपापादि यत्—'स्तम्भितार्थाः शब्दा ध्वनिविपर्ययेण इतरशब्दाऽऽसञ्जनेन वा उत्तभ्यन्ते[1]' इति।

अत्रावस्तात् केचनैतादृशा उपसर्गा अक्षरानुक्रमेण प्रस्तूयन्ते, य आद्यक्षरलोपेनान्त्याक्षरलोपेन वाऽऽक्रान्ता दृश्यन्ते। लुप्तावशिष्टाः क्षीणाश्च ते समस्ते संस्कृतवाङ्मयेऽजस्ररूपेण व्यवह्रियमाणा अवलोक्यन्ते। आसीत् पुरा कश्चिद् भागुरिराचार्यो येन 'अवाप्योरुपसर्गयोरल्लोपः' उद्घोषितः। मन्ये, यत् तत्र मुख्यो हेतुः संस्कृतवाङ्मयस्य धारावाहिकैतिहासिकबोधाभाव एवासीत्। नाम-आख्यात-उपसर्ग-निपातेषु निर्विशेषरूपेणेयं लोपपरम्परा दृश्यते। आवैदिकवाङ्मयाल्लौकिकवाङ्मयं यावद् यथाशक्त्यालोड्य निःसारितानां लुप्तावशिष्टानां चोपसर्गाणां सन्दर्भपुरस्सराणि दृष्टान्तानि प्रस्तूयन्तेऽधस्तात्—

(१) अधि > धि [ = अधिकरणार्थे]।

'अधि' इत्युपसर्गस्याकारलोपो दृश्यते महाभारत-भागवत[2]-गीतादिषु[3] ग्रन्थेषु। प्रायेण लुप्ताकारवतः 'अधि' इत्युपसर्गस्य व्यवहारः—√ष्ठा > स्था [ = गतिनिवृत्तौ] इति धातुना दृष्टचरः। तथा च महाभारते = **'सैन्येषु विप्रयातेषु धिष्ठितं पुरुषर्षभम्[4]'** इति। व्याख्यायते च श्लोकोऽयं नीलकण्ठभट्टेन—'धिष्ठितम् = अवस्थितमित्यर्थः। उपसर्गस्यादिलोप आर्षः' इति। एवम्—अधि > धि + √ष्ठा > स्था > धिष्ठितम् = अवस्थितमित्यर्थः।

(२) अप [ = अधोगमने]।

'अप' इत्युपसर्गस्य क्वचिद् आद्यकारो लुप्तो दृश्यते; क्वचिच्चान्त्योऽकारोऽपि। यथा 'परुषः' इति शब्द आद्यकारो लुप्तः—'अप + √रुष [ = रोषे] > अपरुषः > परुषः=आक्रुष्ट इत्यर्थः। व्याख्याति चामरकीर्तिः—'पुरुष्यति = कुप्यतीति परुषः।

---

१. दि ग्रीक पार्टिकल्स—पृ० १७७। २. श्रीमद्भागवतम्—८।१७।२४—श्रीधराचार्यव्याख्या।
३. गीता—१३।१८। ४. महाभारतम्—द्रोणप०—१००।३५।

'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यादिना 'अपः अकारलोपः'[1] इति। एवमेव 'अप्सरा' इति शब्दे अपोऽन्त्याकारलोपः सञ्जातः। तद्यथा 'अप + √सृ [=गतौ] > अपसराः > अप्सराः' इति। व्याकरोति च सर्वानन्दः—'अपसारयन्ति = स्खलयन्तीति वा। अप्सरस् इत्यौणादिकसूत्रेण निपातनादसुन्। अपशब्दस्याकारलोपश्च'[2] इति।

(३) अपि [=संसर्गे]।

'अपि' इत्युपसर्गोऽपि किलाद्यस्वरलोपमनुभवति। तथा हि रघुवंशमहाकाव्ये—

**हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः।**
**भुजङ्गपिहितद्वारं पातालमधितिष्ठति[3]॥**

एवमेव छान्दोग्यब्राह्मणेऽपि[4] 'अपि' इत्युपसर्गोऽकारलोपमनुभवति। व्युत्पत्त्याऽपि—अपि + √हि [=गतौ] > अपिहितम् > पिहितम् = अवरुद्धमित्यर्थः—रूपसिद्धिः।

(४) अभि [=आभिमुख्ये]।

'अभि' इत्युपसर्गोऽपि वैदिकसाहित्ये बहुत्राकारलोपमनुभवति। विशेषतोऽस्य लुप्ताकारवतः प्रयोगस्तु √षञ्ज [=सङ्गे] इति धातुना दृश्यते। लुप्ताकारवतो 'भि' इत्युपसर्गस्य व्यवहारस्तु ऋग्वेद एवोपलभ्यते। तद्यथा—'तक्षारिष्टं रुतं भिषग्ब्रह्मा सुन्वन्तमिच्छतीन्द्रायेन्दो परि स्रव'[5] इति। व्याख्यायते च मन्त्रोऽयं स्कन्दस्वामिना—'भिषक् = चिकित्सकः। अभेरकारलोपश्छान्दसः' इति। एवं व्युत्पत्त्याऽपि—'अभि > भि + √षञ्ज [=सङ्गे] > भिषज्यतीति भिषक्' रूपसिद्धिः। आधुनिकभाषाशास्त्रविद्भ्यां वाकरनागल[6]-मैकडानलमहोदयाभ्यामपि[7] समर्थ्यते प्रतिपादनमिदम्।

(५) अव [=विनिग्रहार्थे]।

'अव' इत्युपसर्गस्याकारलोपस्तु विदितचर एव संस्कृतभाषासमुपासकानाम्। 'अव', 'अपि' इत्युभावप्युपसर्गावाधारीकृत्य भागुरिणा प्रोक्तम्—'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति। श्रुतिसाहित्यादारभ्य स्मृतिसाहित्यं यावल्लुप्ताकारवतोऽस्य व्यवहारोऽविच्छिन्नतयाऽवलोक्यते। तथा चाथर्ववेदे—**'तर्दापते वघापते तृष्टजम्भा आ शृणोत मे'**[8] इति। मन्त्रोऽयं व्याचक्षाणेन सायणाचार्येण प्रोक्तम्—'हे वघापते—अवघ्नन्ति = अवबाधन्त इति वघाः = पतङ्गादयः। अवपूर्वाद् हन्तेः 'डोऽन्यत्रापि दृश्यते' (पावा ३।२।४८) इति डप्रत्यये 'वष्टि भागुरिरल्लोपम्' इति अवशब्दस्य आदिलोपः' इति।

---

१. धनञ्जयकृतनाममाला—१५५—अमरकीर्तिभाष्यम्।
२. अमरकोशः—१।१।५२—सर्वानन्दविरचितटीकासर्वस्वम्।
३. रघुवंशमहाकाव्यम्—१।८०।
४. छा० ब्रा०—५।२।११—गुणविष्णुभाष्यम्।
५. ऋ० सं०—९।११२।१, १०।९७।६-स्कन्दभाष्यम्।
६. अल्टिनडिच् ग्रामेटिक—पृ० ७२।
७. वैदिक ग्रामर—पृ० १४८।
८. अथर्ववेदः—६।५१।३।

एवमेव—'वलेखनम्[1]—अव + √लिख [=अक्षरविन्यासे]>अवलेखनम्> वलेखनम् = भूखननादिकर्म', 'वगाह्य[2]–अव + √गाह् [=विलोडने]>अवगाह्य> वगाह्य = प्रविश्य इत्यर्थः', 'वर्धमानः[3]—अव + √ऋध् [=वृद्धौ]>अवर्धमानः> वर्धमानः = परमातिशयप्राप्त इत्यर्थः', वतंसः[4]—अव + √तसि [=अलङ्करणे]> अवतंसः>वतंसः = भूषणमित्यर्थः'—प्रभृतयः प्रयोगाः संस्कृतभाषाऽलङ्कारभूताः।

(६) आ>आङ् [=अर्वागर्थे]।

'आङ्' इत्युपसर्गोऽपि नामापचयमनुभवति। न ह्यत्राकारस्य लोपो भवति, किन्तु ह्रस्वत्वन्तु दृश्यत एव। ह्रस्वत्वं नामाक्षरापचयः। तथा हि तैत्तिरीयसंहितायाम्— **'विसारेऽहिर्धुनिवति इव ध्रजीमान्। शुचि भ्राजा उषसः'** इति। व्याक्रियते च मन्त्रोऽयं भट्टभास्करेण—'विसारे = निस्सारणे, अहिः = आगत्य हन्ता मेघानाम्। आङ्पूर्वाद्धन्तेः डिप्रत्ययः, उपसर्गस्य ह्रस्वत्वम्' इति। एवम्—'आ + √हन [=हिंसागत्योः]> आहिः>अहिः = आगत्य हन्ता मेघानामित्यर्थः' इति—व्युत्पत्त्याऽपि रूपसिद्धिः।

(७) उत् [=प्रातिलोम्ये]।

'उत्' इत्युपसर्गोऽयमन्त्यवर्णस्यार्थात् 'त्' वर्णस्य लोपमनुभवति। प्रयुक्तं च ऋग्वेदे—**'आत्वेषमुग्रमव ईमहे वयम्'**[5] इति। व्याख्यायते च मन्त्रोऽयं सायणाचार्येण—'उग्रम्—√गम् [=गतौ], उत्पूर्वः। 'ऋज्रेन्द्राग्र०' इति निपातनाद् रप्रत्ययो मकारलोप उपसर्गस्यान्तलोपश्च। उद्गच्छतीत्युग्रः' इति। एवमेवान्यत्रापि 'उत्' इत्युपसर्गस्य 'त्' वर्णलोपो दृश्यते। यथा—'उलोकः[6]—उत् + √लोक् [=दर्शने]> उल्लोकः>उलोकः = उत्तमो लोक इत्यर्थः', उलपम्—उत् + √लू [=छेदने]> उल्लपम्>उलपम् = पर्वततृणमित्यर्थः। व्याख्यातश्च शब्दोऽयं दशपाद्युणादिकारेण— 'उलपम् = पर्वततृणम्। उत्पूर्वस्य लुनातेरन्तलोप उपसर्गान्तलोपश्च निपात्यते। उल्लूयते तदिति उलपम् = तृणविशेष इत्यर्थः[8]'।

(८) उपरि [=उपर्यर्थे]।

'उपरि' शब्दव्यवहार उपसर्गरूपेण दृश्यते संस्कृतभाषायाम्। अस्य प्रयोगस्तु प्रायेण—√गम् [=गतौ], √या [=प्रापणे], √ष्ठा<स्था [=गतिनिवृत्तौ]— प्रभृतिभिर्धातुभिः सहावलोक्यते। वैदिकभाषात आरभ्य प्रायेण सर्वासु प्राचीनभारोपीयार्य-

---

१. सामवि० ब्राह्मणम्–३।१।२-सायणभाष्यम्।
२. कुमारसम्भवम्–१।१–अरुणगिरिनाथव्याख्या।
३. धनञ्जयनाममाला–११५–अमरकीर्तिभाष्यम्।
४. गीतगोविन्दम्–२।१।
५. तै० सं०–३।१।११।
६. ऋ०सं०–३।२६।५–सायणभाष्यम्।
७. तदेव–३।३८।११, ताण्ड्यमहाब्रा०–५।८।५।
८. दशपाद्युणादिवृत्तिः–७।१२।

भाषासूपसर्गरूपेणैवास्य व्यवहारो दृष्टिपथमायाति। अत्रेदमपि कल्पयितुं प्रभवामो यद् यास्कपाणिन्योः प्रादिपाठे परिगणितः 'परि' इत्युपसर्गः 'उपरि' इत्युपसर्गस्यैवावशिष्टो लुप्तोकारः प्रतीयते। यतो हि ऋग्वेदे 'परि' शब्दः 'उपरि' शब्दस्यार्थे दृश्यते। तथा हि मन्त्रः—**'उत्तेस्तभ्नामि पृथिवीं त्वत्परीमं लोगं निदधन्मो अहं रिषम्'**[1] इति। व्याख्यातश्च मन्त्रोऽयं स्कन्दस्वामिना—'त्वत्परि=तवास्थिकुम्भस्य च तवोपरि। उपरिशब्दस्य च 'उकारलोपः' इति। अन्यत्रापि ऋग्वेदे लुप्तोकारावशिष्टः 'परि' शब्दः 'उपरि' शब्दार्थमभिव्यनक्ति। तथा च मन्त्रः—

**यं कुमार प्रावर्तयो रथं विप्रेभ्यस्परि।**
**तं सामानुप्रावर्तत समितो नाव्याहितम्॥**[2]

व्याख्याति च मन्त्रममुं स्कन्दस्वामी—'विप्रेभ्यस्परि, विप्रेभ्यः=मेधाविभ्यः, परि= उपरीत्यर्थः। उपरिशब्दस्य च उकारलोपः' इति।

किं बहुना, 'उपरः' इति प्रयोगोऽपि 'उपरि' शब्दस्यार्थेऽवलोक्यते ऋग्वेदे। तथा च मन्त्रः—**'आपश्चिदस्य वि नशन्त्यर्थं सूरश्च मर्क उपरो बभूवान्'**[3] इति। व्याख्यातश्च मन्त्रोऽयं स्कन्दस्वामिना—'उपरो बभूवान् = उपरि सदृशो भवन् मेघ इव शीघ्रगतिः सन्नित्यर्थः' इति। एभिः श्रुतिप्रमाणैः प्रतीयते यत् 'उपरः', 'परि' इत्यनयोर्विकासः 'उपरि' शब्दादेवाभूत्। व्युत्पत्त्याऽप्यस्य विकासः—'उपरि > उपरः, उपरि > परि = ऊर्ध्वमित्यर्थेऽवलोकनीयः। भारोपीयप्राचीनार्वाचीनार्यभाषाभिरप्यस्य संवादोऽवलोक्यते[4]—'उपरि > अवे० उपैरि > ग्री० उप्पइ > लै० सुपर > गाथि० उफ़र > प्रा० जर्मन-अबर > न० जर्मन-उबर > एंग्लोसैक्सन—अफ़र > अंग्रेजी-ओवर = ऊर्ध्वमित्यर्थः' इति।

आधुनिकभारतीयभाषास्वप्यस्य संवादो दृश्यते[5]—'उपरि > प्रा० उप्परि > उवरि > ओवरि > वोरि > वरि, उपरि > मरा० हुपरि > हिन्दी-ऊपर' इति। सन्दर्भाणामेतेषां तुलाबोधकेनानुसन्धानेन प्रतिभाति यत् 'परि' इत्युपसर्गः 'उपरि' इति वैदिकोपसर्गस्यैव लुप्तोकारावशिष्टः सन्नर्वाक्कालिकसंस्कृतभाषायां लब्धप्रसर इति।

---

१. ऋ० सं०—१०।१८।१३—स्कन्दस्वामिभाष्यम्।
२. तदेव—१०।१३५।४—स्कन्दस्वामिभाष्यम्।
३. तदेव—१०।२७।३०।
४. वैदिक-ग्रामर पृ० ३५०, संस्कृत लैंग्वेज—पृ० ३४४, संस्कृत डिक्शनरी—पृ० ७०७, कम्प० डिक्ट० आफ नेपाली लैंग्वेज—पृ० ३९७, संस्कृत सिन्टेक्स—पृ० ११५।
५. प्राकृतप्रकाशः—पृ० १३७, प्राकृतशब्दानुशासनम्—पृ० २७५, देशीनाममाला—पृ० १६१, सेतुबन्धकाव्यम्—८।७५, कुमारपालचरितम्—१।१३, प्राकृतमणिदीपः—पृ० ३५०, मृच्छकटिकम्—पृ० ७६, मराठीव्युत्पत्तिकोशः—पृ० १०३।

(९) दुर् [=प्रातिलोम्ये]

'दुर्' इत्युपसर्गस्यापि रेफस्य लोपो दृश्यते ऋग्वेदे। तथा च मन्त्रः—**'रथोऽस्माकं शंसो अभ्यस्तु दूढचः'**[1] इति। 'दूढ्यः' इत्यत्र दुरो रेफलोपोऽवलोकनीयः—'दुर्+धियः >दुर्धियः >दूढ्यः =पापबुद्धीनित्यर्थः' इति। सभाजयति च प्रतिपादनमिदं स्कन्दस्वामी—'दूढ्यः <दुर्धियः =पापबुद्धीनित्यर्थः'। एवमेव[2]—'दूलभः <दुर्+ √लभ [=प्राप्तौ] >दुर्लभः >दूलभः >प्रा० दुलह >हिन्दी-दुलहा=अनायासेनासुलभः इत्यर्थः' इति प्रयोगेऽपि दुरो रेफलोपोऽवलोक्यते।

(१०) निस् [=प्रातिलोम्ये]।

'निस्' इत्युपसर्गस्यादिलोपोऽवलोक्यते शुक्लयजुर्वेदे। तथा च श्रुतिः—**'इष्कृतिर्नाम वो माताथो यूयं स्थ निष्कृतिः। सीराः पतत्रिणीः स्थ न यदामयति निष्कृथ'**[3] इति। मन्त्रेऽस्मिन् 'निसः' नकारलोपो दृष्टः। उपापादि च मन्त्रोऽयं महीधराचार्येण—'हे ओषधयः। वो =युष्माकम्, इष्कृतिर्नाम =निष्कृतिनाम्नी माता। निष्करोति व्याधिं नाशयतीति निष्कृतिः। 'निशब्दो बहुलम्' (शुक्लय० प्रा०–३।१।१७) इति प्रातिशाख्यसूत्रेणोपसर्गैकदेशनकारलोप इति। उव्वटाचार्यस्याप्ययमेवाभिप्रायः। एवं व्युत्पत्त्याऽपि—'निस्+ √कृ [=करणे] >निष्कृतिः >इष्कृतिः =व्याध्यादेर्विनाशयित्री' इति रूपसिद्धिः।

(११) सम् [=साहित्ये]।

'सम्' इति साहित्यार्थकोपसर्गस्यापि मकारलोपो दृश्यते। उक्तं च भोजराजेन--

**वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।**
**हितादिषु समो म्लोपं पाठं चात्र श्रदन्तरोः॥**[4]

'सम्' इत्युपसर्गः साहित्यवाचीति दृश्यते ऋग्वेदे—

**समानी व आकूतिः समाना हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति॥**[5] इति।

समो मकारलोपस्त्वर्वाक्कालिकसंस्कृतभाषायां दृष्टचरो भवति। तथा चाभिज्ञानशाकुन्तले—'जयतु जयतु देवः। एते खलु हिमगिरेरुपत्यकारण्यवासिनः काश्यपसंदेशमादाय सस्त्रीकास्तपस्विनः सम्प्राप्ताः'[6] इति। व्याख्याति च वाक्यमिदं राघवभट्टः—'सस्त्रीकाः=स्त्रिया सहिताः। समो म्लोपमत्र' इति। एवं व्युत्पत्त्याऽपि—सम्+स्त्रीकाः >समृस्त्रीकाः >सस्त्रीकाः' इति रूपसिद्धिः।

---

१. ऋ० सं०–१।९४।८—स्कन्दभाष्यम्।
२. तदेव–२।३८।८—सायणभाष्यम्।
३. शुक्लयजुर्वेदः–१२।८३–महीधरभाष्यम्।
४. श्रृङ्गारप्रकाशः–१, पृ० १६।
५. ऋ० सं०–१०।१९१।४–स्कन्दभाष्यम्।
६. अभिज्ञानशाकुन्तलम्–५, पृ० १६१।

इत्थं पुरस्तात् केचनैतादृशा उपसर्गा विमृष्टाः, येषु कुत्रचिदाद्यक्षरस्य लोपो दृश्यते, कुत्रचिच्चान्त्याक्षरस्य। अक्षराणां लोप एव भाषाया निरुक्तिप्रसङ्गे वर्णनाशादिशब्देनाभिहितः। प्रयोगाणामेतेषां समीक्षणेन निश्चेतुं शक्यते यद् भाषाया ऐतिहासिकपरिवर्तने देशकालप्रभावाच्छब्देषु विकृतिर्हानिर्वा भवत्येव; किन्तु न तेनार्थक्षतिर्भवति। एतत्तु भवितुं शक्यत एव यद् विकारमापन्नेन केनचिच्छब्देनान्यार्थसम्पादनं नाम, किन्त्वर्थविहीनः शब्दग्रामो न भवति। अत्रेदमपि विचारणीयमस्ति यद् यासां भाषाणां कालिकदृष्ट्याऽतिविस्तीर्ण इतिहासो भवति, तासु तासु भाषासु निश्चितरूपेण शब्दप्रतिमायाः कुत्रचिदुपचयो भवति, कुत्रचिदपचयो भवति, कुत्रचिच्च वर्णविपर्ययेण शब्दानां रूपपरिवर्तनञ्चापि। यतो हि भाषाया लम्बायमान इतिहासे कालस्य, देशस्य, तत्तज्जातीनाम्, तत्तद्भाषाणां च प्रभावस्त्वपरिहार्यत्वेन स्वीक्रियत एवाधुनिकभाषाशास्त्रमर्मज्ञैः।

संस्कृतभाषाया इतिहासस्त्वविच्छिन्नरूपेणातिविशालतामातनोति। अतोऽस्यां भाषायां तासां तासां परिस्थितीनां प्रभावस्तु सञ्जात एव। अत्रावधेयं वर्तते यदयं शब्दानामुपचयापचयः सहस्राब्दीपर्यन्तमविच्छिन्नरूपेण व्यवह्रियमाणासु भाषासु सङ्घटते। अतिविस्तृतकालसापेक्षमिदं परिवर्तनम्। संवादयति चेदं तथ्यं बरोमहोदयः[1]।

**उपसर्गेषु वर्णागमाः**

उपसर्गानाधारीकृत्य वर्णागमस्योदाहरणान्यपि दृश्यन्ते वैदिकभाषायाम्। यथोपसर्गानवलम्ब्याक्षरलोपवर्णविकारादयश्चावलोक्यन्ते, तथैव वर्णागमस्यापि दृष्टान्तानि दृष्टचराणि। अत्रोपरिष्टात् कानिचनोदुदाहरणानि प्रस्तूयन्ते—

(क) **सुविताय** [=यज्ञकर्मणे]।

दृश्यते हि ऋग्वेद उपसर्गेषु वर्णागमस्योदाहरणानि। 'सु' इत्युपसर्गमधिकृत्य 'सुविताय' इति प्रयोगे सोरुपसर्गसाकाङ्क्ष्येणोवङादेशश्छान्दसत्वाद्विधीयते। तथा च मन्त्रः—

'आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन[2]' इति।

विशदयति च मन्त्रममुं स्कन्दस्वामी—'सुविताय—√इ[=गतौ] अधिकरणे क्तः प्रत्ययः। शोभनं गम्यते यस्मिन्, तत् सुवितम्=यज्ञकर्म। छान्दसत्वादुपसर्गस्यापि सोरुवङादेशः' इति। एवं व्युत्पत्त्याऽस्य—सु+√इ(ण्)[=गतौ]+त>सु-इतः>सुविताय' इति रूपसिद्धिः।

---

१. दि संस्कृत लैंग्वेज—पृ० ४०। २. ऋ० सं०—५।५७।१—स्कन्दभाष्यम्।

(ख) **सूनरी** [=शोभनमनुष्या]।

'सुन्दरः' 'सुन्दरी' इति प्रयोगयोरपि दकारागमोऽप्युपसर्गमाधारीकृत्यैव सञ्जातः। वैदिकभाषायाः प्राथमिके समये 'सूनरः' 'सूनरी' इति प्रयोगावेवोपलभ्येते। सभाजयति च श्रुतिः—

**प्रत्यु अदर्श्यायत्युच्छन्ती दुहिता दिवः।**
**अपो महि व्ययति चक्षसे तमो ज्योतिष्कृणोति सूनरी ॥**[1]

व्याख्यातश्च सायणाचार्येण—'एवं कृत्वा सूनरी = जनानां सुष्ठु नेत्र्युषा ज्योतिः = प्रकाशं कृणोति = करोति' इति। एवमेव तैत्तिरीयसंहितायामपि 'सूनरी' शब्दः शोभनमनुष्येत्यर्थे प्रयुक्तो दृश्यते। तद्यथा—'हे सरस्वती ! त्वं सूनर्यसि = मनुष्याणां सुखहेतुत्वात् शोभनमनुष्या असीत्यर्थः[2]' इति। इमावेव 'सुनरी' 'सूनरः' शब्दावर्वाक्कालिकसंस्कृतभाषायां 'सुन्दरी', 'सुन्दरः' इति रूपमलभताम्। प्रयुनक्ति च महाकविकालिदासः—

**सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन।**
**सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥**[3] इति

अत्र सौन्दर्यशब्दस्य निष्पत्तिर्दकारागमेनैव सञ्जाता। एवम्—'सु + नरः > सुनरः > सूनरः > सुन्दरः' इति रूपसिद्धिः। तैत्तिरीयसंहिताभाष्यकारेण भट्टभास्करेणोक्तं यत् 'सूनरः' इति शब्द उपसर्गस्य दकारागमश्छान्दसः।

(ग) **अपुवायते** [ = पूतीभवतीत्यर्थः]।

'अप' इत्युपसर्गोऽप्यक्षरागममनुभवति वैदिकभाषायाम्। तैत्तिरीयसंहितायां 'अपुवायते' इति प्रयोगस्योपलब्धिर्भवति। तथा च मन्त्रः—'**एवास्यापुवायते यन्मीयते तदेवास्यैतेनाप्यायययत्यातुभ्यमिन्द्रः**[4]' इति। मन्त्रोऽयं व्याक्रियते भट्टभास्करेण—'एतेन चाप्यायनेन यदस्य सोमस्य अपुवायते = पूतं भवति। अपशब्दस्य छान्दसो वर्णविकार उकारान्तो वा उपसर्गसधर्माशब्दः। तत्पूर्वकश्च सकर्मको वातिः। वातेः कर्मणि कर्त्तरि वा लकारः। 'अचः कर्तृयकि' इत्यस्य पाक्षिकत्वाद् यक्स्वरः' इति। एवं व्युत्पत्त्यापि—'अप = √वे(ञ्) [ = तन्तुसन्ताने] + य > अपवायः > अपुवायते = पूतीभवतीत्यर्थः' इति रूपनिष्पत्तिः। अत्र भट्टभास्करेणोक्तं यद् 'अपु' इति उपसर्गसधर्मा कश्चिच्छब्दः। वस्तुतस्त्वन्येषां प्रयोगाणामिवात्रापि 'उ'-कारागम एव।

---

१. ऋ० सं०–७।८१।१–सायणभाष्यम्। २. तै० सं०–१।६।३–भट्टभास्करभाष्यम्।
३. कुमारसम्भवम्–१।४९–अरुणगिरिनाथव्याख्या। ४. तै० सं०–६।२।२।

एवमत्र पुरस्तादुपसर्गानाधारीकृत्य सञ्जातानां केषाञ्चन वर्णागमानां दृष्टान्तानि प्रस्तुतानि। वर्णागमस्य परम्परेयं प्रमाणयति निपातोपसर्गाणां पदस्वातन्त्र्यमर्थ-स्वातन्त्र्यञ्च; यतो ह्याधारत्वेन स एव शब्दग्रामोऽधिक्रियते, यः स्वाधीनार्थको भवति।

**उपसर्गेषु वर्णविकारः**

यथा नामाख्यातानाधारीकृत्य वर्णागमा भवन्ति, तथैव निपातोपसर्गानप्या-सञ्जनेन वर्णागमाः सञ्जायन्ते। एवमेव वर्णविकारादयोऽपि दृश्यन्ते। उपसर्गनिपातान-धिकृत्य सङ्घटमानानां वर्णागम-वर्णविपर्यय-वर्णविकार-वर्णनाशानां भाषाशास्त्रीय-गवेषणेनेदं स्वयमेव सिद्ध्यति यत् किलोपसर्गा निपाताश्च नामाख्यातानिव स्वाधीना-र्थका आसन्। ऐतिहासिकपदविज्ञानस्य विकासदृशा वर्णागमादयः प्रख्यापयन्ति वैदिकभाषोपरि लोकभाषाप्रभावः, आहोस्वित् प्राकृतभाषाप्रभावः।

वस्तुतो यस्मिन् कस्मिन्नपि काले द्विविधा भाषा प्रचलति। एका खलु शास्त्रीया भाषा भवति, अपरा लोकभाषा। भारतीयेतिहासप्रवाहे कदाचिदप्येतादृशः समयो नासीत्, यस्मिन् एकैव भाषा मनीषिभिः, प्राकृतैश्च निर्विशेषतया व्यवह्रियमाणा भवेत्। व्यवहारेऽपि बुद्धिजीविनोऽन्येन पथा गच्छन्ति, प्राकृताश्चान्येन। अतो वैदिकभाषा-समयेऽपि काचित् प्राकृतमयीभाषाऽऽसीत्, यस्याः कौटुम्बिकः स्वाभाविकश्च प्रभावो वैदिकभाषायामवलोक्यते। प्रमाणयति च नाट्यशास्त्रकारः—

**हिमवत्सिन्धुसौवीरान् ये जनाः समुपाश्रिताः।**
**उकारबहुलां तज्ज्ञस्तेषु भाषां प्रयोजयेत्॥**
**त्रिविधं तच्च विज्ञेयं नाट्ययोगे समासतः।**
**समानशब्दं विभ्रष्टं देशीगतमथापि च॥**[1] इति।

भाषासु कौटुम्बिको विनिमयस्तु साहजिक इति भाषाविज्ञानविदोऽङ्गीकुर्वन्त्येव।

अत्रावस्तात् कानिचन वर्णविकारस्योद्धरणानि प्रस्तूयन्ते, यैः सिद्धान्तस्यास्य संवादो भविष्यति—

(क) **कवारिः**<कु+अरिः>कवारिः=कुत्सितारिरित्यर्थः। 'कु' इत्युपसर्गस्य वर्णविकारेण 'कव' इति रूपमुपलभ्यते। तथा च श्रुतिः—**'मरुत्वन्तं वृषभं वावृधानम-कवारिं दिव्यं शासमिन्द्रम्'**[2] इति। व्याख्यातश्च मन्त्रोऽयं भट्टभास्करेण—'अकवारिम्= अकुत्सितारिम्। कुत्सिता अरयो यस्य स कवारिः। कुशब्दस्योकारोपसर्जनो गुणश्छान्दसः, ततो नञ् समासः' इति। अव कोः 'उ'-कारे विकृतिर्दृश्यत एव।

(ख) **'निलायत**<निर्+√अय [=गतौ]>निलायत=निरगच्छत् इत्यर्थः'।

'निर्' इत्युपसर्गस्य रेफस्तु प्रायेण वैदिकभाषायाम्, क्वाचित्को लौकिकभाषायां च लत्वं भजते। अत एवोच्यते—'र-लयोरभेदः' इति। दृश्यते हि रेफध्वनिरुत्तरोत्तरं

१. नाट्यशास्त्रम्–१७।३२, १७।३। २. तै० सं०–१।४।१७—भट्टभास्करभाष्यम्।

लत्वं भजते। बहुत्र तु रेफध्वनिरूषिताः शब्दग्रामाः पाणिनिमनु लत्वमात्रावशेषाः सञ्जाताः। यथा—'अरम्[1] > अलम्', 'शुक्रवेदः[2] > शुक्लवेदः', 'रघुः[3] > लघुः', रघ्वी[4] > लघ्वी' इत्यादि। एवमेव 'निरः' रेफोऽपि लत्वरूपरूषितोऽवलोक्यते। तथा हि मन्त्रः—**'यज्ञो देवेभ्यो निलायत विष्णू रूपं कृत्वा स पृथिवीं प्राविशत्'**[5] इति। व्याकरोति च मन्त्रमिमं भट्टभास्करः—'निलायत = निरगच्छत्। अयतेर्लुङि 'उपसर्गस्यायतौ'[6] इति लत्वम्।

(ग) **पलायितः** < परा + √अय [= गतौ] > पलायितः = शीघ्रं गत इत्यर्थः।

'परा' इत्युपसर्गेऽपि वर्णविकारोऽवलोक्यते। अत्रापि रेफध्वनिर्लत्वमेति। प्रयुक्तं च तैत्तिरीयसंहितायाम्—**'पलायिष्यमाणाय स्वाहा, पलायिताय स्वाहा'**[7] इति। व्याख्यातश्च मन्त्रोऽयं भट्टभास्करेण—'पलायिताय = शीघ्रं देवसकाशं प्राप्ताय। अय गतौ 'उपसर्गस्यायतौ' इति लत्वम् इति।

(घ) **पुल्वघः** < पुरु + अघः > पुर्वघः > पुल्वघः = बहूनां भौमरसानामत्ता इत्यर्थः।

बह्वर्थको 'पुरु' इति वैदिक उपसर्गोऽपि विकृतिमान् भवति। अत्रापि रेफध्वनौ प्राकृतप्रभावो दृष्टचरः। तथा च मन्त्रः—**'क्व स्य पुल्वघो मृगः'**[8] इति। मन्त्रोऽयं व्याचक्षाणेन सायणाचार्येणावोचि यत्—'पुरूणाम् = बहूनां भौमरसानामत्ता मृगः क्व' इति। अन्यत्रापि ऋग्वेद[9] एव विकृतिमापन्नस्य 'पुरु' इत्युपसर्गस्य व्याख्यानं सायणेनेदृशमेव कृतम्। आचार्ययास्केनापि[10]—'पुरु + अघः > पुर्वघः > पुल्वघः = बह्वादी'—व्याख्यातोऽयमुपसर्गः।

प्रायेणैव दृश्यते संस्कृतभाषाया रेफध्वनिः प्राकृतभाषायां लत्वमाप्नोति। अभिज्ञानशाकुन्तल एव 'पुरु' इत्युपसर्गेण निष्पन्नो पौरवशब्दः 'पोलव' इति रूपेणोपलभ्यते। तद्यथा—'अज्जउत्त ! संसइदे दाणिं ण एसो समुदाहारो। पोलव ! ण जुत्तं णाम[11]....' इति। एवम्—'पुरुः > पौरवः > पोलवः' इति रूपनिष्पत्तिरवलोकनीयेति। अवेस्ताभाषायामपि 'पुरु' इत्युपसर्गस्य रेफध्वनिर्लत्वमवाप्नोति। तद्यथा—'पोउ॑ल-वचाँम् < पुरुवचसाम्'[12] इति। एवं तुलाबोधकेनानुसन्धानेनापि भाषाया ऐतिहासिकसंस्रवे वैदिको रेफध्वनिर्लत्वमापद्यमान एवावलोक्यते।

---

१. ऋ० सं०—१।६६।३, ५।४४।८, १०।९।३। २. तदेव—१०।१८७।५।
३. तदेव—१०।६१।१६। ४. तदेव—६।६३।९।
५. तै० सं०—६।२।४—भट्टभास्करभाष्यम्। ६. अष्टाध्यायी—८।२।१९।
७. तै० सं०—७।१।१९। ८. ऋ० सं०—१०।८६।२२—सायणभाष्यम्।
९. तदेव—१।१७९।५। १०. निरुक्तम्—१।३।
११. अभिज्ञानशाकुन्तलम्—५, पृ० १७६। १२. अवेस्ता—पृ० ५९।

(ङ) **प्लक्षः** < प्र + √क्षर [= सञ्चलने] > प्रक्षरः > प्रक्षः > प्लक्षः = पिप्पलः ।

'प्र' इत्युपसर्गोऽपि 'प्लक्षः' इत्यत्र विकृतिमधिगतवान् । व्याख्यायते च क्षीरस्वामिनाऽयं शब्दः—'प्रक्षरत्यधो[1]गच्छति मूलैरिति प्लक्षः' इति । सर्वानन्दस्याप्ययमेवाशयः—'प्रक्षरति प्लक्षः । र-लयोरेकत्वस्मरणम्'[2] इति । पिप्पलाभिधेयः प्लक्षशब्द उपसर्गबलादेव संज्ञात्वमापन्नः । इत्थं दृश्यते हि निपातोपसर्गोपादानकारणभूताः संज्ञाशब्दाः ।

(च) **बेकनाटान्** < वि + एकः + √नट = [अवस्यन्दने] > व्येकनाटाः > वेकनाटाः > बेकनाटाः = वार्धुषिका वृद्धिजीविनो वा ।

'वि' इत्ययमुपसर्गो द्विसंख्यार्थेऽपि प्रयुक्तः संस्कृतभाषायाम् । 'विंशतिः' इत्यत्रापि 'वि' इत्युपसर्गो द्विसंख्यार्थे प्रयुक्तः । शतशब्दोऽपि दशसंख्यार्थे प्रयुक्तो दृश्यते । एवं द्विशतम् = विंशतिरिति संख्याशब्दनिष्पत्तिः । 'बेकनाटाः' इत्यत्रापि 'वि' इत्युपसर्ग एव स्वरव्यञ्जनव्यावृत्त्याऽर्थाद् विकृत्या 'बे' भावमापेदे । 'बेकनाटाः' इति शब्दो वेदकालिकवार्धुषिकाणां सामाजिकं व्यवहारं प्रस्तौति । अमीषां वार्धुषिकाणामेतादृशी वृत्तिरासीद्, यया कस्मैश्चिद् ऋणिकाय एकं कार्षापणं दत्त्वा, पुनस्तस्माद् द्वौ कार्षापणौ गृह्णन्ति स्म, अत एतेषां संज्ञैव 'बेकनाटाः' इति प्रथिता । एतेन शब्देन तात्कालिकी सामाजिकी व्यवस्थाऽपि सूच्यते । एतादृशा बेकनाटाः = वृद्धिजीविनस्तादीत्नेऽपि समये हेयार्हाः, तिरस्कारार्हा वाऽऽसन् । तथा च मन्त्रः—**'इन्द्रो विश्वान् बेकनाटान् अहर्दृश उत क्रत्वा पणींरभि'**[3] इति ।

व्याख्यातश्च च मन्त्रोऽयं सायणाचार्येण–'ईदृशेन द्विविधेन बलेन इन्द्रः विश्वान् = सर्वान्, बेकनाटान् = वृद्धिजीविनो वार्धुषिकान् वा । अनेन कुसीदिनो वृद्धिजीविनो वार्धुषिका उच्यन्ते । कथं तद्व्युत्पत्तिः ? 'बे' इत्ययमपभ्रंशो द्विशब्दार्थे । एकं कार्षापणमृणिकाय प्रयच्छन् द्वौ मह्यं दातव्य इति नयेन दर्शयन्ति, ततो द्विशब्देनैकशब्देन च नाटयन्तीति बेकनाटाः । तान् अहर्दृशः । अहःशब्देन तद्व्युत्पादक आदित्याभिधेयो भवति । तं पश्यन्तीत्यहर्दृशः । ननु सर्वे सूर्यं पश्यन्ति कोऽत्रातिशय इत्युच्यते ? इहैव जन्मनि सूर्यं पश्यन्ति, न जन्मान्तरे । लुब्धका अयष्टारोऽन्धे तमसि मज्जन्ति । ईदृशान् पणीन् = पणिसदृशान् शूद्रकल्पान्' इति । सायणाचार्यस्यैतेन व्याख्योनन सिद्ध्यति यद् वेरुपसर्ग एव प्राकृतभावापन्नेन विकृतः सन् 'बे' इति रूपप्रतिमामवाप्नोत् । भट्टभास्करेणापि[4] समर्थितं सायणाचार्यस्य व्याख्यानम् । स वक्ति यत्—'वे-रुपसर्गस्य

---

१. नामलिङ्गानुशासनम्–२।४।३२–क्षीरस्वामिव्याख्या ।

२. तदेव–२।४।३२–सर्वानन्दव्याख्या ।

३. ऋ० सं०–८।६६।१०–सायणभाष्यम् ।

४. तै० सं० ३।४।७ ।

स्वरव्यञ्जनयोर्व्यावृत्तिरिति'। दुर्गाचार्येणाप्युपापादि—**'बे' इत्यपभ्रंशो द्विशब्दार्थे**[१]' इति। मन्ये यत् फारसीभाषायां प्रयुज्यमानः 'बे' इत्युपसर्गोऽपि संस्कृतभाषात एव तत्र गृहीतः।

(छ) **नरकम्** < नि + √ ऋ [ = गतौ] > न्यरकम् > नरकम् = नीचैर्गमनम् = अधमलोकगमनमित्यर्थः। 'नि' इत्युपसर्गो 'नरकम्' इत्यत्र विकृतिमाप्नोति। समर्थ्यते च महेश्वराचार्यः—**'नरकम् = न्यरकम्, नीचैः अर्यते = गम्यते यस्मिंस्तन्नरकम्। नरकलोको ह्यधमस्तेन तस्मिन्नीचैर्गम्यते'**[२] इति। एवं नरकशब्दस्यैतिहासिको विकासः 'नि' इत्युपसर्गेणाथ च √ ऋ [ = गतौ] इति धातुसंश्लेषणेनैवाभूत्। एवमेव—'स्वर्गम्' इति शब्दोऽपि—**'सु + √ ऋ [ = गतौ] > सुवर्गम् > स्वर्गम् > हिन्दी-सरग = ऊर्ध्वगमनम्'** इति—उपसर्गविकारस्योदाहरणम्। व्याख्यातं च भट्टभास्करेण तैत्तिरीयसंहितायाम्—**'सुवर्गम् = स्वर्गमित्यर्थः'**[३] इति।

अत्र पुरस्तात् केषाञ्चन विकारजुषामुपसर्गाणामैतिहासिको विकासक्रमो विवेचितः। पदविज्ञानदृष्ट्यैते वर्णागम-वर्णविपर्यय-वर्णविकार-वर्णनाशवन्तो निपातोपसर्गा भाषाया धारावाहिकसंस्रवस्येतिवृत्तं प्रख्यापयन्ति। यदा कस्मिंश्चिदपि भूभागे काचिदपि भाषैतिहासिकायामे सुदीर्घकालपर्यन्तं विद्वद्भिरासेव्यते, तदा तत्समनन्तरमेव लोकमानसैरासेव्यमानैका लोकभाषाऽपि विवृद्धिमाप्नोति। अनयोः शास्त्रीयलोकभाषयोरन्योन्यं पदविनिमयोऽपि साहजिक एव भवति। विनिमयादस्मादेवातिप्राचीना शास्त्रभाषा कुत्रचित् प्राकृतभावापन्ना कुत्रचिच्च लोकभाषाऽपि शास्त्रीयभाषात्वमापन्ना दरीदृश्यते। उपसर्गेषु वर्णागम-वर्णविपर्यय-वर्णविकार-वर्णनाशादयोऽपि उभयोर्भाषयोर्विनिमयाधीना एव। पर्यवेक्षणेनानेन सिद्धान्तितुं शक्यते यद् वैदिकभाषासरित्प्रवाहस्य समानकाल एव लौकिकभाषासरितः, अथवा प्राकृतभाषास्रोतोवहायाः स्थितिरासीत्। अन्योन्यं भावयन्त्योरनयोः कौटुम्बिकप्रभावेणैव पदेषूपचयापचयौ सङ्घटितौ। अत्रावस्तात् पञ्चमस्य निरुक्तलक्षणस्यार्थाद् **'धातोस्तदर्थातिशयेन योगः'** इति लक्षणस्य विषये काचिद् गवेषणा विधास्यते, यया ऐतिहासिकपदविज्ञानस्य विकासः स्वयमेव स्फुटो भविष्यतीति।

**धातोस्तदर्थातिशयेन योगः**

संस्कृतभाषायां दृश्यन्ते हि पुरुरूपा एतादृशा धातवो येषामात्मलाभः स्वरूपलाभश्चोपसर्गासिञ्जनेनैव समजनि। यथा प्रथमे द्वितीये चाध्याये प्रतिपादितं यद् भाषाकलेवरे केन्द्रीयभूतास्तु धातव एव। यतो हि तेषु शब्दप्रतिमाया अर्थप्रतिमायाश्च प्रसवस्यातिसामर्थ्यमपोहति। धातुष्वयं रूपमूर्तेरर्थमूर्तेश्च विवर्तस्तेषामसाधारण-

---

१. निरुक्तम्–६।५।४–दुर्गव्याख्या।
२. तदेव–६।१।३–महेश्वरभाष्यम्।
३. तै० सं०–६।५।८।

तारल्याद् भवति। वस्तुतो भाषाया अप्येकं प्रसवविज्ञानं भवति, यस्मिन् कश्चिच्छब्दः कस्मिंश्चिच्छब्दे संश्लिष्यते, तत्र कस्यचन नवीनस्यार्थस्य प्रसवो भवति। कुत्रचित् क्वश्चिच्छब्दो विश्लिष्यते, तत्र कस्यचिदर्थस्य हानिर्भवति, कुत्रचिच्चातिप्रसवात् कश्चिच्छब्दो रिक्तार्थतां व्रजति, अतस्तत्रार्थप्रसवशक्तेः प्रतिबन्धकता सञ्जायते। यत्र तु विजातीययोर्द्वयोः शब्दयोः सन्धिर्भवति, तत्र कामं कस्यचिदत्युर्वरस्य तृतीयस्यार्थस्य प्रसवः स्वीकर्तव्यो भवति। पुरस्कुर्वन्ति च सिद्धान्तममुम्—यास्क[1]-पतञ्जलि[2]-कैयट[3]-उव्वट[4]-हरदत्त[5]-नागेश[6]-लेफेब्र[7]-ह्विट्नी[8]-वान्द्रियेज[9]-डेनिस्टन[10]—प्रभृतयः पाश्चात्त्य-पौरस्त्यभाषाशास्त्रविदः।

धातुष्वेकाऽपराऽप्यसाधारणी वैतसीवृत्तिरवलोक्यते यद् धातवः कुत्रचित् स्वरूपं सङ्कोचयन्ति, कुत्रचिद् विस्तारयन्ति, कुत्रचित् परिवर्तयन्ति, कुत्रचिद् विपरिणमन्ति, कुत्रचिच्च विवृद्धिं प्राप्नुवन्ति। धातुष्वेतादृशस्य रूपपरिवर्तनस्य कारणं तु तेषामतितारल्यमौर्वरत्वं चास्ति। अस्मादेव धातवोऽर्थरिक्ततामप्यनुभवन्ति। यस्य धातोर्वारं वारं भाषास्वभ्यासः क्रियते, अतस्तस्यार्थपरिवर्तनस्य सम्भावनाप्यधिकतरं सम्भाव्यते। येषां धातूनां तु रूपाणि स्थूलतराण्यवलोक्यन्ते संस्कृतवाङ्मये, मन्ये, तेषां रूपपरिवर्तनमर्थपरिवर्तनं च सञ्जातम्, अर्थात् पुनः संस्कृताः सङ्कुटिताश्च ते धातवो भवेयुरिति। मैक्समूलर[11]-वान्द्रियेज[12]-डेनिस्टन[13]-प्रभृतीनामयमेवाभिप्रयो यत् परस्परपर्यायिषु धातुषु यो जीवनसङ्घर्षो भवति, तस्मिन् तनुतरा भूयो भूयो व्यवह्रियमाणाश्च धातवः पराजिता भवन्ति। पुनस्तेषां धातूनामर्थोद्धरणायोत्तम्भनाय वोपसर्गास्तेषु संयोज्यन्ते, उत वा धातवोऽभ्यस्यन्ते, आहोस्विद् अनुबन्धा आसज्यन्ते।

यदा यदा हि गाढतरार्थविस्तरोऽपेक्ष्यते वाक्ये, तदा तदा शब्देषु कश्चित् सन्धिर्विधीयते। विवर्गीयाणां शब्दानां सन्धिस्त्वर्थात्मनो विस्तरायातिक्षमो भवति। मन्ये, कदाचिदियं प्रवृत्तिरासीद् भाषायां यदतिरिक्तार्थलाभाय धातवोऽभ्यस्यप्रयुज्यमाना आसन्, किन्तु सगोत्रीयाभ्यासेनार्थप्रवाहे तादृशी गतिर्नोत्पन्ना; अत एव धातूनां सगोत्रीयाभ्यासप्रयोगापेक्षया तेषु विवर्गीयाणां शब्दानामासञ्जनमङ्गीकृतमिति विज्ञायते। 'जिगमिषति'-'बुभुत्सति'-'जिघृक्षति'-'पिपठिषति'-'बोभवीति'-प्रभृतीनां सगोत्रीयाभ्यासजुषां क्रियारूपाणां विकासोऽनभ्यासक्रियार्थातिरिक्तार्थलब्धुकामायैवाथ

---

१. निरुक्तम्—१।२।
२. महाभाष्यम्—४।१।४८।
३. प्रदीपः—१।३।८६।
४. वाजसनेयिप्रा० ८।५२।
५. पदमञ्जरी—५।१।११८।
६. उद्द्योतः—६।१।१३५।
७. दि रेस एण्ड लैंग्वेज—पृ० २२।
८. लाइफ एण्ड ग्रोथ आफ लैंग्वेज—२९४-९५।
९. भाषा—पृ० १९९।
१०. दि ग्रीक पार्टिकल्स—पृ० २३२।
११. लेक्चर्स ऑन दि साइंस आफ लैंग्वेज—पृ० ३८१।
१२. भाषा—पृ० २३९।
१३. दि ग्रीक पार्टिकल्स—पृ० १३।

चार्थात्मनो विस्तराय प्रवृत्त इत्यनुमन्तुं शक्यते । अत एवोक्तं दुर्गाचार्येण—**'शब्दाभ्यासे यत्रान्यो विशेषो नास्ति, तत्रैवं विशेषमाचार्या मन्त्रार्थसतत्त्वविदो मन्यन्ते यदुतार्थ-भूयस्त्वमिति । नह्यकस्मात् स एव शब्दः पुनरभ्यस्यते । लोकेऽपि चैतत् दृष्टम्—शब्दाभ्यासेऽर्थभूयस्त्वमिति । यथा—अहो दर्शनीय ! अहो दर्शनीय ! इति गुणातिशये हि स्त्रियाः शब्दाभ्यासः । तस्मान्मन्त्रेष्वपि तद्वदेवेति न्याय्यम्[1]'** इति । महामुनियास्क[2]-माधवभट्ट[3]-स्कन्द[4]स्वामिप्रभृतीनामप्ययमेवाभिप्रायः । दुर्गासप्तशती-व्याख्यात्राऽऽचार्यशन्तनुनोक्तं यत्—अर्थप्रकर्षे, अतिशयकोपे, हर्षातिरेके, स्वप्नप्रलापे, दैन्याविष्करणे, भये, स्तुतौ, अभ्यासानुवादे च पदानां द्विस्त्रिरुक्तिर्न दुष्यति । तथा हि श्लोकः—

**प्रकर्षकोपहर्षेषु स्वप्नदैन्यभयेषु च ।**
**स्तुत्यभ्यासानुवादेषु पौनरुक्त्यं न दुष्यति ॥[5]**

कुन्दमालानाटकस्य व्याख्यात्रा जयचन्द्रेणाप्युक्तं यत्—

**विवादे विस्मये हर्षे खेदे दैन्येऽवधारणे ।**
**प्रसादने संभ्रमे वा द्विस्त्रिरुक्तिर्न दुष्यति ॥[6]** इति ।

अमीषामुद्धरणानां विमर्शनेनैतत् सिद्ध्यति यत् केवलेन नाम्ना, आख्यातेन, उपसर्गेण, निपातेन वा यदा विशिष्टार्थबुभुत्सा न शाम्यति, तदा पदेषु सगोत्रीयवीप्साऽथवाऽऽभीक्ष्ण्यं क्रियते । विशिष्टार्थबुभुत्सयैव यङन्ताः सन्नन्ताश्च धातवोऽभ्यस्य प्रयुज्यन्ते, किन्तु क्रियायाः साधारणोऽर्थस्तु ऋजुरेखीयो भवति । सजातीयः कश्चिदभ्यासोऽप्यर्थदृष्ट्या ऋजुरेखीयतां नापलपति । गच्छतिना केवलो गमनानुकूलव्यापारो बोध्यते, जिगमिषतिना तु क्रियायामधिकस्य गाढेच्छामात्रस्य वृद्धिर्जायते, किन्तु—'ऊर्ध्वं गच्छति', 'अधो गच्छति', 'तिर्यग्गच्छति', पश्चाद्गच्छति, नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण' इत्येवंविधानामुच्चावचार्थानां बोधस्तु ऋजुरेखीयया सगोत्रीयाभ्यासक्रियया न जायते । अत एवैतादृशानामर्थानां बुभुत्सया विजातीयशब्दास्कन्दनपरम्परा प्रवृत्ताऽऽसीदिति प्रतिभाति । द्रष्टव्याश्चास्मिन् विषये पतञ्जलि[7]-शौनक[8]-मैक्समूलरप्रभृतीनां[9] सिद्धान्ताः ।

एवं विधेयदलैर्यदा उच्चावचार्थाः = ऊर्ध्वानूर्ध्वप्राक्पश्चादुपर्यधस्तिर्यगन्तर्बहिराद्यर्था न बोध्यन्ते, तदा तेषूद्देश्यदलान्यर्थादुपसर्गनिपाताः संयोज्यन्ते ।

१. निरुक्तम्–१०।४२–दुर्गव्याख्या । २. तदेव–१०।४२ ।
३. ऋग्वेदानुक्रमणी–४।२।२६–२७ । ४. ऋ०स० ७।५।२१—स्कन्दभाष्यम् ।
५. दुर्गासप्तशती—५।१२–शन्तनुव्याख्या ।
६. कुन्दमाला—१, पृ० ८—जयचन्द्रसञ्जीविनीव्याख्या ।
७. महाभाष्यम्–५।३।५५ । ८. ऋक्प्रातिशाख्यम्–१२–९ ।
९. दि लेक्चर्स आन दि साइंस आफ़ लैंग्वेज़–पृ० २८८ ।

अनुप्राणयन्ति च प्रतिपादनमिदं पतञ्जलि[१]-जिनेन्द्रबुद्धि[२]-क्षीरस्वामि[३]-मैक्समूलर[४]-वान्द्रियैज[५]-डेनिस्टन[६]-गुणे[७]-प्रभृतयः शाब्दिकाः ।

अत्राधस्तात् केचनैतादृशा धातवः समुपस्थाप्यन्ते येषामर्थप्रतिष्ठोपसर्गास्कन्दनेनैव समजनि । भाषाया ऐतिहासिकविकासक्रमेऽधुनापि ते धातव उपसर्गमिथुनीभूता एव तस्याः श्रीः स्वीयार्थसौन्दर्येण समेधयन्ति । धातुक्रोडीकृता त उपसर्गा अधुनाऽपि धातुवदेव व्यवह्रियन्ते । अत एव बरोमहोदयो[८] वक्ति यत् संस्कृतभाषाया आख्यातानामुत्तरकालिको विकासः पदविज्ञानदृष्ट्यैतिहासिकदृशा च क्रियापदसामर्थ्यस्य दरिद्रतां सूचयति । सम्प्रत्यत्रावस्ताद् उपसर्गक्रोडीकृतानां धातूनां निदर्शनानि प्रस्तूयन्ते—

(क) √कुस्म[९] [ = कुत्सितस्मयने] कुस्मयते <कु + √ ष्मि <स्मि [ = ईषद्धसने] >कुस्मयते = कुत्सितस्मयनं करोतीत्यर्थः ।

(ख) √निवास[१०] [=आच्छादने] निवासयति < नि + √ वस [=उपसेवायाम्] > निवासयति = आच्छादयतीत्यर्थः ।

(ग) √वीर[११] [ = विक्रान्तौ] वीरयते <वि + √ईर [ = गतौ, कम्पने च] > वीरयते = विक्रमत इत्यर्थः ।

(घ) √व्यय [ = गतौ] व्ययति <वि + √अय [ = गतौ] >व्ययति = गच्छतीत्यर्थः ।

(ङ) √ष्वञ्ज[१२] [ = परिष्वङ्गे] स्वजते <सु + √अञ्ज [ = व्यक्तिमर्षणकान्तिगतिषु] >स्वञ्जते = परिष्वजत इत्यर्थः ।

(च) √ष्वद[१३] [ =आस्वादने] स्वदते <सु + √अद [ = भक्षणे] >स्वदते = आस्वादयतीत्यर्थः ।

(छ) √ष्वप्[१४] [ = शये] स्वपिति >सु + √आप् [ = व्याप्तौ] >स्वपिति = शेत इत्यर्थः ।

(ज) √संग्राम[१५] [ = युद्धे] संग्रामयते <सम् + √ग्राम [ = आमन्त्रणे] > संग्रामयते = युद्धयतीत्यर्थः ।

---

१. महाभाष्यम्—५।३।५ । २. न्यासः—६।३।१०९ ।
३. क्षीरतरङ्गिणी—चुरादिः—३२९ ।
४. लेक्चर्स आन दि साइंस आफ लैंग्वेज—पृ० ३२४ ।
५. भाषा—पृ० २३९ । ६. दि ग्रीक पार्टिकल्स—पृ० १७२ ।
७. तुलनात्मक भाषा-विज्ञान—पृ० १९३ । ८. दि संस्कृत लैंग्वेज—पृ० १४४ ।
९. सिद्धान्तकौमुदी—७।१।१०१ । १०. तदेव—७।१।१०१ ।
११. अथर्ववेदः—८।५।१—सायणभाष्यम्, सि० कौ०—७।४।९७ ।
१२. सि० कौ०—६।४।२५ । १३. तदेव—६।४।१२६ ।
१४. तदेव—७।३।९९ । १५. तदेव—७।३।३२, क्षीरतरङ्गिणी-चुरादिः—३२९ ।

एवंविधा अन्येऽपि धातवो भवेयुः, येषां रूपलाभ उपसर्गार्थसमर्पणादेव सञ्जातः। मन्ये यदुपसर्गसमर्पणेन प्रसूताः पुनः सङ्कुटिताश्चेमे धातवोऽपि स्वीयप्राथमिकव्यवहार उपसर्गविरहिता एव प्रयुज्यमाना आसन्। पर्युषिते च काले रिक्तार्थतां भजमाना इम उपसर्गक्रोडीकृताः। हिन्द्यादिभाषायामुपाधिरूपेण प्रयुज्यमानो 'झा'शब्दस्तस्य निदर्शनम्। एवम्—झा < उप + अधि + √इ [ = अध्ययने] > उपाध्यायः > उवज्झाअ[1] > उज्झाअ > ओझा > झा = उपाध्याय इत्यर्थः। अन्यास्वप्यद्यतनीयासु भारतीयभाषासु[2] सन्त्येतादृशानि क्रियापदानि येषां रूपमूर्तेरुदय उपसर्गास्कन्दनेनैव सञ्जातः। तद्यथा—

(क) बैठ < बइट्ठ < अवइट्ठ < उप + √विश् [ = प्रवेशने] > उपविशति = आसनं गृह्णातीत्यर्थः।

(ख) उपाड़े < उपारे < उप्पाडेइ < उत् + √पत [ = गतौ] > उत्पातयति = उपद्रवतीत्यर्थः।

(ग) सौंप < सउंप्प < संवप्प < सम् + √अर्प [ = प्रदाने] > समर्पयति = सम्प्रददातीत्यर्थः।

(घ) उतरे < उत् + √तॄ [ = प्लवनतरणयोः] > उत्तरति = पारं गच्छतीत्यर्थः।

(ङ) परवार < परवाल < प्र + √क्षल [ = शौचकर्मणि] > प्रक्षालयति = शुध्यतीत्यर्थः।

(च) सता < सताव < सताइ < सम् + √तप [ = सन्तापे] > सन्तापयति = क्लिश्नातीत्यर्थः।

(छ) परख < परिख < परि + √ईक्ष [ = दर्शने] > परीक्षते = सम्यग् अवलोकयतीत्यर्थः।

अमूनि क्रियापदान्याधुनिकभारतीयभाषासूपलभ्यन्ते। एतादृशानां क्रियापदानां संस्रवस्त्वाधुनिकभाषासु प्राकृत-पालि-अपभ्रंशमुखेन संस्कृतभाषातोऽवगन्तव्यः। पुरस्तात् प्रदर्शितेषु क्रियापदेषु धातूपसर्गयोर्भेद एव लयं प्राप्तः। पदविज्ञानदृशा पारिभाषिकपदनिर्माणदृशा चेदं धातूपसर्गयोर्मिथुनीभावं श्रेयसे कल्प्यते। धातूपसर्गयोरेतादृशो मिथुनीभावो वैदिककाल एव प्रवृत्तः। वैदिकसमय एव प्रवृत्तोऽयमपचयभाव उत्तरोत्तरं प्रथिमानमाप।

**धातूपसर्गास्कन्दनेनातिरिक्तधातूनां प्रसवः**

एवमेतादृशानां संयुक्तक्रियापदानाम् ऐतिहासिकगवेषणेन त्रयः पक्षाः पुरतः समायान्ति। प्रथमस्तावद् धातुसंख्याया असंख्येयत्वम्, द्वितीयोऽडादिसंश्लेषविधानम्,

---

१. मृच्छकटिकम्—४, पृ० ११६। २. भारत में आर्य और अनार्य—पृ० ६८।

तृतीयो धातुसाधनयोर्धातूपसर्गयोर्वा सम्बन्धः। धातुसंख्याया असंख्येयत्वे धातूपसर्गयोर्मिथुनीभावो महदन्तरायभूतः। यतो हि भाषायाः कालिकप्रवाहे शब्दानामर्था उपचयापचयधर्मिणो भवन्ति। प्रक्रियेयमाधुनिकभाषाशास्त्रविद्भिः—अर्थसङ्कोच-अर्थविकास-अर्थातिदेश-पदैर्व्यपदिश्यते। क्वचिद्धातूपसर्गाणामर्थसङ्कोचः, क्वचिदर्थविकासः, क्वचिच्चार्थातिदेशाश्च भवन्ति। अत एव भावप्रत्ययबोधकयोरनयोर्धातूपसर्गयोः सम्बन्धस्तु स्वाभाविक एव। यदा धातूपसर्गयोर्मिथ आस्कन्दनेनाभिनवस्य शब्दग्रामरूपातिरिक्तधातोः प्रसवो भवति, तदा कामं धातुसंख्याऽसंख्येयतामेति। अत एव दुर्गासप्तशतीव्याख्यात्राऽऽचार्यशन्तनुनोक्तम्—धातूनां पाठाः, व्याख्याश्च स्वैरिणो दृश्यन्ते। अतो धातुसंख्येयतां भगवान् एव जानात्विति—

**पाठा व्याख्याश्च धातूनां दृश्यन्ते च स्वैरिणः।**
**प्रयोग एव भगवांस्तानवस्थापयत्यपि ॥**[1] इति।

उपसर्गवृत्तौ भरतमल्लिकेनापि सङ्केतितं यद् धातुसंख्येयत्ता प्रयोगतः=कविरूढितः—समस्तं वाङ्मयं निरीक्ष्यावगन्तव्या—

**धातूपसर्गसंसर्गसम्भवा कतिचिन्मया।**
**प्रसिद्धा गदिताश्चार्था शेषा ज्ञेयाः प्रयोगतः ॥**[2] इति।

धातूपसर्गसंसर्गसम्भवानाम् अतिरिक्तधातूनामसंख्येयत्ता बृहद्देवताकृताचार्यशौनकेनाप्युद्घोषिता—

**धातूपसर्गावयवगुणशब्दाद्धधातुजम् ।**
**बह्वेकधातुजं वापि यदनिर्वाच्यलक्षणम् ॥**
**धातुजं धातुजाज्जातं समस्तार्थजमेव वा।**
**वाक्यजं व्यतिकीर्णं च निर्वाच्यं पञ्चधा पदम् ॥**[3] इति।

अमीषां सन्दर्भाणां तोलनात्मकेन पर्यवेक्षणेन स्वयमेवायाति यद् द्वयोर्निपातयोः, त्रयाणां वैकत्रासञ्जनेन यथा तेऽतिरिक्तनिपातरूपेण परिसंख्यायन्ते, अतस्तेषामियत्ता न भवति, तथैव धातूपसर्गसंश्लेषणेनापि पृथक् पृथग् अतिरिक्तधातुत्वेन गण्यन्ते। अतस्तेषामपीयत्तया परिसंख्यानं कर्तुं न पार्यते।

**अडादीनामसञ्जनम्**

उपसर्गाणां द्योतकतावादस्योद्भवे धातूपसर्गसंसर्गेणातिरिक्तधातूनां प्रसवोऽपि मुख्यो हेतुः। यतो हि धातूपसर्गसंश्लेषणेन प्रसूतानामतिरिक्तधातूनां लुङ्-लङादि-

१. दुर्गासप्तशती—८।४५—शान्तनवीव्याख्या।
२. उपसर्गवृत्तिः—भरतमल्लिककृता—डिस्क्रिप्टिव कैटेलाग आफ संस्कृत म्युनि० इन दि लाइब्रेरी आफ दि संस्कृत कालेज कलकत्ता—१९०४।
३. बृहद्देवता—२।१०५–६।

लकारेष्वडादीनां व्यवस्थाविधौ संयुक्ता धातवो सौविध्यकरा भवन्ति। अत एव महामतिना भर्तृहरिणोक्तम्—

**अडादीनां व्यवस्थार्थं पृथक्त्वेन विकल्पनम्।**
**धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः॥**[1] इति।

ऐतिहासिकपदविज्ञानदृष्ट्या भर्तृहरेः सिद्धान्योऽयमसैद्धान्तिकः प्रतिभाति। यतो हि वैदिकभाषायाम् ऋतेऽप्यडादीन् लुङ्लङादिवाचिका क्रिया बहुत्र दृष्टचरा। **'न माङ्योगे**[2]' इति सूत्रं कुर्वता पाणिनिना वैदिकभाषायाश्चित्रात्मकः प्रभावः स्वीकृतः।

श्रुतिसाहित्ये तु लुङ्-लङ्-लोडादिलकारनिष्पन्नेष्वाख्यातेषु माङ्निपातयोगे क्वचिदडादीनामभावः[3], क्वचिन्माङ्योगे[4] अटः स्थान उपसर्गाणां प्रयोगः, क्वचिद्[5] अट्-माङुभयोरभावे अटः स्थाने केवलमुपसर्गस्याख्यातपूर्वं संयोजनम्, क्वचिन्माङ्योगेऽप्यडादीनामागमः[6], क्वचिच्च[7] लुङ्-लङ्लकारयोर्माङभावेऽप्यडादयो न दृश्यन्ते। 'स्म' इति निपातयोगे तु वैदिकलौकिकोभयसाहित्ये लट्लकारेण भूतकालिकी क्रियाऽभिव्यज्यते। ऋग्वेदसंहितायां तु[8] 'स्म' इति निपातपर्यायत्वेन 'ईम्' इति निपातोऽवलोक्यते। 'ईम्' साहचर्येऽपि लट्लकारेण लुङ्लकारार्थो बोध्यते। एतेनायाति यत् 'स्म-ईम्' इत्युभावपि निपातौ लट्लकारार्थं लुङ्लकारार्थे विपर्यासकावास्ताम्। माङ्-निपातोऽयमुपसर्गाणामिव शुक्लयजुर्वेद[9] आख्यातपदमध्याहृत्य तेन सह सम्बद्धयमानोऽवलोक्यते। यथोपसर्गा आख्यातपदप्रयोगाभावेऽप्याख्यातपदस्याध्याहारं[10] कुर्वन्ति, आख्यातव्यवहितप्रयुक्ताः सन्त आख्यातेन सह संयुज्यमानाः, अन्वीयमानाश्चापि दृश्यन्ते, तद्वदेव माङ्निपातयोगेऽपि।

आख्यातपदव्यवहितोपसर्गपरम्परेयम् उत्तरकालिके साहित्येऽप्यवलोक्यते। तथा हि श्रीमद्भागते—**'तव परि ये चरन्त्यखिलसत्त्वनिकेततया**[11]' इति। व्याख्यायते च श्लोकोऽयं श्रीधरभट्टेन—'त्वां परि ये चरन्ति—छन्दसि व्यवहिताश्चेति यच्छब्देन व्यवधानमदोषः' इति। भागवतीयोऽयं सन्दर्भः क्रियापदव्यवहितपूर्वप्रयुक्तस्योपसर्गस्य निदर्शनम्। क्रियोत्तरमपि तत्रैवोपसर्गस्य व्यवहारोऽवलोक्यते—'यात्यति पारमध्वनः[12]'

---

१. वाक्यपदीयम्—२।१८०। २. अष्टाध्यायी—६।४।७४।
३. 'मो' इत्ययं निपातः प्रतिपेधार्थीयः पुरस्तादाख्यातस्य भवति, उव्वटः-शु० यजुर्वेदः—३।४६।
४. शु० य० ३।२१, ३।२०—महीधरभाष्यम्।
५. ऋ०सं० १।३९।९—स्कन्दभाष्यम्, छा०ब्रा०—२।५।१३।
६. छा०ब्रा० २।१।७—गुणविष्णुभाष्यम्, वा० रामायणम्—१।२।१५।
७. ऋ०सं० ६।४७।५—स्कन्दभाष्यम्।
८. ऋ०सं० १।६५।३—'वर्धन्ति ईम् = अवर्धयन्' इति (स्कन्दः)।
९. शु०य० ३।४६; १०. ताण्ड्यमहाब्रा ०५।८।५—सायणभाष्यम्।
११. भागवतम्—१०।८७।२७—श्रीधरव्याख्या; १२. तदेव—५।१३।१६—श्रीधरव्याख्या।

इति। श्रीधराचार्येणोक्तं यत्—'**अध्वनः पारम् अति याति**' इति। एवं हि वैदिक-वाङ्मयस्याथ च रामायण-महाभारत-भागवतादिग्रन्थानामनुसन्धानेन निश्चीयते यद् एतादृशेषु स्वतःप्रमाणभूतेष्वाकरग्रन्थेषु न हि दृश्यते दृढतराग्रहः क्रियापूर्वमड्-विधानस्य। स्वायत्तार्थानामुपसर्गाणामर्थसत्तास्वीकृत्यैवाख्याताव्यवहितपूर्वमड्विधान-विधावाचार्यैरेतादृशं शैथिल्यं पुरस्कृतम्। सत्याषाढश्रौतसूत्रे तु द्वयोरुपसर्गयोर्मध्य एव 'वा' इत्ययं निपातो व्यवहृतोऽवलोक्यते। तथा ह्युदाहरणम्—**कृष्णाजिनं प्रवाऽऽपयते**[1] इति। व्याख्यातश्च मन्त्रोऽयं गोपीनाथभट्टेन—'प्रवाऽऽपयत इत्यत्राऽऽपयत इति पदच्छेदः। 'व्यवहिताश्चेति' पाणिनिसूत्रेण मध्ये वाकारः। प्रवाऽऽपयते=प्राप्यते इत्यन्वयः' इति।

एवमेव महाभारतेऽपि भूयांस एतादृशा व्यवहारा दृश्यन्ते, यत्रोपसर्गेण व्यवहितोऽड् दृश्यते। तद्यथा—'**नासंभ्रमत्तदा पार्थस्तदस्य पुरुषानति**'[2] एति। व्याख्या-तश्च श्लोकोऽयं नीलकण्ठभट्टेन—'**असंभ्रमत्—उपसर्गात्पूर्वमार्षोऽट्**' इति। अन्यत्रापि पुनर्महाभारतकारेणैतादृशः प्रयोगः कृतः—'**कथमन्यैरनाचीर्णं नमुर्दारानविक्रमेत्**'[3] इति। व्याख्याति च नीलकण्ठः—'**अविक्रमेत्—उपसर्गात्पूर्वमार्षोऽट्**' इति। इमान्युद्धरणानि मिथ्यापयन्ति क्रियाऽव्यवहितपूर्वमड्विधानम्।

महाभारतस्तु भाषाप्रयोगदृष्ट्याऽतिवैविध्यपूर्णो महाग्रन्थः। वैदिकव्यवहारसदृश-स्तत्रापि क्रियापूर्वमुपसर्गप्रयोगेण 'अट्' बाध्यते। तथा च श्लोकः—'**ऋषयस्त्वपरे चैनं पुत्रवत् परिपालयन्**'[4] इति। व्याख्यातोऽयं सन्दर्भो नीलकण्ठेन—'**परिपालयन्—अडभाव आर्षः**' इति। एवमेव सभापर्वणि लुङ्लकारे अडागम उपसर्गेण बाध्यते—'**सरथान्सधनुष्कांश्चाप्यनुज्ञासिषमत्यहम्**'[5] इति। अस्मिन् सन्दर्भेऽपि नीलकण्ठभट्टेन '**अडभाव आर्षः**' इति व्याख्यायि।

एवमेव बहुत्र भागवतमहाभारतयोर्माङ्योगेऽप्यडागमोऽवलोक्यते[6]। तथा हि महाभारते—'**मा राज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद!**'[7] इति। विशदयति च श्लोकममुं नीलकण्ठाचार्यः—'राज्यश्रीर्माऽभूत्। छान्दसोऽडागमः' इति। एवं क्वचिद् एतादृशोऽपि प्रयोग ऋग्वेदसंहितायां समुपलभ्यते, यत्राडागमयुक्तो लङ्लकारो लट्-लकारार्थमभिधत्ते।[8]

---

१. सत्याषाढश्रौतसूत्रम् –१०।५।१८–गोपीनाथभट्टव्याख्या।
२. महाभारतम्—द्रोणप०१००।५।
३. तदेव–भविष्यप० ५।३३।
४. तदेव–आदिप०–१२०।३।
५. तदेव–सभाप०–८१।२८।
६. भागवतम्–४।१५।२२–श्रीधरीया व्याख्या।
७. म० भा०–आदिप० ८४।६४।
८. ऋ० सं० १।५४।१०।

अमीभिः सन्दर्भैः सिद्धयति यन्नायमट्कालबोधकः, लकारनियन्त्रकश्चासीत्, अपि त्वस्योपजनस्तु रूपभेदार्थं यादृक्षिक आसीत्। उपसर्गसंयोजन उपसर्गस्थिति-निर्धारणेऽपि वा 'अटः' नियन्त्रणं न दृश्यते वैदिकसाहित्ये। वस्तुतोऽडयमुपसर्गसदृशो निपातोऽव्यय वाऽऽसीत्, य उपसर्गपर्यायित्वेन विकल्पकत्वेन वाऽङ्गीकृत आसीत् तदानींतनैः शाब्दिकैः। बरोमहोदयेनापि[1] प्रतिपादितं यदयं स्वतन्त्रशब्दरूपेणोपसर्गसधर्मित्वेन वा प्रयुज्यमान आसीद् वैदिकवाङ्मये।

कालिक्याः, दैशिक्याः, भाषिक्याश्च परिस्थितेरनुरोधेन प्रभावेण च 'अटः' क्रियापूर्वभावित्वं सुस्थिरत्वं च सञ्जातम्। इत्थमुपर्युक्तैः प्रमाणैर्निष्क्रष्टुं शक्यते, यन्माङ्योगेऽडादीनामभावेन, माङ्योगेऽप्यडादीनामागमेन, अड्-माङ्-उभयोरभावेऽपि लुङ्-लङ्-लकारनिष्पन्नायाः क्रियाया वाचकाद्धातोरड्-माङभावेऽप्युपसर्गाणां संयोजनेन, अङ्-माङुभयोरभावेऽपि कुत्रचित् केवलाया भूतकालिकक्रियायाः प्रयोगेण क्वचिन्माङ्-योगेऽपि लुङ्-लङ्लकारयोः क्रियापूर्वमुपसर्गसंयोजनेन, 'स्म-ईम्' साहचर्याल्लिट्लकारस्य लुङ्लकारार्थंप्रतिपादनेन, क्वचिदडागमेऽपि क्रियया वर्तमानकालप्रतिबोधनेन, माङ्-निपातेनैव 'अट्' निपातस्य उत वोपसर्गस्य प्रतिषेधेन, 'स्म-ईम्' इति निपाताभ्यामेव वर्तमानकालिकक्रियाया भूतार्थे परिवर्तनेन, अटोऽपि **'उपसर्गाः क्रियायोगे'**[2] इति निर्देशात् क्रियापूर्वप्रयोगेण सिद्धयति यदिमानि सर्वाण्यपि कार्याणि निपातैरेव, आहोस्विद् उपसर्गैरेव सम्पाद्यन्ते। अतः प्रतिपादनमिदं सर्वथा समीचीनं प्रतिभाति, यदाचार्य-भर्तृहरेः **'अडादीनां व्यवस्थार्थम्'**[3] इति सिद्धान्तो भाषाशास्त्रदृष्ट्याऽनैतिहासिकः।

**धातु-साधनयोर्धातूपसर्गयोर्वा सम्बन्धः**

उत्तरकालिकसंस्कृतभाषायाः शाब्दिकनिकाये—**'पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेण'** अथवा **'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन'** इति वादमवलम्ब्य दृश्यते मिथो शास्त्रार्थः। केचनाचार्या मन्यन्ते यत् पूर्वं धातुः साधनमाकाङ्क्षति, पश्चादुपसर्गम्, केचन च मन्यन्ते पूर्वं धातुरुपसर्गमाकाङ्क्षति पश्चात् साधनम्। अत एव भर्तृहरिणाऽपि पठितम्—

**कार्याणामन्तरङ्गत्वमेवं धातूपसर्गयोः।**
**साधनैर्याति सम्बन्धं तथाभूतैव सा क्रिया॥**[4]
**प्रयोगार्हेषु सिद्धः सन् भेत्तव्योऽर्थो विशिष्यते।**
**प्राक् च साधनसम्बन्धात् क्रिया नैवोपजायते॥**[5] इति।

---

१. दि संस्कृत लैंग्वेज–पृ० २९८।
२. अष्टाध्यायी–१।४।५९।
३. वाक्यपदीयम्–२।१८०।
४. तदेव–२।१८२।
५. तदेव–२।१८३।

अत्रायं निष्कर्षः—धातुना प्रथमं साधनमपेक्ष्यते, आहोस्विद् उपसर्ग इति विवादस्यापि मुख्या हेतव उपसर्ग-धातुमिथुनीभूताः संयुक्ता धातव एव। भाषाया ऐतिहासिकविकास एतादृशा अपवादस्वरूपा धातवस्तु प्रायेण सर्वास्वपि प्राचीनार्वाचीन-भारोपीयभाषासूपलभ्यन्ते। अत एव वोपदेवगोस्वामिनोक्तम्—

**कविकल्पद्रुमो नाम पद्यैर्निष्पाद्यतेऽत्र च।**
**धातवः पठिताः पाठसूत्रलोकागमस्थिताः॥**[1] इति।

दुर्गादासेन व्याख्यातोऽयं श्लोकः—'अत्र ग्रन्थे पाठसूत्रलोकागमेषु स्थिताश्चतुर्विधा धातवः पठिताः = पठितुमारब्धा इत्यर्थः। पाठस्थिताः = पूर्वाचार्याणां धातुपाठेषु स्थिताः, भवति पचतीत्यादयः। सूत्रस्थिताः = धातुपाठेषु न दृष्टाः, स्तभ्नोति स्कभ्नोतीत्यादयः। लोकस्थिताः = धातुपाठेषु सूत्रेषु च न दृष्टाः, महाकविप्रयोगेषु दृष्टाः, प्रेङ्खोलयत्यान्दोलयतीत्यादयः। आगमस्थिताः = भाषाविषयेषु धातुपाठसूत्रलोकेषु न दृष्टाः, वेदेष्वेव प्रयुक्ताः, जगाति चिकेतीत्यादयः' इति। एतेन दुर्गादासव्याख्यानेन सिद्ध्यति यत् पार्यवसानिको निर्णयस्तु भवति धातूपसर्गनिपातानां स्रोतसो लोकागमाभ्याम् = लोकवेदाभ्याम्।

प्रकरणेऽस्मिन् **'उपसर्गाणां प्रयोगविज्ञानम्'** इति विषयो विवेचितः। उपरिष्टाद् विविच्यमानेप्रकरणे **'उपसर्गाणामर्थविकासः'** इति विषयो गवेषयिष्यते।

**उपसर्गाणामर्थविकासः**

**धातूपसर्गसंसर्गसम्भवाः कतिचिन्मया।**
**प्रसिद्धा गदिताश्चार्थाः शेषा ज्ञेयाः प्रयोगतः**[2]॥

आचार्यभरतमल्लिकस्य वाक्यमनुस्मरता मयाऽस्मिन्ननुच्छेद उपसर्गाणां भूयर्थाः प्रस्तुताः। विशेषतो धातूपसर्गनिपातानामर्थविवर्त्तः प्रयोगकाल एव **'ज्वालेव काष्ठानाम्'** प्रस्फुटति। महाभाष्यकारेणैकत्रोक्तं यच्छब्दा अर्थसञ्चयधर्मिणो भवन्तीति। महाभाष्यकर्तुः सिद्धान्तस्यायमेवाभिप्रायो यद् अर्थसञ्चयधर्मिणां पदानां सञ्चिता अर्थाः प्रयोगकाले दीप्यन्ते। अत्रेदमपि प्रतिष्ठापयितुम् उत्सहे यद् भावप्रत्ययवाहकाः शब्दा एवार्थसञ्चयधर्मिणो भवन्ति, न तु वस्तुसत्ताबोधकाः। यतो हि वस्तुसत्ताबोधकाः शब्दाः कस्मिंश्चिदप्यर्थे रूढाः = बद्धा भवन्ति, अतो समर्पितात्मवत्सु तेष्वर्थसञ्चयसामर्थ्याभावः कल्प्यते। तथा हि महाभाष्यम्—**'युक्तं पुनरिदं यदजहत्स्वार्था नाम वृत्तिः? बाढम् युक्तम्। एवं हि दृश्यते लोके भिक्षुकोऽयं द्वितीयां भिक्षां समासाद्य पूर्वां न जहाति। सञ्चयायैव प्रवर्तते। एवं शब्दोऽपि क्वचिद् विषय एकार्थः, क्वचिदनेकार्थ इत्यर्थः**[3]' इति। एवं हि गोनर्दीयप्रामाण्येनेदं निर्गलितं भवति यद् भाषायां नवनवानां शब्दमूर्तीनाम् अर्थविम्बानां च प्रसवस्य सामर्थ्यम्—धातु-उपसर्ग-निपातेष्वेवापोहति। अत एवैतेषामर्था

१. कविकल्पद्रुमः—श्लोकः—४—दुर्गादासव्याख्या।
२. उपसर्गवृत्तिः—१८;
३. महाभाष्यम्—२।१।१।

हैयङ्गवीनसदृशा भवन्ति। एतेषां हैयङ्गवीनवृत्तित्वाद् आचार्यैर्बहुत्र सङ्केतितं यद् धातूपसर्गनिपाता अनेकार्था भवन्तीति। तथा च पठति सारस्वतकारः—

**निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः।**
**अनेकार्थाः स्मृताः सद्भिः पाठस्तेषां निदर्शनम्[१]॥**

एते त्रयः = धातूपसर्गनिपाताः, सद्भिः = इन्द्र-चन्द्रापिशलि-गार्ग्य-गालव-पौष्करैर-नेकार्थाः स्मृताः।

माधवभट्टेनापि प्रतिपादितं यद् येन हेतुना धातवो विविधार्था भवन्ति, तैनैव हेतुना निपातोपसर्गा अपि—

**निपाता उपसर्गाश्च दृश्यन्ते केन हेतुना।**
**बहुष्वर्थेषु येष्वेते दृश्यन्त उपमादिषु॥**
**बहुष्वर्थेषु धातूनां वृत्तौ यत्कारणं भवेत्।**
**तदेवात्रापि भवति सा च शक्तिरिति स्थितिः॥[२]**

अर्थाद् धातूपसर्गनिपातेषु विवर्तमाना शक्तिरेकैव। तस्याः शक्तेरेव विवर्तोऽवलोक्यते भाषायामुपादानकारणरूपेण।

एवमेव हर्षकीर्तिनाऽप्युद्घोषितं सारस्वतीयधातुपाठे यद् उपसर्गोपरागेण कुत्रचिद् अकर्मका धातवः सकर्मका भवन्ति, कुत्रचित् सकर्मका अप्यकर्मका इति, तथैव परस्मैपदिनो धातव आत्मनेपदिताम्, आत्मनेपदिनोऽपि परस्मैपदितां च यान्ति—

**उपसर्गवशात् केचित् परस्मैपदिनोऽपि हि।**
**आत्मनेपदितां यान्ति यथा च निविशादयः॥**
**आत्मनेपदिनोऽप्येवमुपसर्गादियोगतः।**
**परस्मैपदितां यान्ति विरमत्यादयो यथा॥**
**कर्मोक्तौ चापि भावे चातिशये यङि प्रत्यये।**
**हिंसादीन् विना कर्मव्यतिहारेऽप्यात्मनेपदम्॥[३]** इति।

कैयटभट्टस्याप्ययमेवाभिप्रायः—'**अकर्मका अपि धातवः सोपसर्गा अनुपसर्गा वा अर्थान्तरवृत्तित्वे सति सकर्मका भवन्ति**[४]' इति। तस्मिन्नेव प्रसङ्गे हर्षकीर्तिना पुनरुक्तं यत् प्राद्युपसर्गपूर्वकाः सर्वे धातवोऽर्थान्तरं भजन्त्येव, तेषां भिन्नभिन्नार्थवाचिता = न तु द्योतकता, कविरूढितोऽवगन्तव्या। तथा हि—

**सर्वेऽपि धातवः प्रायः प्राद्युपसर्गपूर्वकाः।**
**अर्थान्तरं भजन्त्येव प्रभवत्यादयो यथा॥**
**उपसर्गस्य संयोगाद् भिन्नभिन्नार्थवाचिता।**
**धातूनां याऽभवत् सा तु विज्ञेया कविरूढितः॥** इति।

---

१. सारस्वतव्याकरणम्—स्त्रीप्रत्ययः—१४। २. ऋग्वेदानुक्रमणी—३।६।१४–१५।
३. सारस्वतीयो धातुपाठः—स्त्रीप्रत्ययः—१४। ४. प्रदीपः—महाभा० १।३।८६।

माधवभट्टोऽपि संवदते हर्षकीर्तिसिद्धान्तेन—

**विनश्यन्ति च धात्वर्था उपसर्गसमन्वयात् ।**

**अव ते हेलो वरुण सुन्वानो हि ष्मा यजति**[१] ॥ इति ।

अत एव विद्वद्भिः किल निर्णीयते यद् व्याकरण हि नाम शब्दानुशासनतन्त्रम् । शब्दानुशासनतन्त्रेणार्थानुशासनं भवितुं नार्हति । अर्थास्तु लोकेनैवानुशिष्यन्ते । अतो धातूपसर्गसंसर्गसम्भवा अर्था भाषाक्रोड एवान्वेष्टव्याः । समादधाति च जिनेन्द्रबुद्धिः— **'द्विविधो ह्यर्थः—लौकिकः शास्त्रीयश्च । तत्र पूर्वः पदेनैव प्रतीयते, द्वितीयस्त्वन्वयव्यतिरेकाभ्याम्'**[२] इति । एवं शास्त्रीया अर्था पदैरेवाभिव्यज्यन्ते, लौकिकाः=महाकविप्रयोगपुरस्कृता विशिष्टास्त्वन्वयव्यतिरेकाभ्याम् । विट्ठलाचार्यस्याप्ययमेव समयः— '····इत्यभियुक्तस्मृतेरर्थेयत्तावधारणस्यासम्भवात् । प्रयोगत एवावगन्तुं शक्यत्वात् शब्दानुशासनेऽर्थानुशासनस्यानुपयोगादुपसर्गार्थो न प्रदर्श्यन्ते विस्तरभयाच्चेति'[३] । शब्दयोरास्कन्दनप्रसूतशब्दानामर्थेयत्ताऽनवधारणीयेति निश्चित्योदाजहार महाभाष्यकारः— 'को हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुम्'[४] इति ।

अमीषां पथिकृच्छाब्दिकानां सिद्धान्तपर्यवेक्षणेन निष्कृष्यते यन्मूर्तिमतान् पदार्थानभिव्यञ्जने व्यापृतानाम्=रूढानां शब्दानामर्थाः कथञ्चिन्निर्धारिता भवेयुः, किन्तु भावावबोधकानां शब्दानामर्थास्तु संख्यातीता एव । अत एव स्कन्दस्वामिनोक्तं यद् वस्तुप्रकाशकाः शब्दास्तु सुग्राह्या भवन्ति, तेषां प्रसिद्धत्वात् । भावप्रकाशकास्तु दुर्ग्राह्या भवन्ति, तेषामप्रसिद्धत्वादिति । तद्यथा—'गवादीनि नामानि, तेषां सत्त्वं सर्वमनुष्यैर्ज्ञायमानत्वात् । आख्यातोपसर्गनिपातास्त्वप्रसिद्धार्थत्वान्नार्थं सर्वे वेदयन्ते'[५] इति ।

इत्थं पुरस्तादुपस्थापितानां सन्दर्भाणामानुसन्धानिकेन पर्यवेक्षणेन स्थापयितुं शक्यते यदाख्यातोपसर्गाणां प्रवृत्तिनिवृत्ती भावप्रत्ययाः, नाम्नां तु पदार्थप्रत्यया इति । अत एव भावप्रत्ययबोधकेष्वेषु दृश्यते नैसर्गिकमाकर्षणम् । इदमप्यत्रावधारणीयं वर्तते यच्छब्दाः परस्परार्थदृष्ट्या सापेक्षा भवन्ति । शब्दानामर्थसापेक्षसिद्धान्तोऽयम्— स्कन्द[६]-पतञ्जलि[७]-कैयट[८]-नागेशादिभिः पुरस्कृतः । विवृणोति चामुं सिद्धान्तं स्कन्दस्वामी—**'तच्छब्दाद् योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः'** इति । अन्यत्र महाभाष्यवाक्यं व्याचक्षाणेन नागेशाचार्येणापि व्यवस्थापितं यत्—'यथा लोकः स्वसजातीयमेव

---

१. ऋग्वेदानुक्रमणी—३।८।१० । २. न्यासः—३।१।१ ।

३. प्रक्रियाकौमुदीभूमिका—पृ० २५ । ४. महाभाष्यम्—२।१।१ ।

५. ऋ० सं०—१।१६४।४५—स्कन्दभाष्यम् ।

६. तदेव—१।५४।३, ६।४७।२९, १०।२६।१०—स्कन्दभाष्यम् ।

७. महाभाष्यम्—१।३।२९ । ८. प्रदीपः—तत्रैव—१।३।२९ ।

सहायमुपादत्ते, एवं शब्दोऽपि प्रयोगे सहायं सजातीयमेवोपादत्ते, न तु विजातीयम्[१]' इति। एतेन निष्कृष्यते यच्छब्देष्वर्थवैज्ञानिकं सापेक्ष्यं भवत्येव।

आधुनिकभाषाशास्त्रिणा वान्द्रियैजमहोदयेनाप्यनुमन्यतेऽयं सापेक्षरूपः सिद्धान्तः[२]। एवं शब्देषु परस्परमेषा सापेक्षता निरपेक्षता च मानवमनोभावमूलिके स्तः। निपातोपसर्गास्तु मानवमनोभावैरतिप्रभाविताः सन्तो भाषायां व्यवह्रियन्ते। अत एव नाटकीयभाषायां निपातोपसर्गाणां प्रयोगा मनोभावरूपरूपिता दृश्यन्ते।

अस्मिन्नेव प्रसङ्गे इदमपि स्मर्तव्यमस्ति यच्छब्दाः परस्परानुकूलार्थेषु सापेक्षा भवन्त्येव, प्रतिकूलार्थेऽपि तत्तच्छब्दानां सापेक्षत्वं दृष्टचरम्। यतो हि प्रतिकूलार्थानां शब्दानां सापेक्ष्यमनपेक्ष्यं च भाषायां न तादृशार्थप्रवाहोऽन्यथयितुं पार्यते, यथा परस्परप्रतिकूलार्थकैः शब्दैः परिवर्त्यते। 'उपरि' शब्देन यादृशोत्कर्षभूतस्यार्थस्याभिव्यक्तिर्भवति, तदपेक्षया 'अधस्' शब्देन तद्विपरीतानूर्ध्वरूपार्थः कथ्यते। अत एव शब्दा अनुकूलार्थेऽपि सापेक्षा भवन्ति, प्रतिकूलार्थेऽपि।

प्रसङ्गेऽस्मिन्नुपसर्गाणामर्थविकासः = भिन्नभिन्नार्थवाचिता प्रदर्शयिष्यते। अत्रोपसर्गक्रमस्तु महामुनिपाणिन्यनुमतोऽङ्गीकृतः। उपसर्गाणामर्थराशिप्रस्तावनाप्रसङ्गात् पूर्वं तोलनात्मके पृष्ठे पाणिनिप्रादिगणपरिसंख्यातानामुपसर्गाणां तुलाबोधकः संवादोऽपि प्राचीनभारोपीयार्यभाषा–अवेस्ता-फारसी-ग्रीक-लैटिन-प्रभृतिभाषोपसर्गैः सह प्रस्तोष्यते। यतो हि भाषाशास्त्रीयदृष्ट्या, ऐतिहासिकदृष्ट्या चासां भाषाणां विवर्तनमप्यार्यजातेः कौटुम्बिकसन्निकर्षमूलकमिति। दृश्यते हि किल तत्तदार्यभाषाणां नामपदेषु, आख्यातपदेषु च देशकालपरिस्थितिप्रभवो भूयान् प्रभावो विकारो वा; किन्तु निपातोपसर्गाणामव्ययत्वं सर्वत्रापि सममेव। न हि केवलं स्वरूपौपयिकमव्ययत्वमेव तत्राक्षिलक्ष्यीक्रियते, अपि तु अर्थौपयिकः संवादोऽपि संरक्षितः। अत एव भाषाशास्त्रविदुषा मैक्समूलरमहानुभावेन निरदेशि यत्—'यस्मिन् समय आर्यजातिर्यदा विश्वभूतादेकनीडाद् इतस्ततो विपर्यस्ताऽभूत्, तत्पूर्वमेवार्यजातेर्भाषाया व्याकरणम्, शब्दव्युत्पत्तिप्रकारः, धातूनां कालबोधकानि रूपभेदमूलकानि च तत्त्वानि सुस्थिराणि सञ्जातानि। अत एव—संस्कृत-अवेस्ता-ग्रीक-लैटिन-प्रभृतिभाषासु व्याकरणस्य मौलिकानि तत्त्वानि समानान्येव[३]।' वस्तुतः प्राचीनभारोपीयार्यभाषास्वन्योन्यं यो भेदोऽवलोक्यते, स तु ध्वनिविकारमूलक एव। न हि भाषायाः सङ्घटनात्मकेषु सिद्धान्तनिर्णयात्मकेषु च तत्त्वेषु भेदमवलोकयितुमवकाशस्तत्र।

---

१. उद्द्योतः–महा० १।३।२९। २. भाषा–पृ० १२४।

३. दि लैक्चर्स आन दि साइंस आफ लैंग्वेज–पृ० २५३।

अत्रावस्तादेकैकस्योपसर्गस्योपचीयमानोऽर्थराशिः समुदाह्रियते—

(१) **प्र** = आदिकर्मणि—प्र + √क्रम् [ = पादविक्षेपे ] >प्रक्रमते ।
= नर्मणि—प्र + √हसे [ = हसने ] >प्रहसति ।
= जन्मनि—प्र + √भू [ = सत्तायाम् ] >प्रभवति ।
= उपरमे—प्र + √भा [ = दीप्तौ ] >प्रभाता रजनी ।
= ऐश्वर्ये—प्र + √भू [ = सत्तायाम् ] >प्रभवन्ति ।
= औदार्ये—प्र + √तप [ = ऐश्वर्ये ] >प्रतपति ।
= प्रकर्षे—प्र + √गल्भ [ = धाष्टर्ये ] >प्रगल्भते ।
= अपकर्षे—प्र + √अश् [ = व्याप्तौ ] >प्राश्नाति ।
= आविर्भावे—प्र + √काश् [ = दीप्तौ ] >प्रकाशते ।
= तिरोभावे—प्र + √ली [ = श्लेषणे ] >प्रलीयते ।
= भूषणे—प्र + √साध [ = संसिद्धौ ] >प्रसाधयति ।
= दूषणे—प्र + √लप [ = व्यक्तायां वाचि ] >प्रलपति ।
= उपसरे—प्र + √या [ = प्रापणे ] >प्रयापयति ।
= अवसरे—प्र + √स्तु [ = स्तुतौ ] >प्रस्तौति ।
= वियोगे—प्र + √वस [ = निवासे ] >वसन्ते प्रवसति ।
= नियोगे—प्र + √युज् [ = योगे ] >प्रयुङ्क्ते ।
= प्रकथने—प्र + √वच [ = परिभाषणे ] >प्रवक्ति ।
= उपयोगे—प्र + √कृ [ = करणे ] >शतं प्रकुरुते ।
= साहसे—प्र + √कृ [ = करणे ] >परदारान् प्रकुरुते ।
= शुद्धौ—प्र + √ष्विद् [ = स्नेहनमोचनयोः ] >पयः प्रसीदति ।
= समृद्धौ—प्र + √चि [ = चयने ] >प्रचीयते ।
= दर्शने—प्र + √ईक्ष [ = दर्शने ] >प्रेक्षते ।
= अनवधाने—प्र + √मदि [ = मदे ] >प्रमाद्यति ।
= विरचनायाम्—प्र + √बन्ध [ = बन्धे ] >प्रबध्नाति ।
= वञ्चने—प्र + √तॄ [ = प्लवनतारणयोः ] >प्रतारयति ।
= संज्ञायाम्—प्र + √बुध [ = अवगमने ] >प्रबुद्ध्यते ।
= सन्न्यासे—प्र + √व्रज [ = गतौ ] >प्रव्रजति ।
= हिंसायाम्—प्र + √हृ (ञ्) [ = हरणे ] >प्रहरति ।
= अर्थवैपरीत्ये—प्र + √स्था [ = गतिनिवृत्तौ ] >प्रतिष्ठते ।
= दाने—प्र + √सृज् [ = विसर्गे ] >प्रसर्गः[1] ।

---

१. ऋ० सं०–१।१२१।४ ।

= पुराशब्दार्थे—प्र + त्न > प्रत्नम् = पुराणमित्यर्थः[१] ।
= समागमे—प्र + √स्था [ = गतिनिवृत्तौ ] > प्रस्थानम्[२] ।
= पादपूरणार्थे—प्र + प्र > प्र प्र शस्यते = प्रस्तूयते[३] ।

(२) **परा** = वधे—परा + √हन [ = हिंसागत्योः ] > पराहन्ति ।
= सुशब्दार्थे—परा + √दा [ = दाने ] > परादादिः = सुष्ठुदाता[४] ।
= प्रमर्शने—परा + √मृश [ = आमर्शने ] > परामृशति ।
= दूरार्थे—परा + परा > परा परा = दूरवर्तिनी[५] ।
= शीघ्रार्थे—परा + √अय [ = गतौ ] > पलायितः[६] ।
= प्रतिषेधे—परा + √क्षिप [ = प्रेरणे ] > पराक्षिपति ।
= विक्रमे—परा + √क्रम् [ = पादविक्षेपे ] > पराक्रामति ।
= उपरमे—परा + √इ (ण्) [ = गतौ ] > परैति ।
= अनभिगमे—परा + √गम् [ = गतौ ] > परागच्छति ।
= अनाभिमुख्ये—परा + √वृत् [ = वर्तने ] > परावर्तते ।
= न्यग्भावे—परा + √भू [ = सत्तायाम् ] > पराबभूवुः ।
= अभिभवे—परा + √भू [ = सत्तायाम् ] > पराभवति ।
= निरसने—परा + √कृ [ = करणे ] > पराकरोति ।
= निर्वेदे—परा + √शी [ = शये ] > पराभग्नः शेते ।
= आशुप्राप्तौ—परा + √पत [ = गतौ ] > परापतति ।
= प्रापणे—परा + √अय [ = गतौ ] > परायति ।
= अपह्नवे—परा + √ह्वे [ = आह्वाने ] > पराह्वयति ।

(३) **अप** = व्यपाये—अप + √इ [ = गतौ ] > अपैति ।
= उद्वापे—अप + √णी (ञ्) [ = प्रापणे ] > अपनयति ।
= हर्षे—अप + √कृ [ = करणे ] > अपस्किरते ।
= अनुत्कर्षे—अप + √कृष [ = विलेखने ] > अपकृष्यते ।
= दोषे—अप + √भाष [ = व्यक्तायां वाचि ] > अपभाषते ।
= दूषणे—अप + √वद [ = व्यक्तायां वाचि ] > अपवदति ।
= विनाशे—अप + √गा [ = गतौ ] > अपागात्[७] ।
= स्खलनार्थे—अप + √सृ [ = सरणे ] > अप्सरा[८] ।

---

१. ऋ० सं०–३।९।८ । २. कुमारसम्भवम्–६।६१ ।
३. ऋ० सं०–१।१३८।१, शुक्लयजुर्वेदः–११।८३ ।
४. ऋ० सं० १।८१।२, छान्दोग्यब्रा० २।४।१ ।
५. ऋ० सं०–१।३८।६, अथर्ववे० ४।२०।१ । ६. तै० सं०–७।१।१९ ।
७. ऋ० सं०–१।११३।१६ । ८. अमरकोशः–१।१।५०–सर्वानन्दटीका ।

= ईप्सायाम्—अप + √ईक्ष [ = दर्शने ] >अपेक्षते ।
= ह्रासे—अप + √चि (ञ्) [ = चयने ] >अपचीयते ।
= उत्प्रासे—अप + √हसे [ = हसने ] >अपहसति ।
= आविष्कारे—अप + आ + √वृ [ = वरणे ] >अपावृणोति ।
= वारणे—अप + √कृ [ = करणे ] >अपकरोति ।
= न्यक्कारे—अप + √क्षिप [ = क्षेपे ] >अपक्षिपति ।
= निह्नवे—अप + √ज्ञा [ = अवबोधने ] >अपजानीते ।
= अन्यथात्वे—वि + अप + √वृत [ = वरणे ] >व्यपवर्तते ।
= द्रोहे—अप + √रुधि (र्) [ = आवरणे ] >अपरुद्धयति ।
= दुरभिसन्धौ—अप + √ध्यै [ = चिन्तायाम् ] >अपध्यायति ।
= व्याधौ—अप + √स्मृ [ = स्मरणे ] >अपस्मरति ।
= व्यावृत्तौ—अप + √ऊह [ = वितर्के ] >अपोहते ।
= मुक्तौ—अप + √वृजी [ = वर्जने ] >अपवृज्यते ।
= प्रतिदाने—अप + √मय [ = गतौ ] >अपमयते ।
= उद्वेगे—अप + रञ्ज [ = रागे ] >अपरज्यते[1] ।

(४) **सम्** = सम्यक्त्वे—सम् + प्र + √ईक्ष [ = दर्शने ] >सम्प्रेक्षते ।
= सङ्ग्रहे—सम् + आ + √हृ [ = हरणे ] >समाहरति ।
= सहभावे—सम् + प्र + √वद [ = व्यक्तायां वाचि ] >सम्प्रवदन्ते ।
= समन्ताद्भावे—सम् + √पत [ = गतौ ] >सम्पतति ।
= सम्भवे—सम् + √भू [ सत्तायाम् ] >सम्भवति ।
= सम्बन्धे—सम् + √युज् [ = योगे ] >संयुज्यते ।
= सन्निधौ—सम् + नि + √कृष [ = विलेखने ] >सन्निकृष्यते ।
= समृद्धौ—सम् + √पद [ = गतौ ] >सम्पद्यते ।
= क्रोधे—सम् + √रभ [ = राभस्ये ] >संरभते ।
= कूजने—सम् + √क्रीड् [ = विहारे ] >संक्रीडन्ति शकुनानि ।
= आजौ—सम् + √ग्राम [ = आमन्त्रणे ] >सङ्ग्रामयते ।
= सम्भ्रमे—सम् + √त्वरा [ = सम्भ्रमे ] >सन्त्वरते ।
= संहनने—सम् + √धा [ = धारणपोषणयोः ] >सन्दधाति ।
= वाचिके—सम् + √दिश [ = अतिसर्जने ] >सन्दिशति ।
= विरचनायाम्—सम् + नि + √विश [ = प्रवेशने ] >सन्निविशते ।
= विमोहे—सम् + √शी [ = शये ] >संशेते ।

---

१. किरातार्जुनीयम्—२।३१–चित्रभानुव्याख्या ।

= मोहने—सम् + √भुज [ =अभ्यवहारे ] >संभुङ्क्ते ।
= संस्कारे—सम् + √कृ [ = करणे ] >संस्कुरुते ।
= अनुकारे—सम् + √काश् [ = दीप्तौ ] >संकाशते ।
= सङ्करे—सम् + √भिद् [ = विदारणे ] >संभिद्यते ।
= संवरणे—सम् + √कृ [ =करणे ] >संस्क्रियते ।
= संस्मृतौ—सम् + √कल [ =शब्दसंख्यानयोः ] >सङ्कल्पते ।
= प्रतिज्ञायाम्—सम् + √गृ [ =निगरणे ] >सङ्गिरते ।
= संज्ञपने—सम् + √हृ [ =हरणे ] >संहरति ।
= निःशब्दार्थे—सम् + √शो [=तनूकरणे ] >संशितम् =निशितम्[१] ।
= एकीभावे—सम् + √अय [ = गतौ ] >समायन[२] ।
= परिचये—सम् + √ष्टु (त्र्) [ =स्तुतौ ] >संस्तौति ।
= विगमने—सम् + √ख्या [ = प्रकथने ] >सङ्ख्यायति ।
= विमर्शे—सम् + √प्रच्छ [ = ज्ञीप्सायाम् ] >संपृच्छते ।
= उद्योगे—सम् + √यती [ = प्रयत्ने ] >संयतते ।
= त्यागे—सम् + नि + √अस [ = भुवि ] >सन्न्यस्यति ।
= नियमने—सम् + √यम [ = संयमने ] >संयच्छते ।
= क्रियापवर्गे—सम् + √आप् [ = व्याप्तौ ] >समापयति ।

(५) **अनु** = सहार्थे—अनु + √चर [ = गतौ ] >अनुचरति ।
= पश्चादर्थे—अनु + √सृ [ = गतौ ] >अनुसरति ।
= दयायाम्—अनु + √कमु [ = कान्तौ ] >अनुकम्पते ।
= अनुमतौ—अनु + √मुद [ = हर्षे ] >अनुमोदते ।
= ज्ञाने—अनु + √भू [ = सत्तायाम् ] >अनुभवति ।
= सान्त्वने—अनु + √णी [ = प्रापणे ] >अनुनयति ।
= सेवायाम्—अनु + √जीव [ = प्राणधारणे ] >अनुजीवति ।
= सादृश्ये—अनु + √कृ [ = करणे ] >अनुकरोति ।
= आचरणे—अनु + √स्था [ = गतिनिवृत्तौ ] >अनुतिष्ठति ।
= आलोचने—अनु + √ईक्ष [ = दर्शने ] >अन्वीक्षते ।
= प्रश्ने—अनु + √युज् [ = योगे ] >अनुयुङ्क्ते ।
= मार्गणे—अनु + √इष [ = गतौ ] >अन्वेषयति ।
= आनुकूल्ये—अनु + √वृत् [ = वर्तने ] >अनुवर्तते ।
= आनुपूर्व्ये—अनु + √क्रम [ =पादविक्षेपे ] >अनुक्रामति ।

---

१. शुक्लयजुर्वेदः–११।८१, गीता–९।३० ।   २. ऋ० सं०–१०।२७।८ ।

= आसक्तौ—अनु + √रञ्ज [ = रागे ] >अनुरज्यते ।
= सातत्ये—अनु + √बन्ध [ = बन्धने ] >अनुबध्नाति ।
= इच्छायाम्—अनु + √रुध [ = रोधे ] >अनुरुध्यते ।
= आस्वादे—अनु + √ष्वद [ = आस्वादने ] >अनुष्वधम्[1] ।
= शासने—अनु + √वच [ = परिभाषणे ] > अनुवोचत्[2] ।
= शापे—अनु + वि + आ√हृ [ = हरणे ] >अनुव्याहरेत् = शपेत्[3] ।
= निन्दायाम्—अनु + वि + आ + √हृ [ = हरणे] >अनुव्याहारी[4] ।
= अध्ययने—अनु + √वच [ = परिभाषणे ] >अनूचिवान्[5] ।
= अनुवादे—अनु + √ज्ञा [ = अवबोधने ] >अनुज्ञया[6] ।
= उपकारे—अनु + √गृह [ = ग्रहणे ] >अनुगृह्णाति ।
= पश्चात्तापे—अनु + √शी [ = शये ] >अनुशेते ।
= प्रसाधने—अनु + √लिप [ = उपदेहे ] >अनुलिम्पति ।
= वासनायाम्—अनु + √रुध [ = कामे ] >अनुरुध्यते ।
= अन्वये—अनु + √षञ्ज [ = सङ्गे ] >अनुषज्यते ।
= निदेशे—अनु + √शास् [ = अनुशिष्टौ ] >अनुशास्ति ।
= ततः प्रभृत्यर्थे—अनु + √भू [ = सत्तायाम् ] >अनुबभूव[7] ।

**(६) अव** = अवबोधने—अव + √गम् [ = गतौ ] >अवगच्छति ।
= उद्बोधे—अव + √चक्ष् [ = व्यक्तायां वाचि ] >अवचष्टे ।
= संरोधे—अव + √रुध [ = कामे ] >अवरुणद्धि ।
= अवष्टम्भे—अव + √ष्टभि [ = प्रतिबन्धे ] >अवष्टम्भते ।
= वेष्टने—अव + √ग्रह [ = उपादाने ] >अवगृह्णाति ।
= आलम्बने—अव + √ष्टभि [ = प्रतिबन्धे ] >अवष्टभ्नाति ।
= अलङ्कारे—अव + √तसि [ = अलङ्करणे ] >अवतंसयति ।
= निगरणे—अव + √गृ [ = निगरणे ] >अवगिरते ।
= न्यग्भावे—अव + √अञ्च [ = गतौ ] >अवाञ्चयति ।
= भोजने—अव + √ष्वद [ = आस्वादने ] >अवष्वदति ।
= आदाने—अव + √चि [ = चयने ] >अवचिनोति ।
= अवज्ञाने—अव + √मन [ = ज्ञाने ] >अवमन्यते ।

---

१. तै० सं०—१।४।१९;
२. तदेव—३।३।४;
३. शतपथब्रा० १।४।३।११;
४. तदेव—१।६।१।१६;
५. तदेव—२।४।४।४;
६. कुमारसं०—५।५९ ।
७. तदेव—७।२४ ।

= अधोभावे—अव + √धवि [ = गतौ ] >अवधवन्ते[1] ।
= उच्छब्दार्थे—अव + √धवि [ = गतौ ] >अवधवन्ते[2] ।
= परिभवार्थे—अव + √मन [ = ज्ञाने ] >अवमन्तुः >अमन्तुः[3] ।
= आज्ञापने—अव + √सृज [ = विसर्गे ] >अवसृजति ।
= श्रद्धाने—अव + √कल [ = संख्याने ] >अवकल्पते ।
= क्लृप्तेऽर्थे—अव + √क्र [ = करणे ] >अवक्रीणीते ।
= दृप्ततायाम्—अव + √लिप [ = उपदेहे ] >अवलिम्पति ।
= समन्ततो भावे—अव+ √ऋध् [=संसिद्धौ] >अवर्धमानः >वर्धमानः[4] ।
= क्रोधे—अव + √धू [ = विधूनने ] >अवधूय[5] ।
= प्रणिधाने—अव + √धा [ = धारणे ] >अवधत्ते ।
= प्रतिविधाने—अव + √ईक्ष [ = दर्शने ] >अवेक्षते ।
= घर्षणे—अव + √स्कन्द् [ = गतिशोषणयोः ] >अवस्कन्दते ।
= अवध्वंसने—अव + √चूर्ण [ = संकोचने ] >अवचूर्णयति ।
= अवसादने—अव + √हन [ = वधे ] >अवहन्ति ।
= उपश्लेषे—अव + √गूह् [ = संवरणे ] >अवगूहति ।
= सेवायाम्—अव + √गूह् [ = संवरणे ] >अवगूहति ।
= प्रस्तावे—अव + √सृ [ = गतौ ] >अवसरति ।
= प्रहासे—अव + √हेड् [ = अनादरे ] >अवहेलयति ।
= ह्रासे—अव + √सद् [ = शातने ] >अवसीदति ।
= प्रसारणे—अव + √तनु [ = विस्तारे ] >अवतनोति ।
= संहरणे—अव + √गृ [ = निगरणे ] >अवगारः ।
= अवदाने—अव + √द्यू [ = अभिगमने ] >अवद्यति ।
= दर्शने—अव + √लोक् [ = दर्शने ] >अवलोकते ।

(७) **निस्>निर्** = निश्चये—निर् + √णी [ = प्रापणे ] >निर्णयति ।
= अधिश्रयणे—निर् + √वप् [ = बीजसन्ताने ] >निर्वपति ।
= शक्तौ—निर् + √वह [ = प्रापणे ] >निर्वहति ।
= उत्पत्तौ—निस् + √पद [ = गतौ ] >निष्पद्यते ।
= निर्गमे—निर् + √या [ = प्रापणे ] >निर्याति ।
= आविष्कारे—निर् + √या [ = प्रापणे ] >निर्याति ।

---

१. ऋ०सं०—६।४७।१४ ।
२. तदेव—६।४८।१२ ।
३. तदेव—१०।२२।८ ।
४. धनञ्जयनाममाला—११५ ।
५. किरातार्जुनीयम्—१।४२ ।

= बहिष्करणे—निर् + √हृ [ = हरणे ] > निर्हरति ।
= अन्वाख्याने—निर् + √दिश [ = अतिसर्जने ] > निर्दिशति ।
= प्रत्याख्याने—निर् + √अस [ = गतौ ] > निरस्यति ।
= ईषदर्थे—निस् + √तप [ = ऐश्वर्ये ] > निष्टपति ।
= भृशार्थे—निस् + √पच [ = पाके ] > निष्पचति ।
= शिथिलतायाम्—निस् + √कष [ = हिंसायाम् ] > निष्कषति ।
= निरसने—निस् + √ष्ठिव् [ = निरसने ] > निष्ठीवति ।
= निघ्नत्वे—निस् + √सह [ = मर्षणे ] > निस्सहते ।
= प्रयत्ने—निर् + √ईक्ष [ = दर्शने ] > निरीक्षते ।
= पीडायाम्—निस् + √तनु [ = विस्तारे ] > निस्तनोति ।
= प्रतिक्रियायाम्—निस् + √क्री [ = करणे ] > निष्क्रीणाति ।
= आग्रहे—निर् + √वन्ध [ = वन्धे ] > निर्वध्नाति ।
= खेदे—निर् + √विद् [ = ज्ञाने ] > निर्विद्यते ।
= कात्स्न्र्ये—निर् + √मूल [ = प्रतिष्ठायाम् ] > निर्मूलयति ।
= उपभोगे—निर् + √विश [ = प्रवेशने ] > निर्विशति ।
= शान्तौ—निर् + √वा [ = गतिगन्धनयोः ] > प्रदीपो निर्वाति ।
= सुखावाप्तौ—निर् + √वृ [ = वरणे ] > निर्वृणोति ।

**(८) दुस् > दुर्** = पापार्थे—दुर् + धियः > दूढ्यः = पापबुद्धीनित्यर्थः[१] ।
= अशक्यार्थे—दुर् + √दम्भ् [ = दम्भने ] > दुर्दमः[२] ।
= दूरार्थे—दुर् + य > दुर्यः = दूरे भव इत्यर्थः[३] ।
= दुष्टार्थे—दुर + मेधषाम् > दुर्मेधषां सङ्गतिरेव मा भूत्[४] ।
= निषेधे—दुर् + निवारम् > दुर्निवारम् = अनिवार्यमित्यर्थः[५] ।

**(९) वि** = विशेषे—वि + √राज् [ = दीप्तौ ] > विराजते ।
= विरोधे—वि + प्रति + √पद [ = गतौ ] > विप्रतिपद्यते ।
= व्याप्तौ—वि + √भू [ = सत्तायाम् ] > विभवति ।
= विनिमये—वि + √क्री [ = द्रव्यविनिमये ] > विक्रीणीते ।
= अत्यये—वि + √वास [ = उपसेवायाम् ] > विवासयति ।
= व्यत्यासे—वि + √क्षिप [ = प्रेरणे ] > विक्षिपति ।

---

१. ऋ०सं०–१।९४।८–स्कन्दभाष्यम् । २. तदेव–२।२८।८–सायणभाष्यम् ।
३. तदेव–१।५१।१४–सायणभाष्यम् ।
४. अथर्ववेदः–४।३६।१; गणरत्नावलीवृत्तिः–१।४।२६ ।
५. गणरत्नावली–१।४।२६–भट्टयज्ञेश्वरविरचिता वृत्तिः (हस्तलिखितग्रन्थः) ।

= व्यतिकरे—वि + अति + √ष्वञ्ज [ = परिष्वङ्गे ] > व्यतिषिजति ।
= व्यतिहारे—वि + अति + √लू [ = छेदने ] > व्यतिलुनीते ।
= विस्तारे—वि + √तनु [ = विस्तारे ] > वितनुते ।
= उपरमे—वि + √श्रमु [ = तपसि खेदे च ] > विश्राम्यति ।
= व्याजे—वि + अप + √दिश [ = अतिसर्जने ] > व्यपदिशति ।
= आसञ्जने—वि + √लगि [ = गतौ ] > विलगति ।
= अर्थवैपरीत्ये—वि + √रञ्ज [ = रागे ] > विरज्यति ।
= प्रत्यये—वि + √श्वस [ = प्रारणे ] > विश्वसिति ।
= पर्याये—वि + √शी [ = शये ] > विशेते ।
= परावृत्तौ—वि + आ + √वृतु [ = वर्तने ] > व्यावर्तते ।
= प्रतिबन्धे—वि + √ष्टभि [ = प्रतिवन्धे ] > विष्टम्भते ।
= प्रकाशने—वि + √वृ [ = वरणे ] > विवृणोति ।
= प्रेष्ये—वि + आ + √दिश [ = अतिसर्जने ] > व्यादिशति ।
= अन्वेषणे—वि + √ईक्ष [ = दर्शने ] > वीक्षते ।
= प्रत्येकार्थे—वि + द्युमन्तः > विद्युमन्तः = प्रत्येकम्[१] ।
= द्विशब्दार्थे—वि + एक + √नट [ = अवस्यन्दने ] > वेकनाटान्[२] ।
= मोचनार्थे—वि + √षि [ = बन्धने ] > विसितम्[३] ।
= करणार्थे—वि + √धा [ = धारणे ] > विधीयते[४] ।
= अनेकार्थे—वि + √वृ [ = वरणे ] > विवव्रे[५] ।
= प्रसारणे—वि + आ + √दा [ = दाने ] > व्याददाति ।
= मीमांसायाम्—वि + √चर [ = गतौ ] > विचारयते ।
= ऊहार्थे—वि + √तर्क [ = भाषार्थे ] > वितर्कयति ।
= विमोहे—वि + √भ्रमु [ = अनवस्थाने ] > विभ्राम्यति ।
= विमतौ—वि + √वद [ = व्यक्तायां वाचि ] > विवदन्ते ।
= वैरे—वि + √रुध [ = कामे ] > विरुणद्धि ।
= वण्टने—वि + √भज [ = सेवायाम् ] > विभजते ।
= चेष्टायाम्—वि + आ + √पृ [ = पालनपूरणयोः ] > व्याप्रियते ।
= वैदग्ध्ये—वि + उत् + √पद [ = गतौ ] > व्युत्पद्यते ।
= क्रीडायाम्—वि + √हृ (ञ्) [ = हरणे ] > विहरति ।

---

१. ऋ० सं०–५।६८।२ ।
२. तदेव–८।६६।१० ।
३. तदेव–८।५।९ ।
४. गीता–२।६७—जयतीर्थव्याख्या ।
५. ऋ० सं०–१।६२।७ ।

= क्रियायाम्—वि + √धा [ = धारणपोषणयोः ] > विदधाति ।
= कालहरणे—वि + √लबि [ = अवस्रंसने ] > विलम्बते ।
= परिणये—वि + √वह [ = प्रापणे ] > विवहति ।
= परिणामे—वि + √वृतु [ = वर्तने ] > विवर्तते ।
= परिखेदे—वि + √षि (त्र्) [ = बन्धने ] > विषीदति ।
= निद्रोच्छेदे—वि + √बुध [ = अवगमने ] > विबुध्यते ।
= दूरे—वि + प्र + √कृष [ = विलेखने ] > विप्रकृष्यते ।
= उद्योगे—वि + अव + √अस [ = भुवि ] > व्यवस्यति ।
= अयोगे—वि + अति + √रिच [ = वियोजने ] > व्यतिरिच्यते ।
= निशामने—वि + √ज्ञा [ = अवबोधने ] > विज्ञापयति ।
= आश्चर्ये—वि + √स्मि [ = ईषद्धसने ] > विस्मयते ।
= शौर्ये—वि + √क्रमु [ = पादविक्षेपे ] > विक्रामति ।
= शिक्षायाम्—वि + √णी [ = प्रापणे ] > विनयते ।
= विशब्दने—वि + आ + √हृ [ = हरणे ] > व्याहरति ।
= विनाशे—वि + √पद [ = गतौ ] > विपद्यते ।
= नानात्वे—वि + √कल [ = शब्दसंख्यानयोः ] > विकल्पते ।
= अन्यथात्वे—वि + अभि + √चर [ = गतौ ] > व्यभिचरति ।
= रचनायाम्—वि + √रच [ = प्रतियत्ने ] > विरचयति ।
= दाने—वि + √तॄ [ = प्लवनतारणयोः ] > वितरति ।
= दर्शने—वि + √लोक् [ = दर्शने ] > विलोकयति ।
= प्रेषणार्थे—वि + √सृज [ = विसर्गे ] > विसर्जयति[1] ।
= विकल्पभूयस्त्वे—वि + √शक [=विभाषितोमर्षणे] > विशङ्कमानः[2] ।

(१०) आ > आङ् = आभिमुख्ये—आ + √गम्‌ [ = गतौ ] > आगच्छति ।
= आलेख्ये—आ + √लिख [ = अक्षरविन्यासे ] > चित्रमालिखति ।
= आक्रमणे—आ + √क्रमु [ =पादविक्षेपे ] > आक्रमन्ते ।
= करणे—आ + √वह [ = प्रापणे ] > आवहति ।
= ग्रहणे—आ + √दा [ = दाने ] > आदत्ते ।
= घर्षणे—आ + √स्कन्द [ = गतिशोषणयोः ] > आस्कन्दति ।
= आश्लेषणे—आ + √लिगि [ = गतौ ] > आलिङ्गति ।
= शापे—आ + √क्रुश [ = आह्वाने रोदने च ] > आक्रोशति ।
= वाञ्छायाम्—आ + √शास् [ = इच्छायाम् ] > आशास्ते ।
= निषेधे—आ + √क्षिप [ = प्रेरणे ] > आक्षिपति ।

---

१. नैषधीयचरितम्–९।३७ । २. किरातार्जुनीयम्–१।७ ।

= स्पर्धायाम्—आ + √ह्वे [ =आह्वाने ] >आह्वयते ।
= आनमने—आ + √वृजी [ = वर्जने ] >आवर्जिता ।
= वधे—आ + √लभ [ = प्राप्तौ ] >आलभते ।
= आदिविधौ—आ + √कृ [ = करणे ] >आक्रियते ।
= विस्रम्भे—आ + √श्वस [ = प्राणने ] >आश्वसिति ।
= आरम्भे—आ + √रभ [ = राभस्ये ] >आरभते ।
= सम्भ्रमे—आ + √गृह्व [ = ग्रहणे ] >आगृह्णाति ।
= अभ्यवहारे—आ + √ष्वद [ = आस्वादने ] >आस्वादयति ।
= क्षिप्रार्थे—आ + √इ [ = गतौ ] >आ इत्[1] = क्षिप्रमेत ।
= अवार्गर्थे—आ + नि + √षद् [ =शातने ] >आनिषीदत्[2] ।
= चार्थे—आ + मानुषेषु >मानुषेष्वा[3] ।
= मर्यादायाम्—आ + उपाक् >आ उपाक्[4] ।
= अध्यर्थे—आ + √ब्रू (ञ्) [ = व्यक्तायां वाचि ] >आब्रुवन्[5] ।
= प्रतिशब्दार्थे—आ + √वद [ = वक्तायां वाचि ] >आवदता[6] ।
= ईषदर्थे—आ + मा + √रिष [ = हिंसायाम् ] >आ मा रीरिषः[7] ।
= समुपसर्गार्थे—आ + √भज [ = सेवायाम् ] >आभज=संभज ।
= स्विदित्यस्यार्थे—आ + √भू [ = सत्तायाम् ] >आ भवाति[8] ।
= प्रश्नार्थे—आ + √भू [ = सत्तायाम् >कियत्या भवति[9] ।
= पूरणार्थे—आ + √या [ = प्रापणे ] >आ याहि[10] ।
= आदरार्थे—आ + मित्र >आ नो मित्र[11] ।
= उपमार्थे—आ + जारः >जारः आ = आदित्यो यथा[12] ।
= आधिपत्ये—आ + प्र + √या [ = प्रापणे ] >आप्रयाति[13] ।
= सर्वतोभावे—आ + √वृष [ =शक्तिबन्धने ] >आवृषायध्वम्[14] ।
= स्फुटार्थे—आ + परि + √तुष [ = प्रीतौ ] >आपरितोषात्[15] ।
= भृशार्थे—आ + अभि + √रमु [ =क्रीडायाम् ] >आभिरामैः[16] ।

---

१. ऋ० सं०–१।५।१ ।
२. तदेव–२।२२।८, ६।४७,३१, १०।१९।६ ।
३. तदेव–१।२५।१५ ।
४. तदेव–१।२७।६, १।७१।६ ।
५. तदेव–१।३७।१३, ६।३८।२, शु० यजु०–१७।६ ।
६. ऋ०सं०–१।६४।९ ।
७. तदेव–१।१०४।६ ।
८. तदेव ।
९. तदेव–१।११३।१० ।
१०. तदेव–२।३०।१ ।
११. तदेव–३।४३।२, शुक्लय०–३३।६५ ।
१२. ऋ० सं०–५।६४।५ ।
१३. तदेव–१०।११।६ ।
१४. शुक्लय०–१०।२७ ।
१५. छा० ब्रा०–२।३।६ ।
१६. अभिज्ञानशा०–१।२ ।

= खेदे—आ + √वृजी [ = वर्जने ] >आवर्जनम्[१]।

= तात्वदर्थे—आ + √वृतु [ = वर्तने ] >आ णिवत्तसु[२]।

= स्नाने—आ + √प्लु (ङ्) [ = गतौ ] >आप्लुषते।

= संस्थाने—आ + √कृ [ = करणे ] >आक्रियते।

= सम्प्रदाने—आ + √मन [ = ज्ञाने ] >आमनति।

= दर्शने—आ + √लोक् [ = दर्शने ] >आलोकते।

= विमर्शे—आ + √लोच् [ = दर्शने ] >आलोचयति।

= विज्ञाने—आ + √भास [ = दीप्तौ ] >आभासते।

= आज्ञापने—आ + √दिश [ = अतिसर्जन ] >आदिशति।

= पारतन्त्र्ये—आ + √यती [ = प्रयत्ने ] >आयतते।

= त्यागे—आ + √प्रच्छ [ = ज्ञीप्सायाम् ] >आपृच्छते।

= वृत्तौ—आ + √जीव [ = प्राणधारणे ] >आजीवति।

= आवृत्तौ—आ + √म्रेड् [ = उन्मादे ] >आम्रेडयति।

= प्राप्तौ—आ + √पद [ = गतौ ] >आपद्यते।

= प्रतिश्रवे—आ + √श्रु [ = श्रवणे ] >आश्रृणोति।

= विस्तारे—आ + √यम [ = उपरमे ] >आयच्छते।

= आवरणे—आ + √स्तृ [ = आच्छादने ] >आस्तृणोति।

= आह्वाने—आ + √कृ [ = करणे ] >आकारयति।

= आध्याने—आ + √णह [ = बन्धने ] >आनह्यति।

= स्थाने—आ + √श्रि [ = सेवायाम् ] >आश्रयति।

= उपस्थाने—आ + √राध [ = संसिद्धौ ] >आराधयति।

= आतङ्के—आ + √शक [ = विभाषितोमर्षणे ] >आशङ्कते।

= श्रमे—आ + √यसु [ = प्रयत्ने ] >आयस्यति।

= उपरमे—आ + √रमु [ = क्रीडायाम् ] >आरमति।

= वचने—आ + √चक्ष् [ = व्यक्तायां वाचि ] >आचष्टे।

= सञ्चये—आ + √चि [ = चयने ] >आचिनोति।

= नियोगे—आ + √युज् [ = योगे ] >आयुज्यते।

= उत्कण्ठायाम्—आ + √णु [ = स्तुतौ ] >आनुते।

= कालहरणे—आ + √गम् [ = गतौ ] >आगमयस्व।

= अवष्टम्भे—आ + √लवि [ = अवस्रंसने ] >आलम्बते।

= सम्भाषणे—आ + √भाष [ = व्यक्तायां वाचि ] >आभाषते।

= भूषणे—आ + √कल [ = गतौ संख्याने च ] >आकल्पयति।

---

१. किरातार्जुनीयम्–३।१।

२. ध्वन्यालोकः–१।१६।

(११) नि = न्यग्भावे—नि + √हन [ = हिंसागत्योः ] > निहन्यते ।
= न्यासे—नि + √क्षिप [ = प्रेरणे ] > निक्षिपति ।
= समाप्तौ—नि + √स्था [ = गतिनिवृत्तौ ] > नितिष्ठति ।
= स्वापे—नि + √द्रा [ = कुत्सायां गतौ ] > निद्राति ।
= स्वभावे—नि + √सृज् [ = विसर्गे ] > निसृजति ।
= परिभवे—नि + √गृह [ = ग्रहणे ] > निगृह्णीते ।
= व्यावृत्तौ—नि + √वृतु [ = वर्तने ] > निवर्तते ।
= अवस्थाने—नि + √वस [ = निवासे ] > निवसति ।
= कथने—नि + √विद् [ = ज्ञाने ] > निवेदयति ।
= नियोगे—नि + √मत्रि [ = गुप्तपरिभाषणे ] > निमन्त्रयति ।
= निगमने—नि + √गम् [ = गतौ ] > निगच्छति ।
= आधाने—नि + √षिच [ =क्षरणे ] > निषिञ्चति ।
= निशामने—नि + √शम [ = आलोचने ] > निशाम्यति ।
= तेजने—नि + √शान [ = तेजने ] > निशातयति ।
= उदाहरणे—नि + √दृश् [ = प्रेक्षणे ] > निदर्शयति ।
= वारणे—नि + √षिधु [ = संराद्धौ ] > निषेधयति ।
= कारणे—नि + √दा [ = दाने ] > निदत्ते ।
= राशीकरणे—नि + √चि [ = चयने ] > निचिनोति ।
= दर्शने—नि + √ध्यै [ = चिन्तायाम् ] > निध्यायति ।
= निमाने—नि + √मी [ = हिंसायाम् ] > निमिमीते ।
= नैपुण्ये—नि + √ष्णा [ = शौचे ] > निष्णाति ।
= ग्रसने—नि + √गॄ [ = निगरणे ] > निगिरति ।
= हिंसायाम्—नि + √हन् [ = हिंसागत्योः ] > निहन्ति ।
= अपनयने—नि + √कृती [ = छेदने ] > निकृन्तति ।
= पितृक्रियायाम्—नि + √वप् [ = बीजसन्ताने ] > निवपति ।
= अक्षिकर्मणि—नि + √मील [ = निमेषणे ] > निमीलति ।
= आङर्थे—नि + √क्रमु [ = पादविक्षेपे ] > निक्रमी[1] ।
= प्रकर्षार्थे—नि + √मृक्ष [ = सङ्घाते ] > निमिमृक्षुः[2] ।
= परीक्षायाम्—नि + √रूप [ = रूपक्रियायाम् ] > निरूपयति ।

---

१. ऋ० सं०—१।५१।६ । २. तदेव—१।६४।४ ।

= रतोत्सवे—नि + √चुवि [ = वक्त्रसंयोगे ] > निचुम्बति ।
= अपवादे—नि + √दिश [ = अतिसर्जने ] > निदिशति ।
= सादृश्ये—नि + √काश् [ = दीप्तौ ] > निकाशते ।
= न्यक्शब्दार्थे—नि + √कृ [ = करणे ] > निकुरु = न्यक्कुरु[1] ।
= नितरांशब्दार्थे—नि + पुरः > निपुरः[2] ।
= प्राप्त्यर्थे—नि + √गम् [ = गतौ ] > निगच्छति[3] ।
= अभावार्थे—नि + √षेव् [ = सेवने ] > निषेवितव्यम्[4] ।

(१२) अधि= आधिक्ये—अधि + आ + √हृ [ = हरणे] > अध्याहरति ।
= आधिपत्ये—अधि + √स्था [ = गतिनिवृत्तौ ] > अधितिष्ठति ।
= उपरिभावे—अधि + √देव् [ = देवने ] > अधिदेवते[5] ।
= सकाशार्थे—अधि + पुरुषात् > पुरुषादधि[6] ।
= उत्सङ्गार्थे—अधि + शर्म > शर्म अधि[7] ।
= प्रधानार्थे—अधि + पुरुषः > अधिपुरुषः[8] ।
= वार्थे—अधि + √रुच [ = दीप्तौ ] > रोचनादधि[9] ।
= पूरणार्थे—अधि + √धा [ = धारणपोषणयोः ] > अधि धेहि[10] ।
= प्रस्तावे—अधि + √कृ [ = करणे ] > अधिक्रियते ।
= सहाभिधाने—अधि + √इ [ = अध्ययने ] > अधीते ।
= ऊर्ध्वयाने—अधि + √रुह [ = प्रादुर्भावे ] > अधिरोहति ।
= ज्ञाने—अधि + √गम् [ = गतौ ] > अधिगच्छति ।
= अवस्थाने—अधि + √वस [ = निवासे ] > अधिवसति ।
= प्रेरणे—अधि + √इष [ = गतौ ] > अध्येषयति ।
= आरोपणे—अधि + √ अस [ = भुवि ] > अध्यस्यति ।
= अङ्गीकारे—अधि + √कृ [ = करणे ] > अधिकरोति ।
= अत्याकारे—अधि + √क्षिप [ = प्रेरणे ] > अधिक्षिपति ।
= सपत्नीलाभे—अधि + √विद् [ = लाभे ] > अधिविन्दति ।
= पाकारम्भे—अधि + √श्री (ञ्) [ = पाके ] > अधिश्रयति ।

---

१. ऋ० सं०–४।५५।३, छा० ब्रा०–२।३।४ ।
२. याज्ञवल्क्यस्मृतिः–३।११५, गीता–९।३१ ।
३. अभिज्ञानशा०–१।२६ ।
४. अथर्ववेदः–७०।३।१, शुक्लय०–३१।५, छा०ब्रा०–२।१।१६ ।
५. अथर्ववेदः–७०।३।१, शुक्लय०–३१।५, छा० ब्रा०–२।१।१६ ।
६. शुक्लय०–३२।२ ।
७. छा० ब्रा० १।५।१२ ।
८ शुक्लय० ३१।५ ।
९. ऋ० सं०–१।६।९ ।
१०. ऋ० सं०–६।६५।६ ।

= प्रहसने—अधि + √कृ [ =करणे ] >अधिकुरुते ।
= बुभुत्सायाम्—अधि + अव + √अस [ = भुवि ] >अध्यवस्यति ।
= अध्ययनार्थे—अधि + √इ [ = अध्ययने ] >अधीते[1] ।

(१३) प्रति = पदप्राप्तौ—प्रति + √स्था [ = गतिनिवृत्तौ ] >प्रतितिष्ठति ।
= तुष्टौ—प्रति + √नदि [ = समृद्धौ ] >प्रतिनन्दति ।
= सेवायाम्—प्रति + √श्रि [ = सेवायाम् ] >प्रतिश्रयति ।
= निवारणे—प्रति + √षिधु [ = संराद्धौ ] >प्रतिषेधति ।
= व्यलीकाविष्करणे—प्रति + उप + आ + √लभ [ = प्राप्तौ ] >प्रत्युपालभते ।
= कालहरणे—प्रति + √ईक्ष [ = दर्शने ] >प्रतीक्षते ।
= निष्क्रये—प्रति + उप + √कृ [ = करणे ] >प्रत्युपकुरुते ।
=ज्ञाने—प्रति + √पद [ = गतौ ] >प्रतिपद्यते ।
= अनुसन्धाने—प्रति + अभि + √ज्ञा [=अवबोधने] >प्रत्यभिजानाति ।
= अनुमतौ—प्रति + √इ [ = गतौ ] >प्रत्येति ।
= अभिमतौ—प्रति + √भा [ = दीप्तौ ] >प्रतिभाति ।
= प्रोत्साहने—प्रति + √गृह [ =ग्रहणे ] >प्रतिगृह्णाति ।
= अविनाभावे—प्रति + √बन्ध [ = बन्धने ] >प्रतिबध्नाति ।
= सङ्गरे—प्रति + √ज्ञा [ =अवबोधने ] >प्रतिजानीते ।
= अङ्गविकारे—प्रति + √गृह [ = ग्रहणे ] >प्रतिगृह्णाति ।
= विनिमये—प्रति + √दा [ = दाने ] >प्रतिददाति ।
= व्यावृत्तौ—प्रति + आ + √गम् [ = गतौ ] >प्रत्यागच्छति ।
= उपमार्थे—प्रति + सूर्यः >प्रतिसूर्यः = सूर्योऽपि हिरण्यमिव[2] ।
= दिवसशब्दार्थे—प्रति + दोषम् >प्रतिदोषम् = प्रत्यहनीत्यर्थः[3] ।
= पुनरावृत्तौ—प्रति + उत् + √जीव [ = प्राणधारणे ] >प्रत्युज्जीवति ।
= वैपरीत्ये—प्रति + अव + √स्था [ = गतिनिवृत्तौ ] >प्रत्यवतिष्ठते ।
= निघ्ने—प्रति + √ऊह [ = वितर्के ] >प्रत्यूहते ।
= विनिद्रत्वे—प्रति + √बुध [ =अवगमने ] >प्रतिबुध्यते ।
= अवेक्षणे—प्रति + सम् + √धा [ = धारणपोषणयोः] >प्रतिसन्धत्ते ।
= प्रक्षेपे—प्रति + √वप् [ =बीजसन्ताने ] >प्रतिवपति ।
= संक्षेपे—प्रति + आ + √हृ [ = हरणे ] >प्रत्याहरति ।

---

१. गणरत्नमहोदधिः ।

२. ऋ० सं०–१।४६।१० । ३. तदेव–६।७१।४ ।

= स्पर्धायाम्—प्रति + √गम् [ = गतौ ] > प्रतिगच्छति ।
= सादृश्ये—प्रति + नि + √धा [ = धारणपोषणयोः ] > प्रतिनिधत्ते ।
= दानार्थे—प्रति + √वद [ = व्यक्तायां वाचि ] > प्रतिवादयति[१] ।
= संश्रवे—प्रति + √श्रु [ = श्रवणे ] > प्रतिश्रृणोति ।
= उत्तरे—प्रति + √ब्रू [ = व्यक्तायां वाचि ] > प्रतिब्रूते ।
= आदाने—प्रति + √गृह [ = ग्रहणे ] > प्रतिगृह्णाति ।
= यत्ने—प्रति + वि + √धा [ = धारणपोषणयोः ] > प्रतिविधत्ते ।

(१४) **परि** = उपरिभावे—परि + विद्युतः > विद्युतस्परि[२] ।
= पालनार्थे—परि + √पा [ = रक्षणे ] > परिपाहि[३] ।
= सर्वतोभावे—परि + √णी [ = प्रापणे ] > परिनयामः[४] ।
= अप्यर्थे—परि + सायम् > मध्याह्नकालेऽपि[५] ।
= व्यवस्थायाम्—परि + √भाष [ = व्यक्तायां वाचि ] > परिभाषते ।
= विवाहे—परि + √णी [ = प्रापणे ] > परिणयति ।
= विनिमये—परि + √वृतु [ = वर्तने ] > परिवर्तते ।
= विवर्ते—परि + √णम [ = प्रह्वत्वे ] > परिणमते ।
= वर्जने—परि + √हृ [ = हरणे ] > परिहरति ।
= न्यक्कारे—परि + √भू [ = सत्तायाम् ] > परिभवति ।
= निन्दायाम्—परि + √वद [ = व्यक्तायां वाचि ] > परिवदति ।
= नर्मणि—परि + √हसे [ = हसने ] > परिहसति ।
= निवसने—परि + √धा [ = धारणपोषणयोः ] > परिधत्ते ।
= विज्ञाने—परि + √छिद् [ = द्वैधीकरणे ] > परिच्छिनत्ति ।
= परिज्ञाने—परि + √ईक्ष [ = दर्शने ] > परीक्षते ।
= आलिङ्गने—परि + √रभ [ = राभस्ये ] > परिरभते ।
= निश्चये—परि + √इ [ = गतौ ] > पर्येषि[६] ।
= अतिशये—परि + √क्षि [ = क्षये ] > परिक्षयः[७] ।
= अनुशोचने—परि + √दिवु [ = क्रीडाविजिगीषयोः ] > परिदेवयति ।
= निर्गमे—परि + √वह [ = प्रापणे ] > परिवहति ।
= अपवर्तने—परि + √अस [ = भुवि ] > पर्यस्यति ।

---

१. मृच्छकटिकम्—२, पृ० ११३—लल्लदीक्षितव्याख्या ।
२. ऋ० सं०—१।२३।१२ ।
३. अथर्ववेदः—२।७।३ ।
४. तदेव—२८।२।१ ।
५. तदेव—१०८।२५ ।
६. किरातार्जुनीयम्—१।४४ ।
७. तदेव—२।८ ।

= विस्तारे—परि + √णह [ = बन्धने ] > परिणह्यति ।
= वेष्टने—परि + √वृ [ = वरणे ] > परिवृणोति ।
= आकोटने—परि + √वास [ = उपसेवायाम् ] > परिवासयति ।
= क्रमे—परि + √पट [ = गतौ ] > परिपटति ।
= सम्प्रदाने—परि + √उक्ष [ = सेचने ] > पर्युक्षति ।
= स्पर्शे—परि + √मृश [ = आमर्शने ] > परिमृशति ।
= शिक्षायाम्—परि + √विद् [ = लाभे ] > परिविन्दति ।
= अवशेषणे—परि + √शिष [ = असर्वोपयोगे ] > परिशिनष्टि ।
= भूषणे—परि + √कृ [ = करणे ] > परिष्करोति ।
= सेवायाम्—परि + √चर [ = गतौ ] > परिचरति ।
= स्वीकारे—परि + √गृह [ = ग्रहणे ] > परिगृह्णाति ।
= सन्न्यासे—परि + √व्रज [ = गतौ ] > परिव्रजति ।
= सामर्थ्ये—परि + √आप् [ = व्याप्तौ ] > पर्याप्नोति ।
= साङ्गत्ये—परि + √चि [ = चयने ] > परिचिनोति ।
= लाघवे—परि + √प्लु [ = गतौ ] > परिप्लवते ।

(१५) उप = सामीप्ये—उप + √सृप् [ = गतौ ] > उपसर्पति ।
= सात्म्ये—उप + √शी [ = शये ] > उपशेते ।
= आनुकूल्ये—उप + √ष्विदा [ = स्नेहने ] > उपसीदति ।
= सेवायाम्—उप + √अस [ = भुवि ] > उपास्ते ।
= आरम्भे—उप + √क्रम [ = पादविक्षेपे ] > उपक्रमते ।
= आराधने—उप + √स्था [ = गतिनिवृत्तौ ] > उपतिष्ठते ।
= उपप्रदाने—उप + √चर [ = गतौ ] > उपचरति ।
= प्रजने—उप + √सृ [ = गतौ ] > उपसर्या गौः ।
= सामर्थ्ये—उप + √कल [ = शब्दसंख्यानयोः ] > उपकल्पते ।
= प्रार्थने—उप + √याच् [ = याच्ञायाम् ] > उपयाचते ।
= प्रस्तावनायाम्—उप + √क्षिप [ = प्रेरणे ] > उपक्षिपति ।
= प्रतिशब्दार्थे—उप + √गम् [ = गतौ ] > उपगच्छताम्[1] ।
= पौनःपुन्यार्थे—उप + उप + √श्रु [ = श्रवणे ] > उपोप श्रवः[2] ।
= उपचयार्थे—उप + शिवे > उप शिवे[3] ।
= प्रतियत्ने—उप + आ + √गम् [ = गतौ ] > उपागतः[4] ।

---

१. ऋ० सं०–१।३१।४ ।
२. तदेव–८।७४।९ ।
३. शुक्लयजुर्वेदः–२।१९ ।
४. किरातार्जुनीयम्–३।२३ ।

= अवज्ञायाम्—उप + √हसे [ = हसने ] > उपहसति ।
= विज्ञाने—उप + √लभ [ = प्राप्तौ ] > उपलभते ।
= आलिङ्गने—उप + √गुहू [ = संवरणे ] > उपगूहति ।
= अङ्गीकारे—उप + √गम् [ = गतौ ] > उपगच्छति ।
= उपालिङ्गे—उप + √सृज [ = विसर्गे ] > उपसृजति ।
= वचने—उप + नि + √अस [ = भुवि ] > उपन्यस्यति ।
= आचमने—उप + √स्पृह [ = संस्पर्शने ] > उपस्पृशति ।
= चिह्ने—उप + √लक्ष [ =आलोचने ] > उपलक्षयति ।
= भोजने—उप + √युज् [ = योगे ] > उपयुङ्क्ते ।
= अभोजने—उप + √वस [ = निवासे ] > उपवसति ।
= उपभोगे—उप + √भुज [ =पालनाभ्यवहारयोः ] > उपभुङ्क्ते ।
= भेदने—उप + √जप [ = व्यक्तायां वाचि ] > उपजपति ।
= आसने—उप + √वस [ = आच्छादने ] > उपवसति ।
= औदासीन्ये—उप + √ईक्ष [ = दर्शने ] > उपेक्षते ।
= दाक्षिण्ये—उप + √रुध [ = कामे ] > उपरुध्यते ।
= शिक्षायाम्—उप + √दिश [ = अतिसर्जने ] > उपदिशति ।
= सादृश्ये—उप + √मी [ = गतौ ] > उपमिमीते ।
= अनुग्रहे—उप + √कृ [ = करणे ] > उपकरोति ।
= ग्रहणे—उप + आ + √दा [ = दाने ] > उपादत्ते ।
= गर्हणे—उप + आ + √लभ [ = लाभे ] > उपालभते ।
= अलङ्कारे—उप + √कृ [ = करणे ] > उपस्करोति ।
= अपकारे—उप + √दृ [ = विदारणे ] > उपद्रवति ।
= कर्मधारणे—उप + √वह [ = प्रापणे ] > उपवहति ।
= वृद्धौ—उप + √चि [ = चयने [ > उपचिनोति ।
= बन्धने—उप + √णह [ = बन्धने ] > उपनह्यति ।
= उपधाने—उप + √धा [ = धारणपोषणयोः ] > उपदधाति ।
= औद्धत्ये—उप + √प्लु [ = गतौ ] > उपप्लवते ।
= यज्ञकर्मणि—उप + √कृ [ = करणे ] > उपकरोति ।
= आचार्यके—उप + √णी [ = प्रापणे ] > माणवकमुपनयति ।
= पर्याये—उप + √शी [ = शये ] > अध्यायमुपशेते ।
= युक्तौ—उप + √पद [ = गतौ ] > उपपद्यते ।
= सान्त्वने—उप + √वद [ = व्यक्तायां वाचि ] > उपवदते ।
= सन्तपने—उप + √तप [ = सन्तापे ] > उपतपति ।

= छायायाम्—उप + √रञ्ज [ = रागे ] > उपरज्यति ।
= उपच्छन्दने—उप + √वद [ = व्यक्तायां वाचि ] > परदारानुपवदते ।
= विनाशे—उप + √रमु [ = क्रीडायाम् ] > उपरमते ।
= व्यावृत्तौ—उप + आ + √वृतु [ = वर्तने ] > उपावर्त्तते ।
= आजीवे—उप + √जीव [ = प्राणधारणे ] > उपजीवति ।
= विवाहे—उप + √यम [ = उपयमे ] > कन्यामुपयच्छते ।

(१६) अति = अतिक्रमे—अति + √वृतु [ = वर्तने ] > अतिवर्तते ।
= अतिक्रान्तौ—अति + अन्धः > अन्धः अति[१] = तमोऽतीत्य ।
= नित्यार्थे—अति + अन्तम् > अत्यन्तम् = नित्यमित्यर्थः[२] ।
= दानार्थे—अति + √सृज [ = विसर्गे ] > अतिसर्जनात्[३] ।
= विध्यर्थे—अति + परि + √स्फुट [ = विकसने ] > अतिपरिस्फुटः[४] ।
= अतिवृत्तौ—अति + √पत [ = गतौ ] > अतिपतति ।
= अतिदेशे—अति + √दिश [ = अतिसर्जने ] > अतिदिशति ।
= अतिशये—अति + वि + √आप् [ = व्याप्तौ ] > अतिव्याप्नोति ।
= दुर्नये—अति + √वृ [ = वरणे ] > अतिवरति ।
= अधिक्षेपे—अति + आ + √कृ [ = करणे ] > अत्याकरोति ।
= आधिक्ये—अति + √रिच् [ = विरेचने ] > अतिरिच्यते ।
= यापने—अति + √वह [ = प्रापणे ] > अतिवाहयति ।
= आरोपणे—अति + आ + √धा [ =धारणपोषणयोः ] > अत्यादधाति ।
= अपहसने—अति + √हसे [ = हससे ] > अतिहसति ।
= अनुज्ञायाम्—अति + √सृज [ = विसर्गे ] > अतिसृजति ।
= अनुबन्धे—अति + √गृह [ = ग्रहणे ] > अतिगृह्णाति ।
= निर्बन्धे—अति + √प्रच्छ [ = ज्ञीप्सायाम् ] > अतिपृच्छति ।
= व्याधौ—अति + √सृ [ = गतौ ] > अतिसरति ।
= विनाशे—अति + √इ [ = गतौ ] > अत्येति ।
= भृशार्थे—अति + √रञ्ज [ = रागे ] > अतिरज्यते ।

(१७) अपि = अपिधाने—अपि + √धा [ =धारणपोषणयोः ] > अपिधत्ते ।
= एवार्थे—अपि + √कृ [ = करणे ] > अपि चकृया[५] ।
= सन्निकृष्टार्थे—अपि + यज्ञियस्य > अपि यज्ञियस्य[६] ।
= सम्भावनायाम्—अपि + √भू [ = सत्तायाम् ] > अप्यभूः[७] ।

---

१. ऋ० सं०–१।९४।७ । २. मेघसंदेशः–२।४२ । ३. कु० सं० ४।३२ ।
४. अभि० शा० ५।१३ ।
५. ऋ० सं०–२।६।८ । ६. तदेव–६।४७।१३ । ७. अथर्ववेदः–२।१०।७ ।

= अध्यर्थे—अपि + √स्था [ = गतिनिवृत्तौ ] >अप्यतिष्ठत्[1] ।
= समुच्चये—अपि + स्वधर्मम् >स्वधर्ममपि[2] ।
= विकल्पे—अपि + √त्यज [ = हानौ ] >अपि तत्यजेत[3] ।
= अनिच्छायाम्—अपि + √हा [ = त्यागे ] >सोऽपि विजहाति[4] ।
= मार्दवे—अपि + कुसुमानि >कुसुमान्यपि[5] ।
= अनुनयार्थे—अपि + √जीव [ = प्राणधारणे ] >अपि जीवसि[6] ।
= विरोधे—अपि + फलानि >फलान्यपि[7] ।
= अपकर्षे—अपि + शैवलेन >शैवलेनापि[8] ।
= अनुपपन्नार्थे—अपि + √दा [ = दाने ] >अपि ददाति[9] ।
= गौरवे—अपि + मालती >मालत्यपि[10] ।
= विस्मये—अपि + धीरः >धीरोऽपि[11] ।
= वन्धने—अपि + √णह [ = वन्धने ] >अपिनह्यति ।
= उपगमने—अपि + √या [ = प्रापणे ] >अपि यन्ति ।

(१८) सु = अकृच्छ्रार्थे—सु + √कृ [ = करणे ] >सुकरम् ।
= सौष्ठवे—सु + √मन [ = ज्ञाने ] >सुमनायते ।
= शोभनार्थे—सु + √इ [ = गतौ ] >सुविताय[12] ।
= सुष्ठ्वर्थे—सु + √णम [ = प्रह्वत्वे ] >पू नमध्वम्[13] ।

(१९) उत् = अभ्युदये—उत् + √अय [ = गतौ ] >उदयति ।
= उत्पत्तौ—उत् + √भू [ =सत्तायाम् ] >उद्भवति ।
= समुपसर्गार्थे—उत् + √अव [ = रक्षणे ] >संरक्ष[14] ।
= ऊर्ध्वार्थे—उत् + √तॄ [ =प्लवनतरणयोः ] >उत्तिरन्[15] ।
= उत्पवने—उत् + √पू [ =पवने ] >उत्पुनीते ।
= माने—उत् + √मी [ = माने ] >उन्मिमीते ।
= मर्दने—उत् + √वृतु [ = वर्तने ] <उद्वर्तयति ।
= जीवने—उत् + √जीव [ =प्राणधारणे ] >उज्जीवयति ।
= उदाने—उत् + √श्वस [ = प्राणने ] >उच्छ्वसिति ।
= उद्याने—उत् + √पत [ = गतौ ]>उत्पतति ।

---

१. अथर्ववेदः–३।१३।४ । २. गीता–२।१२, मा० माघ०–३।९४ ।
३. गीता–१८।४८ । ४. रघु०–५।६७ । ५. तदेव–८।४५ ।
६. कु० सं०–४।३, मृच्छक० ४, पृ० १०२ ।
७. कु० सं०–६।१०, नैषधीयम्–१०।१६ । ८. अभि० शा०–१।२० ।
९. अभि० शा०–६।२२ । १०. मा० माघ०–३।५५ । ११. तदेव–३।९४ ।
१२. ऋ० सं०–५।५७।१, तै० सं०–१।६।३ । १३. ऋ० सं०–३।३५।९ ।
१४. ऋ० सं०–१।१०२।४ । १५. अथर्ववेदः–३६।१।२, छा० ब्रा०–२।४।१ ।

= उद्योगे—उत् + √षह [ = मर्षणे ] > उत्सहते ।
= त्यागे—उत् + √सृज [ = विसर्गे ] > उत्सृजति ।
= आरोग्ये—उत् + √लाघ [ = सामर्थ्ये ] > उल्लाघयति ।
= ऊर्ध्वचेष्टायाम्—उत् + √स्था [ = गतिनिवृत्तौ ] > उत्तिष्ठति ।
= विभूषणे—उत् + √तसि [ = अलङ्करणे ] > उत्तंसयते ।
= उत्क्षेपणे—उत् + √अस [ = गतौ ] > उदस्यति ।
= अवेक्षणे—उत् + √दृश् [ = प्रेक्षणे ] > उत्पश्यति ।
= विमोहे—उत् + √श्रमु [ = तपसि खेदे च ] > उच्छ्राम्यति ।
= वारणे—उत् + √सृ [ = गतौ ] > उत्सारयति ।
= विमर्शे—उत् + प्र + √ईक्ष [ = दर्शने ] > उत्प्रेक्षते ।
= पैशुन्ये—उत् + √कृ [ = करणे ] > उत्कुरुते ।
= विनाशे—उत् + √छिद् [ = विदारणे ] > उच्छिद्यते ।
= तापने—उत् + √तप [ = सन्तापे ] > उत्तपति ।
= उपदायाम्—उत् + √कुच [ = कौटिल्ये ] > उत्कोचयति ।
= उपयमने—उत् + √वह [ = प्रापणे ] > उद्वहति ।
= प्रकथने—उत् + √ईर [ = गतौ कम्पने च ] > उदीरयति ।
= निर्वेदे—उत् + √विज् [ = पृथग्भावे ] > उद्विजते ।
= निगमने—उत् + √चर [ = गतौ ] > उच्चरति ।
= विकासे—उत् + √बुध [ = अवगमने ] > उद्बुध्यते ।
= बन्धने—उत् + √बन्ध [ = बन्धने ] > उद्बध्नाति ।
= उद्धरणे—उत् + √हृ [ = हरणे ] > उद्धरति ।
= विलेखने—उत् + √लिख [ = अक्षरविन्यासे ] > उल्लिखति ।
= वृद्धौ—उत् + √श्रि (ञ्) [ = सेवायाम् ] > उच्छ्रयते ।
= माध्यस्थ्ये—उत् + आ + √अस [ = भुवि ] > उदास्ते ।
= प्रशंसायाम्—उत् + √कृष [ = विलेखने ] > उत्कृष्यते ।
= आभासे—उत् + √भास् [ = दीप्तौ ] > उद्भासते ।
= हिंसायाम्—उत् + √जसि [ = मोक्षणे ] > उज्जासयति ।
= विपर्यासे—उत् + √वेल [ = कालोपदेशे ] > उद्वेलयति ।
= औत्सुक्ये—उत् + √कठ [ = कृच्छ्रजीवने ] > उत्कण्ठते ।

(२०) अभि = अभियोगे—अभि + √षि [ = बन्धने ] > अभिषेणयति ।
= आभिमुख्ये—अभि + √गम् [ = गतौ ] > अभिगच्छति ।
= अभिविधौ—अभि + वि + √आप् [ = व्याप्तौ ] > अभिव्याप्नोति ।
= आग्रहे—अभि + नि + √विश [ = प्रवेशने ] > अभिनिविशते ।

= लक्षणार्थे—अभि + √पा [ = पाने ]>अभि पीतये[1] ।
= नियोगे—अभि + √विश [ = प्रवेशने]>अभि निवेशयन्[2] ।
= सुष्ठ्वर्थे—अभि + प्र + √णम [ = प्रह्वत्वे ]>अभि प्रणोनुमः[3] ।
= उपरिभावे—अभि + √स्था [ = गतिनिवृत्तौ ]>अभि तिष्ठामि[4] ।
= स्मरणे—अभि + √ज्ञा [ = अवबोधने ]>अभिजानाति ।
= अनुकारे—अभि + √णी [ = प्रापणं ]>अभिनयति ।
= अङ्गीकारे—अभि + उप + √गम् [ = गतौ ]>अभ्युपगच्छति ।
= न्यक्कारे—अभि + √भू [ = सत्तायाम् ]>अभिभवति ।
= कामनायाम्—अभि + √वाछि [ = इच्छायाम् ]>अभिवाञ्छति ।
= मनोज्ञके—अभि + √रम [ = क्रीडायाम् ]>अभिरमयति ।
= प्रियोपगमने—अभि + √सृ [ = गतौ ]>अभिसरति ।
= अभ्यञ्जने—अभि + √अन [ = प्राणने ]>अभ्यनक्ति ।
= स्नाने—अभि + √षू [ = अभिषवे ]>अभिषुणोति ।
= भोजने—अभि + अव + √हृ [ = हरणे ]>अभ्यवहरति ।
= क्रियायाम्—अभि + आ + √वह [ = प्रापणे ]>अभ्यावहति ।
= आरम्भे—अभि + आ + √दा [ = दाने ]>अभ्याददाति ।
= प्रशंसायाम्—अभि + √नद [ = समृद्धौ ]>अभिनन्दति ।
= हिंसायाम्—अभि + √चर [ = गतौ ]>अभिचरति ।
= सन्तोषे—अभि + √षञ्ज [ = सङ्गे ]>अभिषजति ।
= अक्षमायाम्—अभि + √असु [ = क्षेपणे ]>अभ्यसूयति ।
= प्रक्षेपणे—अभि + आ + √दा [ = दाने ]>अभ्याददाति ।
= आभिक्षण्ये—अभि + आ + √वृतु [ = वर्तने ]>अभ्यावर्तते ।
= अभिमतौ—अभि + √प्री [ = प्रीतौ ]>अभिप्रैति ।
= तुष्टौ—अभि + √मन [ = अवबोधने ]>अभिमन्यते ।
= अभिहतौ—अभि + √तड [ = आघाते ]>अभिताडयति ।
= वचने—अभि + √धा [ = धारणपोषणयोः ]>अभिधत्ते ।
= याच्ञायाम्—अभि + √अर्थ [ = उपयाच्ञायाम् ]>अभ्यर्थयते ।
= वितर्के—अभि + √ऊह [ = वितर्के ]>अभ्यूहति ।
= आतङ्के—अभि + √शकि [ = शङ्कायाम् ]>अभिशङ्कते ।
= वन्दनायाम्—अभि + √वद [ = व्यक्तायां वाचि ]>अभिवादयते ।
= अभ्युदये—अभि + √वृधु [ = वृद्धौ ]>अभिवर्धते ।

---

१. ऋ० सं० १।१९।९ ।
२. ऋ० सं०–१।३५।२ ।
३. तदेव–१।७८।१ ।
४. अथर्ववेदः–४२।३।३ ।

**च गता**[1] इति। स्कन्दस्वामिनोऽप्ययमेवाशयः—**'सनात् इति पञ्चमीनिर्देशात् प्रभृतीति वाक्यशेषः—चिरात् प्रभृतीति**[2]' इति। एभिः प्रमाणैरेतदायाति यत् प्रातिपदिकत्वादर्थवत्कार्यं तु भवत्येव निपातोपसर्गानाधारीकृत्य। समर्थयते च नारायणभट्टः—

**अर्थवत्कार्यमस्त्येवेत्यर्थवत्सूत्र ऊचिवान्।**
**सर्वाव्ययानां तुल्यैव लिङ्गसङ्ख्यादिहीनता**[3]॥

अतो निष्कृष्यते यन्निपातोपसर्गा अपि रूपव्ययवन्तोऽर्थव्ययवन्तश्च। विभक्तिवचनलिङ्गसंख्यास्कन्दनजुषो विकृतयस्तूपलभ्यन्त एव निपातोपसर्गेष्वपि।

अत एव हि निपातसंख्याऽनैयत्येऽन्तरायभूता बहवो हेतवो दृष्टिपथमायान्ति। क्वचिन्निपाताः स्वीयया मौलिक्यया रूपप्रतिमया पृथङ् निपातसंज्ञाभाजो भवन्ति, क्वचित् समस्तयोर्निपातयोर्निपातानां वा पृथक् निपातसंज्ञा दृश्यते, क्वचिद् विभक्तिभेदेन एकस्यैव निपातस्य पृथक्-पृथङ् निपातसंज्ञाऽवलोक्यते, क्वचिन्निपाता धातुभिः संसक्ताः सन्तः पृथङ् निपाताभिख्यामाप्नुवन्ति, क्वचिच्च वर्णागम-वर्णविकार-वर्णनाश-वर्णविपर्ययादिभिर्भाषाशास्त्रीयैः प्रभावैः प्रभाविताः सन्तो निपातसंख्याऽनैयत्ये हेतुत्वमङ्गीकुर्वन्ति। एवं विधान्यन्यान्यपि कारणानि सन्ति निपातसंख्यानिःसीमात्वप्रख्यापकानि। अत एव महामुनिपतञ्जलिनाऽपि निरदेशि यत्—'को हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुम्[4]' इति। महाभाष्यवाक्यं व्याचक्षाणेन कैयटभट्टेनापि सङ्केतितं यच्छब्दानां विनियोगस्तु यादृच्छिकोऽवलोक्यते। तत्र पुरुषव्यापारेणैव शब्दशक्तेर्नियन्त्रणं क्रियते, न तु शास्त्रेणेति। अर्थाद् भाषाव्यवहार एव शब्दसाधुत्वासाधुत्वस्य, रूपप्रतिमायाः सङ्घटनस्य, रूपप्रतिमायाः सङ्कोच-विकासयोः, अर्थैक्यं भजमानेषु शब्देषु नवीनार्थारोपणस्य च हेतुत्वेनाङ्गीक्रियते प्राचीनशास्त्रनिर्मातृभिरर्वाचीनभाषाशास्त्रस्नातकैश्च।

प्रक्रियाकौमुदीव्याख्यात्रा कृष्णाचार्येणापि प्रत्यपादि यद् न हि केवलं निपातगणत एव निपातसंख्येयत्ताऽङ्गीकर्तव्या, यतो ह्यपठिता अर्थाच्चादिगणानन्विता अपि शब्दा निपातसंज्ञाभाजो भवन्तीति। तथाहि—**'प्रयोगवशादित्यनेनापठिता अपि 'सुदि' 'वदि' 'रोदसी' चिरायेत्यादयो लोके प्रयुज्यमाना निपातत्वेन ज्ञेयाः**[5]' इति। भोजव्याकरणकृताऽपि सभाजितः कृष्णाचार्यसिद्धान्तः—

**निपातगणतो ग्राह्या निपाता अपरेऽपि च।**
**अव्ययान्यपराण्येव ग्राह्याण्यव्ययकामतः**[6]॥ इति।

---

१. ऋ० सं०–७।७३।५।
२. तदेव–१।६२।८।
३. प्रक्रियासर्वस्वम्–सुब्विधिखण्डः–१९१।
४. महाभाष्यम्—२।१।१।
५. प्रक्रियाकौमुदी-भूमिका–पृ० ३१।
६. भोजव्याकरणम्–निपातप्र० ५।

पदमञ्जरीकारेण हरदत्तमिश्रेणाप्युद्घोषितं यद् यथा सौत्रा धातवो भवन्ति, तथैव निपाता अपि सौत्राः स्वीकर्तव्याः। तथा च हरदत्तमिश्रः—**'नन्वसत्यस्मिन्नुपसंख्याने[1] 'भोः' इत्यादिकः शब्दो विभक्त्यन्तो नास्ति, यत्प्रतिरूपका एते स्युः। तस्मात् 'सौत्रा एते निपाताः' 'भो–भगो–अघो' इति सूत्र निर्दिष्टाः, चादिषु वा पठितव्याः'** इति। एवं हि निपाताः क्वचित् सौत्राः, क्वचिन्निपातगणीयाः, क्वचिच्च महाकविप्रयोगमूला अप्यङ्गीकर्तव्याः। अत एव हि नारायणभट्टेन निरणायि यन्निपाता अनन्ता अनन्तार्थाश्च भवन्तीति—

**अनन्ताः खल्वनन्तार्थाः स्वराद्याश्चादयोऽपि च।**
**असत्त्वपरतैवात्र चादीनां नियता मता[2]॥**

एवमेव स्वयं महामुनिपाणिनिनाऽपि तत्तत्सूत्रेषु—**'चादयोऽसत्त्वे'[3], 'स्वरादिनिपातमव्ययम्[4]', 'प्रादयः[5]', 'भूवादयो धातवः[6]'**—आदिपदं सन्निवेशयता सङ्केतितं प्रयोगाधीनसंख्या शब्दानाम्। **'उपलब्धौ यत्नः क्रियताम्[7]'** इति निर्देश उपस्थापयताऽऽचार्यपतञ्जलिनाऽपि संवाद्यते पाणिनिः। सरस्वतीकण्ठाभरणव्याख्यात्रा नारायणभट्टेनापि व्याख्यातस्तत्तत्सूत्रसन्निविष्टः 'आदि' शब्दः। तद्यथा—'आदिग्रहणादन्येषामपि निपातेषूपात्तानामनुपात्तानां च स्वरादिसधर्माणामव्ययसंज्ञा भवति। तत्रोपात्ताः—पुरातनः, अस्तु, श्रौपडित्यादयः। अनुपात्ताः—बलात्कारः, प्रसह्य, हरणमित्यादयः। स्वरादयो हि स्वार्थस्य वाचकाः, न तु निपातवद् द्योतकाः'[8] इति।

प्रसङ्गोपात्तानां सन्दर्भाणामेतेषां पर्यालोचनेन सिद्ध्यति यत् प्रायेण सर्वेऽपि शाब्दिका निपातोपसर्गादीनां संख्यानिर्धारणे सन्दिहाना इव प्रतिभान्ति। संशयस्यैतस्य मुख्यो हेतुस्तु संस्कृतभाषाया निरवधिकोऽविच्छिन्नश्चैतिहासिकप्रवाह एव। सुविपुलतमस्यैतिहासिकप्रवाहस्य वैज्ञानिकमनुसन्धानं तु न हि व्यक्तिसापेक्षम्। पृथक् पृथक् तत्तच्छाब्दिकैर्यथाशक्तिप्रयत्नं कृत्वाऽपि निपातोपसर्गाणां संख्येयत्ता न निर्धारिताः।

इमान्येवैतिहासिकानि तथ्यानि स्मारं स्मारं माधवभट्टेनोद्घोषितं यद् ऋगर्थपराः=ऋगर्थतत्त्वविदः, शाकल्य-पाणिनि-यास्कप्रभृतयोऽपि पदसंख्यां मातुं यथाशक्त्यनुधावन्त्येव, किन्तु कृत्स्नतया न मान्ति। तथा हि ऋग्वेदानुक्रमण्याम्—

**शाकल्यः पाणिनिर्यास्क इत्यृगर्थपरास्त्रयः।**
**यथाशक्त्यनुधावन्ति न सर्वं कथयन्त्यमी[9]॥** इति।

---

१. पदमञ्जरी–८।३।१।
२. प्रक्रियासर्वस्वम्–सुब्विधिखण्डः–१९१।
३. अष्टाध्यायी–१।४।५७।
४. तदेव—१।१।३७।
५. तदेव—१।४।५८।
६. तदेव—१।३।२।
७. महा० भा० पस्पशा०।
८. सरस्वतीकण्ठाभरणम्–१।१।१८०–हृदयहारिणी व्याख्या।
९. ऋग्वेदानुक्रमणी।

इत्थं विविधैः शब्दशास्त्रीयैः सन्दर्भैरेतत् कथितुं प्रभवामो यद् निपातानां रूपप्रतिमाऽर्थप्रतिमा चेतरवर्गीयशब्दानामिव प्रकृतिप्रत्यययोरासञ्जनेनैव व्यक्तिं गच्छति, अर्थाद् व्युत्पत्त्यैतेषामप्यर्था अधिगन्तुं शक्यन्ते। साधूक्तं सारस्वतप्रक्रियाव्याख्यात्रा चन्द्रकीर्तिना यन्निपाताव्ययोपसर्गाणामपि सन्ति वैयुत्पत्तिकान्याभिधानिक-वैचित्र्याणि—

**क्षमस्व भो दुराराध्य भगोस्तुभ्यं नमोऽस्तु ते।**
**अधीष्व भो महाप्राज्ञ घातयाघोः स्वघस्मरम्**[1] ॥ इति।

**'भो इत्ययनेन 'भोस्', 'भगोस्' 'अघोस्' इति त्रयाणामपि ग्रहणम्। सूत्रपाठे तु 'भो-भगो-अघोस्' इत्येव सूत्रं दृश्यते। तेन—भवन्नित्यस्य 'भो' इति निपातः। भगवन्नित्यस्य 'भगो' इति निपातः। अघवन्नित्यस्य 'अघो' इति निपातः। यतः—'भवद्भगवदघवताम्' 'भो' 'भगो' 'अघोः' एते शब्दा वा निपात्यन्ते, घोविषये सम्बोधने चेत्यर्थः। भो = इत्यामन्त्रणे, भगो = पूजामन्त्रणे, अघो = इति पापजनवाचि-सम्बोधनविषये एते शब्दा निपात्यन्ते'** इति।

आधुनिकभाषाशास्त्रस्नातकैः—मैक्समूलर[2]-वान्द्रियेज[3]-डेनिस्टन[4]-गुणे[5]-प्रभृति-भिरपि निर्णीतं यन्निपाताव्योपसर्गा अपि सर्वनामशब्दानामिव व्युत्पत्तिमन्तः स्वायत्तार्थकाश्चासन्। संक्षेपरुचिभिर्वैयाकरणैस्ते द्योतका इति मत्वा व्याकृताः।

'गउडवहो' इति प्राकृतकाव्यं व्याचक्षाणेन उपेन्द्रहरिपालेनापि सर्वनामशब्द-पर्यायत्वेन निपातशब्दः प्रयुक्तः। तद्यथा—**'अहेति निपातः एष इत्यस्यार्थे'**[6] इति।

पुरस्तात् केचन सिद्धान्ता निपातानां व्युत्पत्तिविषये, निपातसङ्ख्याया अनैयत्ये च पर्यवेक्षिताः। अत्रोपरिष्टात्तु केचन व्युत्पत्तिमन्तः केचनानेकार्थाः, केचन समस्ताः, केचनानुबन्धजुषः, केचन च रूपप्रतिमोपचयापचयवन्तश्च निपाता ऐतिहासिकदृशा प्रस्तोष्यन्ते। प्राचीनभारोपीयभाषा—अवेस्ता-ग्रीक-लैटिन-निपातैस्तेषां यथासम्भवं तुलाबोधकः संवादोऽपि प्रस्तोष्यते।

---

१. सारस्वतप्रक्रिया–१७।३–चन्द्रकीर्तिव्याख्या।
२. लेक्चर्स आन दी साइंस आफ लैंग्वेज–पृ० २७०।
३. भाषा–पृ० ७०।
४. दि ग्रीक पार्टिकल्स्–पृ० ३१२।
५. तुलनात्मक भाषाविज्ञान–पृ० ६५।
६. ग० व०–४।१९।

(१) अच्छ [ = आभिमुख्ये ] ।

'अच्छ' इति निपात आ-ऋग्वेदादधिकृत्याधुनिकभारतीयभाषास्वपि येन केन प्रकारेण व्यवह्रियमाणोऽवलोक्यते। क्वचिदयं निपातरूपेण व्यवहृतो दृश्यते, क्वचिच्चोपसर्गरूपेण। अत एव बृहद्देवताकृच्छौनकेनोक्तं यत्—'आचार्यशाकटायनो मनुते यत्—'अच्छ', 'श्रत्', 'अतर्', इति त्रयोऽधिका निपाता अपि सन्ति' इति। तथा च श्लोकः—

**अच्छश्रदन्तरित्येतानाचार्यः शाकटायनः।**
**उपसर्गाः क्रियायोगान् मेने तेन त्रयोऽधिकाः**[1] ॥ इति।

एवं हि वैदिकलौकिकोभयवाङ्मयेऽस्य परामर्श उपसर्गरूपेणापि स्वीकृतो वर्तते। प्रायेणास्य व्यवहारस्तूपसर्गतया—√जृ[2], √श्रु[3], √ह्वे[4], √वद[5], √सृ[6], √इ[7]–प्रभृतिभिर्धातुभिरवलोक्यते।

वैदिकसाहित्येऽस्य प्रयोगस्तु प्रायेणाभिमुख्येऽर्थे द्रष्टुं शक्यते। कुत्रचित् साध्वर्थेऽपि व्यवहृतो दृष्टिपथमायाति। यथा **'अग्ने अच्छा वदेह नः प्रत्यङ् नः सुमना भव'**। व्याख्यायते च मन्त्रोऽयं सायणाचार्येण—'अच्छा वद = साधु वद। निपातस्य च सांहितिको दीर्घः' इति। **'छन्दसि सर्वे विधयो विकल्पन्ते'** इति नियमात् कुत्रचिदयम्—'अच्छा' इति रूपेणापि व्यवहृतोऽवलोक्यते। ऋग्वेदेऽयं पौनःपुन्येन परामृश्यते, अथर्ववेदे सङ्कुचितावकाशोऽयम्, ब्राह्मणेषु क्वाचित्कोऽस्य व्यवहारः, लौकिकसाहित्ये तु स्थगितप्रयोगोऽयं सञ्जातः[8]।

(२) अथ [ =आनन्तर्ये] ।

'अथ' इत्ययं निपातः संस्कृतवाङ्मये निर्विशेषरूपेण विविधेष्वर्थेषु प्रयुज्यमानो दृश्यते। नह्येतस्य प्रयोगे लौकिकवैदिकभाषाभेदेन विधिनिषेधौ दृष्टिपथमायातः। कुत्रचिदयम् आनन्तर्यार्थे दृश्यते[9], कुत्रचिच्चार्थे[10], कुत्रचिद् वैपरीत्ये[11], कुत्रचित् पक्षान्तरारम्भे[12], कुत्रचिद् अर्थान्तरे[13], कुत्रचिच्च प्रश्नेऽपि[14]। प्रायेणास्य व्यवहारो

---

१. बृहद्देवता–२।९७।
२. ऋ० सं०–१।२।२।
३. तदेव–१।६।६, १०।३०।१।
४. तदेव–६।४९।४।
५. अथर्ववेदः–३।२०।२।
६. शुक्लयजुर्वेदः–१५।२४।
७. शतपथब्रा०–६।३।३।३।
८. संस्कृत ग्रामर–पृ० ४७९।
९. ऋ० सं० १।४७।३, शतपथब्रा०–१।९।३।८।
१०. अथर्ववेदः–४।४।८।
११. शतपथब्रा०–२।४।२।११।
१२. गीता–२।२६।
१३. किरातार्जुनीयम्–१।४४।
१४. मृच्छकटिकम्–६, पृ० १७०।

वाक्यारम्भ एव कृतो वर्तते; किन्तु बहुत्र वैदिकसाहित्य एव वाक्यमध्येऽपि दृष्टचरोऽयम् । तद्यथा—'मरुद्भिरिन्द्रसख्यं ते अस्तु, अथ मा विश्वाः पृतना जयासि[१]' इति ।

रूपप्रतिमाया उपचयेऽप्यस्य योगो भाषाशास्त्रदृष्ट्याऽतिमहत्त्वमादधाति । 'अथ' इत्यस्य शब्दग्रामस्य तु पृथङ् निपातसंज्ञा भवत्येव—'अथो >अथ + उ >अथो[२], अथ+किम्>अथकिम्[३], अथवा[४] <अथ+वा> अथवा—इत्येतेषामपि पृथक् पृथङ् निपातसंज्ञा कृत्ता वर्तते । न हि केवलं समस्तानामेतेषां निपातानां रूपप्रतिमा एवोपचीयते, अपि त्वर्थमूर्तेरप्युपचयो भवति । प्राकृतभाषायां तु 'अथ' इति निपातो विकृतिमापन्नः 'अथ >अध'—इत्येवंरूपेण व्यवहृतः ।

**(३) अध [ =तस्मादर्थे ] ।**

'अध' इति निपातस्य मूलं तु 'अधस्' निपात इति मन्ये । उत्तरोत्तरमस्य प्रयोगः संकुचितोऽवलोक्यते संस्कृतभाषायाम् । वैदिकभाषायामस्य व्यवहारो बहुष्वर्थेषु जातः । कुत्रचित् तस्मादर्थे[५], कुत्रचिद् एतस्मादर्थे[६], कुत्रचिद् अप्यर्थे[७], कुत्रचिच्चार्थे[८], कुत्रचिद् अधुनार्थे[९], कुत्रचिद् अपि वा इत्यस्यार्थे[१०], कुत्रचिद् अथशब्दार्थे[११], कुत्रचित् सम्प्रत्यर्थे[१२], कुत्रचिद् अथवार्थे[१३], कुत्रचिच्च हेत्वर्थेऽपि[१४] दृश्यते । उपसर्गरूपेणाप्यस्य प्रयोगः—√गम्, √कृ, √भू—प्रभृतिभिर्धातुभिः सह निभाल्यते ।

रूपप्रतिमाणां निर्माणेऽप्ययमुपादानकारणतां भजते । अध+आ >अधा[१५], अध+धा >अद्धा[१६], अधस्+तात् >अधस्तात्[१७], अधस्+तात् >अधरात्–प्रभृतयो[१८] विभिन्नार्थवाचकाः शब्दाः 'अधस्' इति निपातप्रकृतिका मन्तव्याः । मैकडानल[१९]-ह्विट्नी[२०]मोनियरविलियम्स[२१]-प्रभृतिभिर्भाषाशास्त्रविद्भिरपि समर्थ्यते सिद्धान्तोऽयम् । 'तात्' प्रत्ययानुगुण्येनास्य प्रयोगो दक्षिणदिग्वाचकत्वेनापि दृश्यते[२२] । 'तात्'–प्रत्ययसंश्लेषणेनास्य प्रकृतित्वं स्वयमेवायाति ।

---

१. ऋ० सं०–८।९६।७ ।
२. अथर्ववेदः–२।९।१, छा० ब्रा०–१।१।७, शुक्लय० ३।१।५ ।
३. मृच्छकटिकम्—६, पृ० १७० । ४ अभिज्ञानशा०–६, पृ० २०७, नैषधीयम्–२।६१ ।
५. ऋ० सं०—१।१५।१० । ६ तदेव—१।५५।५ ।
७. तदेव—१।३८।१०,६।२।७,६।३५।१ । ८ तदेव—२।३३।४ ।
९. तदेव—६।१।२, १०।६१।३३ । १०. तदेव—६।३०।२ ।
११. तदेव–१०।११।४, शुक्लय० १५।४५ । १२ ऋ० सं०—१०।६१।२३ ।
१३. तदेव—१०।९५।१४ । १४. शतपथब्रा०–७।२।४।२७ ।
१५. ऋ० सं०—८।९८।७ । १६. तदेव—३।४५।५ ।
१७. तदेव—३।२२।३ । १८ तदेव—१०।८७।२० ।
१९. वैदिक ग्रामर पृ० २८५ । २०. संस्कृत ग्रामर—पृ० ४९९ ।
२१. संस्कृत-इंगलि०-डि० पृ० २० । २२. अथर्ववेदः—६।४१।३ ।

(४) अन्तर् [ = व्यवधानार्थे ] ।

'अन्तर्', इति निपातो विविधाभिर्विभक्तिभिः सह संश्लेषणेन विविधा रूपप्रतिमा अर्थप्रतिमाश्च निर्मापयति । उपसर्गरूपेणाप्यस्य व्यवहार ऐतिहासिकदृष्ट्योपलब्धुं शक्यते । शौनकाचार्येणास्योपसर्गत्वमुद्घोषितम्—

**अच्छश्रदन्तरित्येतानाचार्यः शाकटायनः ।**
**उपसर्गाः क्रियायोगान् मेने तेन त्रयोऽधिकाः**[1] ॥ इति ।

प्रायेणास्योपसर्गता—√इ, √गम्, √धा, √भू, √विद—प्रभृतिभिर्धातुभिः सह सिद्धा । 'अन्तर्' शब्दः पृथङ् निपातसंज्ञां प्राप्नोत्येव, विविधाभिर्विभक्तिभिर्जुषमाणेनाप्यनेन पृथक् पृथङ् निपातसंज्ञाऽवाप्यते ।

अन्तरा[2]-अन्तरेण[3]-अन्ति[4]-अन्तिके[5]प्रभृतिनिपाताः 'अन्तर्' निपातोपादानभूताः । अन्यास्वपि प्राचीनभारोपीयार्यभाषास्वस्य संवादो दृश्यते । तद्यथा—

(क) अन्तर्[6] > प्रा० अन्तरु > अन्दर > अदर > अदलम् > मरा० अडु > कन्नड-अड-इत्यादि ।

(ख) अन्तर्[7] > अवे० अन्तर् > ग्री० एण्डर् > लै० इण्टर > गोथि० अण्डर > अंग्रे० अण्डर-इत्यादि ।

अर्थविकासदृष्ट्याऽयं निपातः कुत्रचित् सन्निकृष्टार्थे[8], कुत्रचिद् व्यवधानार्थे[9], कुत्रचिद् अवसानार्थे[10], कुत्रचिद्भेदार्थे[11], कुत्रचित् स्तुत्यर्थे[12] च व्यवहृतोऽवलोक्यते ।

(५) अपि [ = सम्भावनायाम् ] ।

'अपि' इत्ययमुपसर्गः संस्कृतभाषाध्येतॄणां सुविदितचरः । सन्ति संस्कृतभाषायामस्य विविधानि आभिधानिकवैचित्र्याणि । कुत्रचिदयम् एवार्थे व्यवहृतो दृश्यते[13], कुत्रचित् सन्निकृष्टार्थे[14], कुत्रचित् सम्भावनायाम्[15], कुत्रचिद् अध्यर्थे[16], कुत्रचित्

---

१. वृहद्देवता–२।९७ । २. महाभाष्यम्–२।३।४, पदमञ्जरी–२।३।४ ।
३. महाभाष्यम्–२।३।४, पदमञ्जरी–२।३।४ ।
४. तै०ब्रा०–२।४।२।३, सामवेदः–२।११०३ । ५. ऋ०सं०–२।२७।३,१०।१४४।४ ।
६. द्रष्टव्यम्–प्राकृतशब्दानुशा० पृ० २४५, कर्पूरमञ्ज० पृ० ७७, मालविकाग्निमि० पृ० ५५, मराठीव्युत्पत्तिकोशः—पृ० १९ ।
७. द्र० संस्कृत-इंग्लि० डिक्श०–पृ० ४३, कम्पैरेटिव ग्रा० आफ संस्कृ० ग्री० एण्ड लैटिन पृ० १४० ।
८. ऋ० सं०–१।१०४।६ । ९. ऐ० ब्रा०–३।६ । १०. तै० सं०–७।२।१० ।
११. भागवतपु०–३।२९।२६ । १२. सामवेदः–२।११०३ ।
१३. ऋ० सं०–२।६।८ : १४. तदेव–६।४७।१३ । १५. अथर्ववेदः–२।१०।७ ।
१६. तदेव–३।३३।४ ।

समुच्चये[१], कुत्रचिद् अनिच्छायाम्[२], कुत्रचिद् मार्दवे[३], कुत्रचिद् विरोधे[४], कुत्रचिद् अनुनयार्थे[५], कुत्रचिद् अपकर्षार्थे[६], कुत्रचिद् गौरवे[७] च। एवमेवान्येऽप्यर्था उपलभ्यन्ते अपेः। वैदिकलौकिकोभयवाङ्मयेऽस्य विकासः समरूपमेवोपलभ्यते। सगोत्रीय-निपातानां रूपप्रतिमासङ्घटनेऽप्यस्योपादानकारणत्वं दरीदृश्यते। तद्यथा—अपि + नाम > अपिनाम[८], अपि + च + इत् > अपिचेत्[९], अपि + च > अपि च[१०], अपि + वा > अपि वा[११]—प्रभृतिनिपातानां प्रसवे 'अपेः' योगो दृष्टचरः।

'अपि' इति निपातस्याद्यस्वरलोपोऽपि प्रथिततरः संस्कृतभाषायाम्। सिद्धान्तयति च भागुरिः—

**वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।**
**हितादिषु समो म्लोपं पाठं चात्र श्रदन्तरोः[१२]** ॥ इति।

अस्या लोपपरम्पराया उद्भवस्तु वैदिकभाषाकालत एवावलोक्यते। तद्यथा—अपि + √हि [ = गतौ वृद्धौ च ] > अपिहितम् > पिहितम्—इत्युदाहरणम्। प्राचीन-भारोपीयभाषाभिरप्यस्य संवादो भवति—'अपि > अवे० अपि > ग्री० अवि > जर्म० > वि > इंग्लि० वि'—इति।

**(६) अर्वाक्** [ = आभिमुख्ये ]।

'अर्वाक्' इति निपात आ वैदिककालात् साम्प्रतं यावद् येन केन रूपेण व्यवह्रियमाणोऽवलोक्यते। मन्ये यदस्य मौलिकं रूपन्तु 'अर्वा' इति भवेत्। √अञ्च् [ = गतौ ] इति धातुना संश्लिष्यताऽनेन—'अर्वाक्' इति रूपप्रतिमाऽवाप्ता। एवम्—'अर्वा + √अञ्च् [ = गतौ ] > अर्वाक् > अर्वाचीनम्' इत्यादि प्रयोगा वैदिक-भाषात एवाजस्त्ररूपेण संस्कृतभाषामलङ्कुर्वन्ति। धातुनिपातमिथुनीभूतस्य 'अर्वाक्' इति निपातस्यापि किलौपसर्गिको व्यवहारोऽपि दृश्यते। तथा हि अथर्ववेदे—**'अर्वाङेहि सोमकामं त्वाहुरयं सुतस्तस्य पिबा मदाय[१३]'** इति।

व्याख्यायते च मन्त्रोऽयं सायणाचार्येण—'अर्वाङ् एहि = अस्मद् अभिमुखः सन् आगच्छ' इति। वचन-विभक्ति-संख्यानुगुण्यमप्यवलोक्यतेऽस्मिन्। ऋग्वेद एव—

---

१. गीता—२।१२, मालतीमाधवम्—३।९४।
२. रघुवंशम्—५।६७। ३. तदेव—८।४४। ४. कुमारसम्भवम्—६।१०।
५. तदेव—४।३, मृच्छकटिकम्—४, पृ० १०३। ६. अभि०शा०—१।२।
७. मा० माधवम्—३।५५। ८. अभिज्ञानशा०—१, पृ० ८१।
९. गीता—९।३०। १०. नैषधीयम्—१३।८।
११. किरातार्जुनीयम्—५।५। १२. शृङ्गारप्रकाशः—१, पृ० १६।
१३. अथर्ववेदः—२०।९।२।

'अर्वावतम्[१]' 'अर्वावतः[२]' इत्यादि द्वितीया-पञ्चमी-विभक्तिभागप्ययं दृश्यते। तथा हि व्याख्याति सायणाचार्यः—'अर्वावतम् = अतिसन्निकृष्टस्य देशस्य। 'अन्तरान्तरेण युक्ते' (पा० २।३।४) इति द्वितीया' इति।

शतपथब्राह्मणे धातुव्यतिरिक्तस्याप्यस्य मौलिको व्यवहारो दृष्टिपथमायाति। तद्यथा—'**इदमहमर्व्वावसोः सदने सीदामीत्यर्व्वावसुर्वै नाम देवानां होता**[३]' इति। व्याख्यातश्च मन्त्रोऽयं सायणेन—'अर्वा = अर्वाक्' इति। एवमैतिहासिकेन पर्यवेक्षणेनास्य मौलिकं रूपन्तु 'अर्वा' इत्युपलभ्यते।

**(७) अलम्** [=वारणे]।

'अलम्' इति निपातः पुरुरूप ईयते संस्कृतभाषायाम्। अस्योद्भवस्तु रेफध्वनिमतः 'अरम्' इति निपातादेवोपपन्नः। '**र-लयोरभेदः**' इति नियमस्तु नाविदितचरः संस्कृतभाषाऽध्येतॄणाम्। र-लयोरभेदस्य सिद्धान्तोऽपि वैदिकध्वनिसिद्धान्तेन सह संवदते। मन्ये यत् प्राकृतप्रभावोऽयम्। यथा—'रघुः>लघुः[४], रघ्वी[५]>लघ्वी' प्रभृतिप्रयोगेषु प्राकृतप्रभाव एव स्वीक्रियते तत्तद्भाष्यकर्तृभिः, आधुनिकभाषाशास्त्रविद्भिश्च। व्याख्याति च स्कन्दस्वामी—'**अरम् = अलम्' शब्दस्य पर्याप्त्यर्थस्य रूपमिदम्। लकारस्य रपरत्वं छान्दसम्। अरङ्कृताः = पर्याप्ताः कृताः**[६]' इति।

√कृ[७], √गम्[८], √भू[९], √तृह्[१०] —प्रभृतिधातुभिः सहास्योपसर्गताऽपि सिद्धा। मैक्डानल[११]-ह्विट्नी[१२]—प्रभृतीनामयमेवाशयः।

अस्याभिधानिकवैचित्र्याण्यपि बहून्युपलभ्यन्ते। कुत्रचिदयं पर्याप्तौ व्यवहृतोऽवलोक्यते[१३], कुत्रचिद् अतिशयार्थे[१४], कुत्रचिच्छीघ्रार्थे[१५], कुत्रचित् सामर्थ्ये[१६], कुत्रचिद् आदरातिशयेऽपि[१७] च। 'अलातृणः<अलम्+√तृह् [=हिंसायाम्]>अलातृणः[१८]' इति प्रयोगे तु मकारलोपोऽप्यनेनानुभूतः। 'अलातृणः' इत्यनेन प्राकृतभाषानिपातस्य 'अला[१९]' इत्यस्य संवादोऽप्यवलोकनीयः। एवम्—अरम्>अलम्>अला—इति रूपविकासोऽस्य सञ्जातः। पाणिनिमनु रेफध्वनियुताऽस्य रूपप्रतिमा तु स्थगिता एव।

---

१. ऋ० सं०—३।४१।९। २. तदेव—३।४१।८। ३. शतपथब्रा०—१।५।१।२४।
४. ऋ० सं०—६।६३।९—स्कन्दभाष्यम्। ५. तदेव—६।६३।९—सायणभाष्यम्।
६. तदेव—१।२।३। ७. तदेव—१।१४।५, २।६।८, ८।५।१७।
८. तदेव—६।६३।२, १०।९।३। ९. तदेव—५।६६।५।
१०. तदेव—३।३०।१०। ११. वैदिक ग्रामर—पृ० २८५।
१२. संस्कृत ग्रामर—पृ० ४९५। १३. ऋ० सं०—१।२।१।
१४. तदेव—५।६६।५। १५. तदेव—१०।९।३।
१६. अथर्ववेदः—१०८।२।१। १७. अभिज्ञानशा०—३, पृ० २०८।
१८. ऋ० सं०—३।३०।१०। १९. प्राकृतप्रकाशः—९।११।

(८) अह [ = एवार्थे ] ।

'अह' इति निपातो यद्यपि स्वीयया वर्णानुपूर्व्या निपातसंज्ञां प्राप्नोति, किन्तु मन्ये यद्—अ+ह > अह—समस्तोऽयं निपातः । यतो हि 'अ' इति तु स्वरप्रतिरूपको निपातः । 'ह' इत्यपि पृथङ् निपातः । अनयोः सङ्घातेन 'अह' इति रूपमूर्तिरुदेति । अस्य व्यवहारस्तु वैदिकभाषामात्रे । विभिन्ना अर्था वैदिकवाङ्मयेऽस्योपलभ्यन्ते । कुत्रचिदयं विनिग्रहार्थीयः[1], कुत्रचिद् आश्चर्यार्थकः[2], कुत्रचित् पदपूरणार्थकः[3], कुत्रचिद् विकल्पार्थकश्च[4] व्यवहृतो दृश्यते । व्याख्याति च स्कन्दस्वामी **'अहेति विनिग्रहार्थीय एव शब्देन समानार्थः'** इति ।

एवं 'अह' इति निपातोऽतिरिक्तनिपातविग्रहस्य प्रसवेऽप्युपादानं भजते । अह+अह > अह ह > अहह[5], अह+उ > अहो[6], अह+उ+नु+खलु > अहो नु खलु[7]—इत्येवंविधानां निपातविग्रहाणां सङ्घटनमपि 'अह' निपातसहकृतमेव । अत्रैकैकेषां समस्तनिपातानामर्था अपि प्रदर्श्यन्ते । 'अहह' इति निपातोऽद्भुतार्थे खेदे च व्यवहृतः[8], 'अहो' इति निपातस्तु सम्बोधने विस्मये चावलोक्यते[9], 'अहो नु खलु' इत्यस्य व्यवहारस्तु निर्वेदे[10], आश्चर्ये चाप्यवलोक्यते । एवमैतिहासिकदृष्ट्योत्तरोत्तरमस्य रूपप्रतिमा वृद्धिमाप ।

(९) आनुषक् [ = आनुपूर्व्यर्थे ] ।

'आनुषक्' इति निपातो वैदिकवाङ्मय एव विशेषत ऋग्वेदसंहितायामेव स्वात्मप्रसारं लेभे । आचार्ययास्कमन्वस्य व्यवहारः स्थगितः । शब्दान्तरेणास्य व्यवहारोऽवलोक्यते किलाधुनिकभारतीयभाषास्वपि । 'आनुषङ्गिकम्' इति शब्दः 'आनुषक्' इति निपातविवर्तभूत एव । निपातस्यास्य निरुक्तिरपि विविधैर्भाष्यकर्तृभिर्विविधप्रकारेण कृता । सायणाचार्यो व्याकरोति 'आनुषक्' इति निपातम्—**'आनुषक् = आनुपूर्व्येण । आनुषक्—आ समन्ताद् अनुषजतीत्यानुषक् । √षञ्ज [=सङ्गे] धातुषकारस्य सकारः, क्विप्, 'अनिदिताम्' इति उपधालोपः । 'उपसर्गात्सु....' इति षत्वम्[11]'** इति । आचार्यस्कन्दस्वामिनोऽप्ययमेवाशयः[12] । आनुपूर्व्यर्थेऽस्य व्याख्या यास्काचार्येणापि कृता—**'आनुषगिति नामानुपूर्व्यस्य[13]'** इति ।

---

१. निरुक्तम्—६।२ ।
२. ऋ० सं०—५।८३।३ ।
३. तदेव—५।८३।३ ।
४. अथर्ववेदः—४।१८।७ ।
५, सिद्धहेमशब्दानुशासनम्—१।१।३१ ।
६. कुमारसम्भवम्—३।२० ।
७. मालतीमाधवम्—४, पृ० ११६ ।
८. सिद्धहेमशब्दानु०—१।१।३१ ।
९. नैषधीयम्—९।२७ ।
१०. नागानन्दनाटकम्—१, पृ० ४३ ।
११. ऋ० सं०—३।११।१ ।
१२. तदेव—१०।८३।१ ।
१३. निरुक्तम्—६।१४ ।

एवं व्युत्पत्त्याऽस्य निपातस्य प्रसवस्तु धातूपसर्गयोः संश्लेषणेनैवाभूत् । तद्यथा–'अनु + √षञ्ज > अनुषक् > आनुषक् = आनुपूर्व्येण = यथायोग्यमित्यर्थः' । ऋग्वेदे तु **आयुषक्**[1]' इति वर्णविपर्ययात्मको वर्णविकारात्मको वा निपात उपलभ्यते । मन्ये यत् तत्र वर्णविकार एवोपपन्नः । यतो हि 'आयुषक्' इति रूपस्यापि व्याख्यान-प्रसङ्गे सायणाचार्येण 'अनु' इत्युपसर्गस्यैव समावेशस्तत्र कृतः । तद्यथा–'**आयुषक् = अनुषक्तमित्यर्थः**' । आचार्यसुन्दरगणिस्तु 'अनुषक्', 'आनुषद्' इति पृथक् पृथग् द्वौ निपातौ पठितौ[2] । मन्ये यत् 'आनुषद्' इति शब्दग्रामे—अनु + √षद् [ = शातने ]> आनुषद्—षद् धातोः संश्लेषोऽभूदिति ।

**(१०) आशु [ = शैघ्रये ] ।**

'आशु' इति निपातः शीघ्रार्थे परामृष्टः संस्कृतभाषायाम् । अस्यैतिहासिकेऽर्थ-विकासे न हि दृश्यते किञ्चित् परिवर्तनम् । रूपप्रतिमायां तु दृश्यते विकृतिः । तथा हि—'श्वात्रः[3] < आशु + √त्रै [ = पालने ]> श्वात्रः > श्वात्रम्[4], श्वापयः[5] < आशु+√आप् [ = व्याप्तौ ]> श्वापयः प्रभृतयो व्यवहारा अस्य विकृतिनिदर्शनरूपाः । निरुक्त-शास्त्रप्रणेतृभिरवोचि यत् पञ्चविधं निरुक्तं भवतीति—

**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्[6] ॥**

एवमेषु पञ्चविधनिरुक्तलक्षणेषु वर्णविपर्ययरूपं लक्षणं पुरस्तादुदाहृतेषु प्रयोगेषु सङ्घटते । तैत्तिरीयसंहिताव्याख्यात्रा भट्टभास्करेण व्याख्यायि यत्—'**श्वापयः = आशु-सर्वव्यापिनः । आशुशब्दस्य अक्षरयोः स्थानविनिमयः । आद्यक्षरलोपो वा**[7]' इति । तैत्तिरीयारण्यकव्याख्यानावसरेऽपि तस्यायमेवाभिप्रायः[8] ।

वैदिकसाहित्ये 'आशु' इति निपात उपसर्गरूपेणापि प्रयुक्तो दृश्यते । श्वात्रः, श्वात्रम्, श्वापयः प्रभृतिप्रयोगेष्वप्यस्यौपसर्गिको योग उपलक्ष्यत एव । 'आशुषाणः < आशु+√षण [ = सम्भक्तौ ] > आशुषाणः' इति प्रयोगेऽपि किलौपसर्गिकं स्थानमस्य दृष्टचरम् । अत एव सायणाचार्येण व्याख्यातम्—'**आशुषाणाः = शीघ्रं सम्भक्तारः । आशुशब्दोपपदात् सनतेः कर्मणि अण्**[9]' इति ।

ग्रीक-लैटिन-प्रभृतिभाषाभिरप्यस्य कौटुम्बिकः संवादोऽवलोक्यते—'**आशु > ग्री० आक्युस् > लै० आकु**[10]' इति ।

**(११) आहो [ = विकल्पे ] ।**

'आहो' इति निपातो निपातद्वयसमाहारभूतः । तत्र 'आह' इति तिङन्तप्रति-रूपको निपातः, 'उ' इति तु अवधारणार्थको निपातः । अनयोः—आह + उ > आहो—

१. ऋ० सं०–९।२६।५, ९।६४।२२ । २. शब्दरत्नाकरः–६।११० ।
३. तै० सं०–१।३।३ । ४. ऋ० सं०–८।६३।५ । ५. तै० सं०–१।९।३८ ।
६. निरुक्तलघुविवृतिः–२।९ । ७. तै०सं०–१।९।३८ । ८. तै० आ०–७।५।१ ।
९. ऋ० सं०–१।१४७।१ । १०. संस्कृत इंग्लिश डिक्श० पृ० १५७ ।

द्वयोः समाहारेण 'आहो' इति निपातस्य रूपमूर्तिरुदयं गच्छति। नारायणभट्टः प्रमाणयति प्रतिपादनमिदम्। स वक्ति यत्—'प्राह = उवाच। तिङन्तप्रतिरूपको निपातोऽयम्'[१]। तथा च भोजराजोऽपि प्रत्यपीपदत्—

**पञ्चानां ब्रुव आद्यानामाहादेशः स्मृतो लटि।**
**आहेत्येतदतीते तिङ्प्रतिरूपकमव्ययम्॥** इति।

दुर्गासप्तशतीव्याख्यात्रा शन्तनुनाऽपि सभाजितं प्रतिपादनमिदम्—**'प्राह= उवाच। उपसर्गप्रतिरूपः प्रशब्दोऽव्ययाख्यः। आहेति निपातस्तिङन्तप्रतिरूपकः कालसामान्यवचनः'**[२] इति।

एवं निपातयोः संश्लेषणेन लब्धात्मनः 'आहो' इति निपातस्य सन्ति बहून्याभिधानिकानि वैचित्र्याणि। कुत्रचिदयं विकल्पार्थे प्रयुक्तः[३], कुत्रचिद् वितर्के[४], कुत्रचिद् विचारे[५], कुत्रचित् प्रश्ने[६], कुत्रचिद् जिज्ञासायामपि[७]।

अन्यनिपातप्रसवेऽपि किलापोह्यते सामर्थ्यमस्य। 'स्वित्' निपातेन सहायं संयुज्यते प्रायेण। एवम्—'आह + उ > आहो + स्वित् > आहोस्वित् = जिज्ञासायाम् इत्यर्थः' इति रूपसिद्धिः। अत्रावधेयमस्ति यदाहो इति निपातस्य विकासस्त्वर्वाक्कालिक इति। नास्ति किलास्य व्यवहार ऋग्वेदसंहितायामुपलभ्यते। ब्राह्मणग्रन्थेषु यत्र तत्रायमुपलभ्यते[८]।

**(१२) इत्** [ = यस्मादर्थे ]।

'इत्' इति निपातो विविधरूपेणोपलभ्यते वैदिकसाहित्ये। क्वचिदयं यस्मादर्थे प्रयुक्तो दृश्यते[९], क्वचित् पदपूरणे[१०], क्वचित्स्वार्थे[११], क्वचिच्च सर्वतोभावार्थे[१२]। वैदिकभाषायामस्याकृपणो व्यवहारो दृश्यते, अनुब्राह्मणग्रन्थमसुलभप्रयोगोऽयं संवृत्तः। लौकिकसंस्कृतभाषायां तु 'च' सहकृत एवास्य—च + इत् > चेत्—परामर्शः क्रियते[१३]। निपातान्तराणां रूपप्रतिमासङ्घटनेऽप्यस्य साहाय्यमवलोक्यते। 'इत्था < इत् + था > इत्था[१४], इदा < इत् + आ > इदा[१५], इदानीम् < इत् + आ + नीम् > इदानीम्[१६]-प्रभृतिशब्दग्रामाणां प्रसवेऽस्य योगो विदितचर एव।

---

१. कुमारसम्भवम्–७।८२। २. दुर्गासप्तशती–४।२८।
३. शतपथब्रा०–१४।६।२।१२। ४. कठोपनिषद्–१।५।८–शाङ्करभाष्यम्।
५. महाभारतम्–अनुशा० प०–१०२।१, अभिज्ञानशा०–५।२९।
६. अभिज्ञानशा०–१।२३, अमरकोशः–३।५–क्षीरस्वामिव्याख्या।
७. ऐतरेयब्रा०–५।३४। ८. शतपथब्रा०–१४।६।२, ऐ० ब्रा०–५।३४।
९. ऋ० सं०–१।४।२। १०. तदेव–१।६१।१। ११. अथर्ववेदः–१।३४।२।
१२. ऋ० सं०–६।३०।२। १३. वैदिक ग्रामर–पृ० २८९।
१४. ऋ० सं०–१।२।६, ६।६७।११। १५. तदेव—६।६५।४। १६. तदेव–१।३५।७।

'इदानीम्' शब्दस्य विकासस्तु किलार्वाक्कालिकः। 'इदानीम्' शब्दस्यार्थे 'इदा' इति निपातस्य व्यवहारस्तु तदपेक्षया भूयस्त्वेन कृतो वर्तते ऋग्वेदे। प्राकृतभाषायां तु 'इदानीम्' इत्यस्याद्यः स्वरो लुप्तोऽवलोक्यते—'इदानीम् >दानीं' इति।

'इत्थम्', 'इत्था' इत्यनयोरपि निपातयोरुद्भवस्तु 'इत्' निपातादेव सञ्जात इति मन्ये। निपातोपसर्गा अपि—वचन-विभक्ति-सङ्ख्यावन्तोऽवलोक्यन्ते—इत्यस्य निदर्शनानि—इत्थम्—इत्था-इत्थात्[1]—इति द्वितीया-तृतीया-पञ्चमीविभक्तियुक्तानि पदान्येव।

अवेस्ता-लैटिन-भाषाभ्यामप्यस्य संवादो दृश्यते। तद्यथा—'इत् >अवे० इत्[2] >लै० इद्' इति। एवम् ऋग्वेदे प्रचुरव्यवहारवतोऽस्य निपातस्य प्रयोग उत्तरोत्तरं सङ्कुचितः।

(१३) इति [ = वाक्यसमाप्तौ ]।

'इति' इति निपातः सम्पूर्णे संस्कृतवाङ्मये निर्विशेषरूपेण प्रयुक्तोऽवलोक्यते। अस्यार्थपरिवर्तनमपि नाक्षिलक्ष्यीक्रियते प्रायः। निपातोऽयं कुत्रचिद् वाक्यसमाप्तौ व्यवहृतो दृश्यते[3], कुत्रचित् सम्बोधने[4], कुत्रचित् प्रकारार्थे[5], कुत्रचिद् हेत्वर्थे[6], कुत्रचित् पारम्पर्यार्थे[7], कुत्रचिच्च पुरावृत्तेऽप्ययं[8] निभाल्यते। अस्य भाषिकः प्रयोगस्तु मनोभावमूलकः, पुरावृत्तस्मरणमूलकः, अनुवादमूलकः, अनुकृतिमूलकश्चापि दृश्यते। वस्तुतोऽर्वाक्कालिके संस्कृतसाहित्येऽयं बीजगणितीयचिह्नमिव परामृश्यते। न ह्यस्य व्यवहारे वक्तुः कश्चिदभिलषितोऽभिनिवेशो द्रष्टुं शक्यते। अत एवेदमपि प्रतिपादयितुं प्रभवामो यदस्य व्यवहारस्तु परवर्तिसंस्कृतसाहित्ये यादृच्छिकः सम्पन्नः।

निपातान्तराणां सङ्घटनेऽपि किलास्योपादानत्वं दृश्यते। 'इतिवत् <इति + वत् > इतिवत्[9], इतिथ < इति + थ >इतिथ[10], इतीव <इति + इव >इतीव[11], इत्यर्थम् <इति + अर्थम् >इत्यर्थम्[12], इतिहासः <इति + ह + आस >इतिहासः[13]–प्रभृतिनिपातानां प्रसवेऽस्य शक्तिर्दरीदृश्यते। निपातेभ्यो निपातान्तराणां प्रसवसामर्थ्यं स्मारं स्मारमेव शाब्दिकैरुदघोषि यत्—'**इयन्त इति संख्यानं निपातानां न विद्यते**[14]' इति। ह्विट्नी[15]-मोनियरविलियम्स[16]-वान्द्रियैज-प्रभृतीनामप्ययमेवाशयः।

---

१. ऋ० सं०–२।२०।२।
२. अवेस्ता–पृ० ५९।
३. शतपथब्रा०–३।१।२।१, छा० ब्रा०–२।२।४।
४. ऋ० सं०–६।६२।७–स्कन्दभाष्यम्।
५. कुमारसम्भवम्–७।६८।
६. नैषधीयम्–९।४३।
७. क्रियारत्नसमुच्चयः–१।४५।
८. सिद्धहेमश०–१।१।३१।
९. संस्कृत ग्रामर–पृ० ३९१।
१०. तदेव–पृ० ३९१।
११. वाल्मीकिरा०-सुन्दरका० ७।१५।
१२. संस्कृत ग्रामर–पृ० ३९१।
१३. शतपथब्रा०–३।१।२।१।
१४. बृहद्देवता–२।९५।
१५. संस्कृत ग्रामर–पृ० ३९१।
१६. संस्कृत इंग्लिश डिक्श०–पृ० १६५।

(१४) इव [ = उपमायाम् ]।

'इव' इति निपातस्य भूयान् अर्थप्रसारो रूपान्यथात्वञ्चावलोक्यते। निपातोऽयं कुत्रचित् सम्प्रत्यर्थे प्रयुक्तो दृश्यते[१], कुत्रचिद् अवधारणार्थे[२], कुत्रचित् समुच्चयार्थे[३], कुत्रचिच्चार्थे[४], कुत्रचिद् ईषदर्थे[५], कुत्रचिद् विनाशार्थे[६], कुत्रचिद् वाक्यालङ्कारार्थे[७], कुत्रचिद् उपमानार्थे[८], कुत्रचिद् वितर्कार्थे[९], कुत्रचिदुत्प्रेक्षायाम्[१०], कुत्रचिद् वैक्लव्ये[११], कुत्रचित् सम्भावनायाम्[१२], कुत्रचिच्च संदेहनिवृत्ताविति[१३]। एवमैतिहासिकसंस्रवेऽस्यार्थविकासो निपातानामुर्बरत्वं सुस्थापयति। हन्त ! यदस्य साम्प्रतिको व्यवहारः केवलम् उपमायामेव क्रियते कविभिः। मन्ये यदस्य कारणं संस्कृतवाङ्मयस्य छन्दाभिनिवेश एव।

न हि केवलमर्थदृष्ट्यैवास्य विकासो महत्त्वमादधाति, अपि तु रूपविकासदृष्ट्याऽपि। प्राकृतभाषायामनेन पुरुरूपमवाप्तम्। तत्र—इव > विव > विअ > वेअ > व्व > व—प्रभृतयो रूपप्रतिमा व्यवहारपदवीमवतरन्ति। संस्कृतभाषायामप्यनेन प्राकृतप्रभावोऽङ्गीकृतः। प्राकृते शब्दानामादिस्वरलोपपरम्परा तु प्रथिततरैव। सैव परम्परा यत्र तत्र संस्कृतेऽप्यवलोक्यते। महाभारते 'इव' निपातस्य इकारलोपो दृश्यते। तद्यथा—'**मणी व जात्यौ पश्यामि चक्षुषी तेऽहमण्डज**[१४]' इति। श्लोकोऽयम् अर्जुनमिश्रेण व्याख्यायि यत्—'मणी व = माणीव। इवेति निपातस्येकारलोपः छान्दसः' इति।

'इवः' इकारलुप्तः प्रयोगो महाकविकालिदासेनापि पुरस्कृतः—

**तां जानीथाः परिमितकथां जीवितं मे द्वितीयं**
**दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम्।**
**गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां**
**जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम्**[१५]॥ इति।

---

१. ऋ० सं०–१।२९।१, १०।६९।८। २. तदेव–१।३७।३, २।१२।५।
३. तदेव–६।४८।१४। ४. तदेव–१०।५६।२।
५. बृहदारण्यकोपनिषद्–४।३।७, उत्तररामच० १।४८। ६. गीता–३।२।
७. कुमारसं०–८।३७, नैषधीयम्–९।२८। ८. कुमारसं०–८।५४।
९. अभिज्ञानशा०–१, पृ० ९४।
१०. मालतीमा०–९, पृ० ३०५, नैषधीयम्–१०।८८।
११. किरातार्जुनीयम्–३।८। १२. तदेव–३।८। १३. नैषधीयम्–७।४१।
१४. महाभारतम्—उद्योगप०–११२।१२। १५. मेघसंदेशः–८०।

'पद्मिनीं वान्यरूपाम्' इति प्रयोगे 'इवः' आद्यस्वरलुप्तो दृश्यते। समर्थयते तथ्यमिदं मेघसंदेशव्याख्याता पूर्णसरस्वतिः। मैक्डानल[1]-वाकरनागल[2]-प्रभृतीनामप्ययमेवाभिप्रायः।

एवं स्पष्टरूपेण प्राकृतप्रभावो द्रष्टुं शक्यते 'इव' निपाते। 'वानरः' इति शब्दस्य व्याख्यात्रा सर्वानन्देनापि प्रतिपादितं यत्—'नर इव वानरः। इवशब्दस्येकारलोपः। आर्षो दीर्घः[3]' इति। इत्थं तुलाबोधकोऽस्य विकासः प्राकृतनिपातेन सह—इव > विव[4] > विअ[5] > वेअ[6] > व्व[7] > व[8]—अवलोकनीयः।

(१५) उ [ = एवार्थे ]।

'उ' इति निपातो यद्यपि तनुतरां रूपप्रतिमां वहति, किन्तु अर्थविकासदृष्ट्या चास्यातिमहत्त्वपूर्णं स्थापनमस्ति वैदिकवाङ्मये। अत एव माधवाचार्येणाप्युक्तं यत्—

उकारो विनिग्रहार्थस्तथाऽनेकत्र दर्शनात्।
तमुष्टवाम य इमा तमु त्वा गोतमो गिरा॥
माधवस्तत्र वदति स्फुटत्वोद्ग्रहणादिकम्।
वाक्यार्थे जनयन्त्येते मन्त्रब्राह्मणयोरिति[9]॥

अर्थाद् वाक्यस्य स्फुटत्वाभिव्यक्तये लघुप्रतिमावतामप्येतेषामनन्यसाधारणो योगोऽवधारणीयः।

एवं लघुप्रतिमावानयं कुत्रचिद् एवार्थे[10], कुत्रचिद् अप्यर्थे[11], कुत्रचिद् उत्तमार्थे[12], कुत्रचित् पादपूरणे[13], कुत्रचिच्चार्थे[14], कुत्रचित् प्रसिद्ध्यर्थे[15], कुत्रचिद् वाक्यालङ्कारार्थे[16], कुत्रचित् तपसि[17], कुत्रचित् सम्बोधने[18], कुत्रचित् क्षेपे[19], कुत्रचिद् विस्मये[20], कुत्रचित् सूचनायाम्[21] अपि व्यवहृतोऽवलोक्यते संस्कृतवाङ्मये।

---

१. वैदिक ग्रामर–पृ० १४८।
२. एल्टिन्डिशे ग्रामेटिक—पृ० ६४।
३. नामलिङ्गानुशासनम्–२।५।३—सर्वानन्दव्याख्या।
४. देशीनाममाला-परिशिष्टम्–३।
५. प्राकृतप्रकाशः–९।३–चन्द्रिकाटीका।
६. तदेव।
७. प्रतापरुद्रीयम्—काव्यप्रकरणम्–५५–कुमारस्वामिव्याख्या।
८. देशीनाममाला—परिशिष्टम्–३।
९. ऋग्वेदानुक्रमणी–३।१।१७,२०।
१०. ऋ० सं०–१।३७।२, अथर्ववेदः–१।१४।३।
११. ऋ० सं०–१।११२।१, अथर्ववेदः–२।९।२, छा० ब्रा०–२।४।८।
१२. ऋ० सं०–३।३८।११।
१३. तदेव–६।४०।२, अथर्ववे०–१।२४।४, छा० ब्रा०–२।१।१६।
१४. ऋ० सं०–७।७५।१।
१५. अथर्ववेदः–२।२।३।
१६. सामविधानब्रा०–१।१३।
१७. कुमारसम्भवम्–१।२५।
१८. नैषधीयम्–१।३४।
१९. प्राकृतप्रकाशः–९।१।
२०. तदेव–९।१।
२१. तदेव–९।१।

निपातान्तराणां सङ्घटनेऽप्यस्योपादानत्वमवलोक्यते । तद्यथा—किमु <किम् + उ> किमु, अथो <अथ + उ> अथो, नु <न + उ> नु—इति । वैदिकसाहित्ये निरनुबन्धकोऽयं निपातः पाणिनिना ञकारानुबन्धेन योजितः—'उ + ञ् > उञ्' इति । हेमचन्द्राचार्यस्तु निरनुबन्धक एवास्य रूपप्रतिमां स्वीकरोति । एवमुत्तरकालिकसंस्कृतवाङ्मय उत्तरोत्तरमस्य व्यवहारः कार्पण्यं प्राप ।

**(१६) उत** [ = विकल्पार्थे ] ।

'उत' इति निपातः संस्कृतवाङ्मयस्य प्राणभूतो दृश्यते । श्रुतिवाङ्मयं तु किलास्य चित्रात्मकैर्विविधैरर्थैर्विभूषितो दृष्टिपथमवतरति । नूनं निपातेनानेन संस्कृतभाषाया महानुपकारः कृतः । निपातस्यास्य रूपविकासः, अर्थविकासश्चैतिहासिकदृष्ट्याऽपि भाषायाः समृद्धिं सूचयति । काममयं निपातः कुत्रचित् समुच्चयार्थे[1], कुत्रचिद् अप्यर्थे[2], कुत्रचिद् यस्मादर्थे[3], कुत्रचिद् एवार्थे[4], कुत्रचिद् आमन्त्रणार्थे[5], कुत्रचिद् विचिकित्सायाम्[6], कुत्रचित् त्वर्थे[7], कुत्रचिद् विकल्पार्थे[8], कुत्रचित् परामर्शार्थे[9], कुत्रचित् प्रश्नार्थे[10], कुत्रचिद् अधिकशब्दार्थे[11], कुत्रचिद् अङ्गीकरणार्थे[12], कुत्रचिद् निश्चयार्थे[13], कुत्रचिद् वार्थे[14], कुत्रचिच्च अत्यर्थे[15] विनियुक्तोऽवलोक्यते ।

एवमस्य निपातस्यार्थविवर्तोऽभूद् देववाण्याम् । वस्तुतो महाभाष्यकर्तुर्वचनमत्र बलात् स्मृतिपथमवतरति यत्—**'को हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुम्**[16]**'** इति । एष एव शब्दब्रह्मणो विवर्तवादः । अत एव महामतिना भर्तृहरिणोक्तं यत्—**'विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः**[17]**'** इति ।

न हि केवलं स्वीयैर्विभिन्नैरर्थैरेवानेन निपातेन भाषाऽलङ्क्रियते, अपि तु पदविकासदृष्ट्याऽप्ययं विविधेषु रूपेषु विपरिणमते । 'उदस्वित् <उत + स्वित्> उदस्वित्[18], उताहोस्वित् < उत् + आह + उ + स्वित् > उताहोस्वित्[19],

---

१. ऋ० सं०–१।१।२, अथर्ववेदः–४।२५।५ ।
२. ऋ० सं०–१।४।५, अथर्ववेदः–११९।३।१, तै० आ०–५२।५३ ।
३. ऋ० सं०–१।१०।५ ।
४. तदेव–१।२३।१९, भागवतम्–१०।१४।२७ ।
५. ऋ० सं०–३।३०।५ ।
६. तदेव–७।८६।२, मृच्छकटिकम्–३, पृ० ८६ ।
७. ऋ० सं०–१०।७१।४, भागवतम्–१०।२५।३८ ।
८. अथर्ववेदः–२।८।७ ।
९. तै० सं०–१।११।६२ ।
१०. तै० आ०–८।२।६ ।
११. महाभारतम्–शान्तिप०–२६३।३८ ।
१२. अष्टाध्यायी–३।३।१५२, सरस्वतीकण्ठाभ०–२।४।२८० ।
१३. मालतीमा०–२।७, मृच्छकटिकम्–७, पृ० १८१ ।
१४. वाल्मीकिरामायणम्–सु०का० ४२।६ ।
१५. शब्दार्थचिन्तामणिः–पृ० ३३८ ।
१६. महाभाष्यम्–२।१।१ ।
१७. वा० प० १।१ ।
१८. तै० सं०–६।२।१८ ।
१९. मालतीमाधवम्–४, पृ० २११ ।

उताहो <उत् + आह + उ> उताहो[1], किमुत <किम् + उत> किमुत[2], उतो <उत + उ> उतो[3]—प्रभृतयः रूपप्रतिमा भाषासौन्दर्यं समेधयन्ति। एवं निपातयोर्निपातानां वा समासेन भाषाया द्विधा समृद्धिरवलोक्यते। प्रथमं तु शब्दप्रतिमानामाढ्यत्वम्, द्वितीयं तावदर्थविम्बानामुपसर्जनत्वमिति। अत एव नारायणभट्टेनोक्तं यत्—

**अनन्ताः खल्वनन्तार्थाः स्वराद्याश्चादयोऽपि च।**
**असत्त्वपरतैवात्र चादीनां नियता मता**[4]॥ इति।

अवेस्ताभाषायां तु 'उतः' 'त' ध्वनिः 'स' ध्वनिरूपेण विपरिणमते—उत > उस—इति। ह्विट्नीमहोदयोऽपि सिद्धान्तयति यत् किल वैदिकसाहित्ये रूपदृष्ट्यार्थ-दृष्ट्या चास्य निपातस्य विकासः समुच्चयार्थे नियत इवासीत्, किन्त्ववर्वाक्कालिकभाषायां त्वयमस्पष्टार्थकः सञ्जातः[5]।

**(१७) उपरि** [=ऊर्ध्वभावे]।

'उपरि' निपातस्य व्यवहार उपसर्गरूपेणापि दृश्यते संस्कृतभाषायाम्[6]। अस्योपसर्गरूपेण व्यवहारस्तु विशेषतो—√गम्, √या, √स्था—प्रभृतिभिर्धातुभिः सहावलोक्यते। वैदिकभाषात आरभ्य प्रायेण सर्वासु प्राचीनार्वाचीनभारोपीयार्य-भाषासूपसर्गरूपेणैवास्य प्रयोगो दृष्टिपथमायाति। अत्रैतदपि कल्पयितुं शक्यते यत् पाणिनेः प्रादिपाठे परिगणितः 'परि' इत्युपसर्गः 'उपरि' उपसर्गस्यैवावशिष्टो लुप्तोकारः प्रतीयते। यतो हि ऋग्वेदे 'परि' शब्दः 'उपरि' शब्दस्यार्थे दृश्यते[7]। तद्व्याख्याता स्कन्दस्वामी वष्टि यत्—**'त्वत् परि=षष्ठ्यर्थेऽत्र पञ्चमी, उपरिशब्दस्य च उकार-लोपः। तवास्थिकुम्भस्य च तवोपरि'** इति। किं बहुना 'उपरः' इति प्रयोगोऽपि 'उपरि' शब्दस्यार्थे दृश्यते ऋग्वेदे[8]। एभिः प्रमाणैः कल्प्यते यत् 'परि' उपसर्गस्य विकासः 'उपरि' इत्युपसर्गात् समजनि। एवं किलास्य रूपविकासस्तु—उपरः > उपरि > परि–इति सञ्जातः।

भारोपीयार्यभाषास्वस्य विकासोऽप्युपसर्गरूपेणैव दृश्यते। तद्यथा—

(क) उपरि > प्रा० उप्परि > सिन्धी–ओप्पिरो > गुज०–उपरी–मरा०–उपरु > हिन्दी–उपर > मरा० हुपरि प्रा० उवरि > औवरि > वोरि > वरि > वरि–इति[9]।

---

१. मृच्छकटिकम्–३, पृ० ८६। २. रघुवंशम्–१४।३५। ३. ऋ० सं०–५।१३।८।
४. अवेस्ता–पृ० ४२। ५. संस्कृत ग्रामर—पृ० ५०७।
६. वैदिक ग्रामर–पृ० १५६, संस्कृत सिन्टैक्स–पृ० ११५।
७. ऋ० सं०–१०।१८।१३, १०।१३५।४–स्कन्दभाष्यम्।
८. तदेव–१०।२७।२०–स्कन्दभाष्यम्।
९. द्र० प्रा० प्र०–पृ० १३७, प्रा० शब्दानु० पृ० १७५, देशीना०पृ० १६१, सेतुबन्धका० ८।७५, कुमारपालच० १।१३, विदग्धमाधवम्–पृ० १९२, मराठीव्युत्पत्तिकोशः–पृ०१०३।

(ख) उपरि > अवे० उपैरि > फारसी–बर > ग्री० उफर > लै० सुपर > गाथि० उफर > जर्म० अबर > इंग्लि० ओवर–इति[१]।

(१८) एव [=निश्चये]।

'एव' इति निपातः संस्कृतभाषायामजस्ररूपेण व्यवह्रियमाणोऽवलोक्यते। अस्य निपातस्याप्यर्थविस्फूर्जनं हि नाम महदाश्चर्यकरं दर्शनपदवीमवतरति। वैदिक-साहित्येऽयम् 'एवा < एव + आ > एवा' इति रूपेणापि परामृष्टो दृश्यते। व्याकरोति च सायणाचार्यः—'एवा = एवम्। 'निपातस्य[२] च' (पा० ६।३।१३६) इति सांहितिको दीर्घः' इति। 'एवम्' इति निपातोऽपि 'एव' निपातस्यैव द्वितीयाविभक्त्यन्त इति प्रतिभाति। यतो हि ऋग्वेदसंहितायां 'एवम्' इति निपातस्य व्यवहारस्तु प्रायेण नावलोक्यते। अथर्ववेदेऽस्य व्यवहारः—'एवं विद्वान् = एवं ज्ञात्वा' इत्यर्थे दृष्टचरः। ह्विट्नीमहोदयस्यायमेव निष्कर्षः[३]। अतो रूपप्रतिमाया विकासदृष्ट्याऽऽद्यो व्यवहारस्तु 'एव' इति निपातस्यैवेति मन्ये।

अर्थविकासदृष्ट्याऽयम् 'एव' निपातोऽत्युर्बरः प्रतिभाति। संस्कृतवाङ्मयस्य सर्वस्वभूतेषु केषुचिन् निपातेष्वस्य परिसंख्यानं कर्तुं शक्यते। कुत्रचिदयं निपातश्चार्थे[४], कुत्रचित् काम्यवचने[५], कुत्रचिद् एवम् इति निपातार्थे[६], कुत्रचिद् निश्चये[७], कुत्रचिद् वारणार्थे[८], कुत्रचित् सम्भावनायाम्[९], कुत्रचिद् अभावार्थे[१०], कुत्रचित् पौनःपुन्यार्थे[११], कुत्रचिच्च संशयार्थे[१२] विनियुक्तो दृश्यते।

प्राकृतभाषायां त्वस्य रूपाणि विविधानि दृष्टचराणि। तद्यथा—एव > येव[१३] > जेव्व[१४] > वो >[१५]जि[१६]—इति।

प्राचीनयूरोपीयार्यभाषाभिरप्यस्य संवादो दृश्यते—सं० एव > अवे० अएव > गोथि० ऐव > जर्म० एवो > इवो[१७]—इति।

---

१. द्र० संस्कृत इंग्लिश डिक्श०–पृ० २०५।
२. अथर्ववेदः–२।१५।१।
३. संस्कृत ग्रामर–पृ० ३९१।
४. ऋ० सं०–१।१।३।
५. तदेव–१।१००।२।
६. तदेव–६।३०।६, अथर्ववेदः–७०।३।१।
७. महाभारतम्–५।२।८६।
८. तदेव—शान्तिप०–६१।६।
९. मेघसंदेशः–२।३३।
१०. कुमारसम्भवम्–३।१९, ३।२६।
११. तदेव–४।४।
१२. किरातार्जुनीयम्–३।४०।
१३. अशोक के अभिलेख-कालसी–१४, १९।
१४. प्रा० प्रकाशः–१२।२३।
१५. अशोक के अभिलेख—शहबाजगढ़–३।६।
१६. हैमप्रा० प्रकाशः–३।३।३५।
१७. इंग्लिश-संस्कृत डिक्श०–पृ० २३२।

(१९) कथम् [ = प्रश्ने ]।

'कथम्' इति निपातः संस्कृतभाषायां प्रायेण प्रश्नार्थे, जिज्ञासायां वा व्यवहृतोऽवलोक्यते। उत्तररामचरितस्य टिप्पणीभाग एकः श्लोक उद्धृतो वर्तते, येनास्य विविधार्थाः संसूच्यन्ते—

**ज्ञान-हेतु—विवक्षायामप्यादिः कथमव्ययम्।**

**कथमादि तथाप्यन्तं यत्नगौरवबाढयोः**[1] ॥ इति।

अस्मिन् श्लोके 'कथम्' निपातः—ज्ञाने, हेतौ, विवक्षायाम्, यत्ने, गौरवे, बाढार्थे च पठितो वर्तते। वैदिकसाहित्ये, विशेषत ऋग्वेदसंहितायां तु 'कथम्' इति निपातो वारद्वयं व्यवहृतः[2]। अस्यैव 'कथम्' इति निपातस्य तृतीयाविभक्त्यन्तः 'कथा' इति निपातस्त्वसकृत् परामृष्टो दृश्यते। 'कथा' इति निपातस्य विनियोगस्तु तत्र प्रवृत्तिनिवृत्तिमूलकः, हेतुमूलकश्च प्रतिभाति। कथा = केन प्रकारेण इत्येवार्थो वैदिक-साहित्याभिप्रेत इति मन्ये। प्रमाणयति च तथ्यमिदं सायणाचार्यः—'कथा गर्हसे = केन हेतुना गर्हापूर्वमावेदयेः। कथा—किंशब्दात् 'था हेतौ च छन्दसि' इति थाप्रत्ययः। 'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञायां 'किमः कः' (पा० ७।२।१०३) इति कादेशः[3]' इति।

अत्रैतत्प्रतिभाति यत् 'कथा' इति निपातस्य भूयस्त्वेन भाषिके विनियोगे यथा, तथा, इत्था, अमुत्था, सर्वथा प्रभृतिथाप्रत्ययान्तानां निपातानां सादृश्यमेव कारण-मासीत्। पाणिनिमनु 'कथा' इत्यस्य व्यवहारोऽवरुद्धः सञ्जातः।

निपातान्तराणां प्रसवेऽप्यस्य विनियोगोऽवलोक्यते—कथन्नु <कथम् + नु> कथन्नु[4], कथंवा <कथम् + वा> कथंवा[5], कथञ्चित् <कथम् + चित्> कथञ्चित्, कथो <कथा + उ> कथो[6]—प्रभृतिनिपाताः 'कथम्' इति निपातोपादानकारणभूताः। प्राकृतभाषायां त्वस्य संवादः—कथम् > कहं[7] > केम[8]-रूपेणापि निभाल्यते।

(२०) कदा [ = कस्मिन् काले ]।

'कदा' इति निपातः कालबोधकः—'कदा = कस्मिन् काले'—सन् धारयति काञ्चिद् रहस्यमयीं रूपप्रतिमाम्। ऋग्वेदस्यानुसन्धानिकेन गवेषणेन वक्तुं प्रभवामो यदस्य व्युत्पत्तिस्तु—'कत् + आ > कदा' इति निपातद्वयसमाहारेणैव जायते।

१. उत्तररामचरितम्—२, पृ० ७८।
२. ऋ० सं०—५।६१।२, १०।१०८।१। ३. तदेव—४।३।५।
४. नैषधीयम्—९।६२। ५. अभिज्ञानशा०—१।२५। ६. ऋ०सं०—५।२९।१३।
७. अभिधानप्पदीपिका—३ ८. हैमप्राकृतव्याकरणम्—८।४।४०१।

तथा हि मन्त्रः—

**का मर्यादा वयुना कद्ध वाममच्छा गमेम रघवो न बालम् ।**
**कदा नो देवीरमृतस्य पत्नीः सूरो वर्णेन ततनन्नुषासः[1] ॥** इति ।

मन्त्रेऽस्मिन् 'कत्'–'कदा' इति निपातौ पर्यायत्वेन व्यवहृतौ । सायणाचार्यस्याप्ययमेवाशयः । अर्थविकासदृष्ट्या तु काममयं कालाधिकरणार्थक एव दृश्यते देववाण्याम् ।

निपातेतराणां सङ्घटनेऽप्यस्य योगोऽर्थवैविध्यगौरवमावहति । 'कदापि < कत् + आ + अपि > कदापि, कदाचन < कत् + आ + च + न > कदाचन[2], कदाचित् < कत् + आ + चित् > कदाचित्[3], कच्चित्[4] < कत् + चित् > कच्चित्, कदानु < कत् + आ + नु > कदानु—प्रभृतयो निपाताः 'कत्' इति निपातोपादानकारणभूताः । अन्योन्यं समस्तेष्वेतेषु अर्थभेदा अपि दृश्यन्त एव ।

अत्रावधातव्यमस्ति यत् 'कदाचन' इति निपातेऽन्त्यस्थानीयेन नञा वाक्यर्थानुयोगित्वम् ऊरीक्रियते, 'न कदापि' इति प्रयोगे तु आद्यस्थानापन्नेन नञा वाक्यार्थप्रतियोगित्वम् ऊरीकृतम् । एकत्र नञ् विधिमुखेन वाक्यार्थं समेधयति, अपरत्र तु वाक्यार्थप्रवाहं निषेधमुखेन खण्डयति । प्राकृतभाषायामप्यस्य संवादोऽवलोकनीयः—कदा > कुदा[5] > कदो[6] > कत्ता[7]—इति ।

प्राचीनभारोपीयभाषानिपातेनाप्ययं संवदते—कदा > अवे० कधा > ग्री० कोर्ते > लै० कोण्डो > लिथु० > कदा > स्लावो० कुदा[8]—इति ।

**(२१) किम्** [ = प्रश्ने ] ।

'किम्' इति निपातो निखिलसंस्कृतभाषायां निर्विशेषरूपेण परामृश्यते । निपातस्यास्य व्यवहारः प्राधान्यतया प्रश्नार्थ एव कृतो वर्तते । अन्येष्वप्यर्थेष्वस्य निनियोग उपलभ्यते । कुत्रचिदयं कुत्सायाम्[9], कुत्रचित् प्रश्ने[10], कुत्रचिद् विकल्पे[11], कुत्रचिद् आक्षेपे[12], कुत्रचिद् इवार्थे[13], कुत्रचिद् उपायप्रश्ने[14], कुत्रचित् सम्भावनायाम्[15], कुत्रचित् सुष्ठ्वर्थे[16], कुत्रचिद् वितर्के[17], कुत्रचिद् असम्भावनायाम्[18], कुत्रचिद् आश्चर्ये[19] च । एवमर्थविकासदृष्ट्याऽप्ययमुर्वरत्वमावहति ।

---

१. ऋ० सं०–४।५।१३–सायणभाष्यम् ।
२. शुक्लयजुर्वेदः-८।३, ऐ०ब्रा०-३।४४ ।
३. गीता–२।२०, कुमारसं०–१।८९ ।
४. किरातार्जुनीयम्–१।३४ ।
५. अभिधानप्पदीपिका–३ ।
६. षड्भाषाचन्द्रिका–२।२।१२ ।
७. तदेव–२।२।१२ ।
८. संस्कृत इंग्लिश डिक्श०, पृ० २४८ ।
९. गीता–१।१ ।
१०. तदेव–२।५४ ।
११. कुमारसं०–६।२३ ।
१२. नैषधीयम्–३।१३ ।
१३. महाभा०–५०।२४ ।
१४. किराता०–२।२९ ।
१५. नैषधीयम्–१३।३१ ।
१६. अग्निपु०–२६१।२० ।
१७. शब्दार्थचिन्तामणिः–पृ० ३३८ ।
१८. किरातार्जुनीयम्–२।२९ ।
१९. ऋ० सं०–४।७।५ ।

सजातीयाणां निपातान्तराणां रूपविकासदृष्ट्याऽप्यस्यानन्यसाधारणो योगोऽवलोक्यते। तद्यथा—किमु <किम् + उ> किमु, किमुत<किम् + उत>किमुत, किमपि<किम् + अपि>किमपि, किंस्वित्<किम् + स्वित्>किंस्वित्, किमिव<किम् + इव>किमिव, आकीम्<आ + किम्>आकीम्[1], नकिम्<न + किम्> नकिम्—प्रभृतयो निपातप्रतिमाः 'किम्' निपातप्रकृतिभूताः। 'आकीम्' इत्यत्र तु दीर्घेकारवतोऽस्य रूपं छान्दसप्रभावापन्नमिति मन्ये।

अत्रावधातव्यमस्ति यद् अयमेव 'किम्' नितातः—कः, कौ, के, का, के, काः—प्रभृतिसर्वनामशब्दानां प्रकृतिभूतः। **'किमः कः[2]'** इति महामुनिसूत्रेणापि पुष्टिमेति तथ्यमिदम्। एतेनाधुनिकभाषाशास्त्रिणां सिद्धान्तोऽयं पुष्टतरो भवति यत्—'प्रायेण सर्वे निपाताः कदाचिद् नामशब्दाः, सर्वनामशब्दाश्चासन्[3]' इति।

प्राकृतभाषायामस्य संवादः—किम्>किणो>काई[4]—इति रूपेण दृश्यते।

**(२२) किल** [ = ऐतिह्ये ]।

'किल' इति निपातो देववाण्यामजस्ररूपेण सर्वत्र व्यवहृतोऽवलोक्यते। अर्थस्यैतिहासिकविकासदृष्ट्याऽप्यनेन संस्कृतभाषा सभाजिता। कुत्रचिदयं तदाशब्दार्थे[5], कुत्रचिद् विद्याप्रकर्षे[6], कुत्रचिद् अपरमार्थे[7], कुत्रचिद् वार्तायाम्[8], कुत्रचिद् ऐतिह्ये[9], कुत्रचित् प्रसिद्धौ[10], कुत्रचित् सम्भावनायाम्[11], कुत्रचिद् इवार्थे[12], कुत्रचिच्च निर्धारणेऽपि[13] प्रयुक्तो दृष्टिपथमायाति।

अस्य 'किल' निपातस्य रूपप्रतिमायां रेफध्वनिरपि दृश्यते ऋग्वेदे। तत्र 'किर' इति निपातः सम्यक्त्वे विनियुक्तोऽवलोक्यते। तथा च मन्त्रः—

**स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो अद्रिवः।**
**गामश्वरथ्यमिन्द्र स किर सत्रा वाजं न जिग्युषे[14]॥** इति।

मन्त्रोऽयं व्याचक्षाणेन सायणाचार्येण व्याख्यायि यत्—'किर = सम्यक् प्रयच्छ' इति। वैदिकसाहित्ये तु र = ध्वनिः, ल-ध्वनौ विपर्यासं गच्छति। रघुः[15]>लघुः, रघ्वी>लघ्वी इति ध्वनिविपर्यस्ताः शब्दाः कामं वैदिकभाषाकाले प्राकृतभाषायाः स्थितिं स्थापयन्ति। प्राकृतभाषायां तु 'किल' इति निपातः 'किर'रूपेणोपलभ्यत एव[16]।

---

१. ऋ० सं०—१।१४।९। २. अष्टाध्यायी—७।२।१०३।
३. लेक्चर्स आन साइंश आफ लैंग्वेज—पृ० ३८२। ४. षड्भाषाचन्द्रिका—२।१।३७।
५. ऋ० सं० १।३२।४। ६. तदेव—६।४७।१।
७. अथर्ववेदः—४।७।३। ८. अभिज्ञानशा०—१, पृ० ११५, मेघसंदेशः—२।२६।
९. रघुवंशम्—३।३९। १०. तदेव—४।५८। ११. मेघसंदेशः—२।४०।
१२. नैषधीयम्—२।८१। १३. उत्तररामचरितम्—३।२७। १४. ऋ० सं०—६।४६।२।
१५. तदेव—६।६३।९। १६. मृच्छकटिकम्—पृ० १२२।

अतो मन्ये यदस्य 'किल' निपातस्य प्राथमिकं रूपं तु रेफध्वनियुक्तमेवासीदिति। तदनन्तरं ल-ध्वनेर्विकासः सञ्जातः—किर > किल > किर—इति विकासक्रमः सुष्ठु प्रतिभाति।

**(२३) कु [ = कुत्सितार्थे ]।**

'कु' इति निपातस्यैतिहासिको विकासो विविधरूपेणोपलभ्यते। रूपप्रतिमा-प्रसवदृष्ट्याऽस्य विकासस्तु चित्रात्मकोऽवलोक्यते संस्कृतभाषायाम्। अर्थविकास-दृष्ट्याऽनेन तादृशं महत्त्वं नावाप्तम्, यथा रूपविकासदृशा। 'कु' इति निपातस्य द्वावर्थावुपलभ्येते प्रायेण संस्कृतभाषायाम्—कुत्सितार्थे, अल्पार्थे च। 'कुचरः <कु+√चर [= गतौ ]> कुचरः' इति शब्दं व्याख्याति सायणाचार्यः—'कुचरः = कुत्सित-चरणः[1]' इति। 'अकवा = अनल्पाः' इत्यत्र 'कु' निपातोऽल्पार्थे व्यवहृतोऽवलोक्यते।

रूपान्तराणां विकासदृष्ट्या त्वस्य सगोत्रीयाः शब्दा महदाश्चर्यकराः प्रति-भान्ति। 'क्व < कु + अ > क्व, कवारिः < कु + अरिः > कवारिः, कुवित् < कु + √विद [ = ज्ञाने ] > कुवित्, कुह < कु + ह > कुह, कूचित् < कु + चित् > कूचित्, कुहचित् < कु + ह + चित् > कुहचित्, क्वस्वित् < कु + अ + स्वित् > क्वस्वित्, कूस्थः < कु + √स्था > कुस्थः > कूस्थः, अकूपारः < अ + कु + √पृ [ = पूरणे ] > अकुपारः > अकूपारः'—प्रभृतयः शब्दा अस्य 'कु' इति निपातस्यौर्वरत्वं प्रख्यापयन्ति।

उपर्युदाहृतेषु शब्दग्रामेषु कुत्रचिदयं धातुना सह संश्लिष्टो दृश्यते, कुत्रचिद् निपातेन सह, कुत्रचिच्च नामशब्देन सह। कुत्रचित्तु प्रकृतिस्थानीयेनानेन प्रत्यया अपेक्षिताः। यथा—कुत्र < कु + त्र > कुत्र = क्वेत्यर्थः।

एवं 'क्व' शब्दो यणमनुभवति। तथा हि दृष्टान्तम्—'जाया तप्यते ............ क्व स्वित्[2]' इति मन्त्रं व्याख्याति सायणः–'क्वेत्यत्र यण्' इति। 'क्वारिः' शब्दस्त्ववादेश-मनुभवति। समर्थयते चामुं सिद्धान्तं बरोमहोदयः[3]। व्याख्याति च मन्त्रममुं स्कन्दस्वामी—'कुत्सिता अरयो यस्य स क्वारिः। कुशब्दस्योकारोपसर्जनो गुण-श्छान्दसः। ततो नञ् समासः[4]' इति। भट्टभास्करमिश्रस्याप्ययमेवाशयः[5]।

'कुवित्' इति बह्वर्थवाची निपातस्तु धातुनिपातयोः संश्लेषणेन प्रसूतः। तथा च व्याख्याति दुर्गाचार्यः—'कुवित् रिहं ह्रस्वः। कुत्सितमिव हि तद् विज्ञायतेऽल्पत्वा-दिति कुवित्[6] इति। प्रमाणेनानेन स्वत एव सिद्ध्यति यत् कु + √वेद [ = ज्ञाने ] > कुवित् = बहुवारम् इत्यर्थः। 'कुवित्' इत्यस्य निपातस्य रूपलाभस्तु धातुनिपात-समर्पणमूलकः। वैदिकसाहित्य उपसर्गरूपेणाप्यस्य व्यवहार उपलभ्यते। 'कुविदा-

---

१. ऋ० सं०–१०।१८०।२।  २. तदेव–१०।३४।१०।
३. इण्डियन लिंग्विस्टिक्स वाल्यूम-१६ नवम्बर–१९५५।
४. ऋ० सं०–१०।३४।१०।  ५. तै० सं० १।४।१७।  ६. निरुक्तम्–३।१।१३।

गमत् <कु + √विद + आ + √गम् [ =गतौ ]>कुविदागमत् = बहुवारमागच्छतु[१], गमेर्लेटि। कुविद् वेदत् <कु + √विद + √विद >कुविद् वेदत् = बहुलं जानातु इत्यर्थः[२]। 'कुविद्वेदत्' इति व्यवहारस्तु किलैकस्यैव धातोरभ्यस्तप्रयोगः। उद्देश्यदले स एव धातुर्निपातसंज्ञामवाप्नोति, विधेयदल आख्यातसंज्ञाम् इति।

'कुह' इति कुत्रार्थको निपातस्तु निपातद्वयसमाहारभूतः—कु + ह > कुह = कुत्रेत्यर्थः[३]। 'कुह चित्' इत्यत्र तु निपातत्रयाणाम्—कु + ह + चित् > कुहचित् = क्वापीत्यर्थः[४] समाहारोऽवलोकनीयः। 'कुहया' इति व्यवहारे त्वस्य नामत्वमप्यवाप्यते[५]। 'क्व स्वित्' इति निपातोऽपि निपातत्रय—कु + अ + स्वित् > क्वस्वित्=क्वापीत्यर्थः-समाहारभूतः।

'कूस्थः' इति प्रयोगे तु कोरुपसर्गत्वमपि—कु + √स्था > कुस्थः > कूष्ठः = क्व तिष्ठथः—दृश्यते[६]। व्याख्याति च सायणाचार्यः 'कूष्ठः' इति शब्दम्—'कु इत्यस्य निपातस्य√स्था इत्याख्यातेन सह योगविभागात् समासः। ऐकस्वर्यं चाध्येतृसमयप्राप्तम्। 'अरा ईव' (ऋ० सं०–५।५८।५) इत्यत्र यथेवशब्दः, 'कूचिज्जायते' (ऋ० सं०–१०।४।५), 'कूचित्सन्तम्' (ऋ० सं०–१०।९३।११) इत्यादिवदत्रापि द्रष्टव्यम्' इति।

एवमेव 'अकूपारः' इति व्यवहारेऽपि कोरुपसर्गत्वं दृश्यते[७]। एवं हि रूपमूर्तीनां सङ्घटनेऽर्थबिम्बानाञ्च प्रसवेऽप्यस्य महान् योगोऽवलोक्यते।

(२४) खलु [ = अनुनये]।

'खलु' इत्ययं निपात आ ऋग्वेदात् सम्पूर्णे संस्कृतसाहित्ये, प्राकृतापभ्रंशभाषास्वपि चाजस्त्ररूपेण व्यवह्रियमाणोऽवलोक्यते। श्रुतिवाङ्मयस्य प्राथमिके समये त्वस्य प्रचारो व्यवहारश्च विरलः। उत्तरोत्तरमस्य व्यवहार आकर्षणं मोहो वा दृश्यते। महामुनिपाणिनेः पश्चात्त्वस्य प्रयोगश्चित्रात्मक उपपन्नः। क्वचिदस्य व्यवहारो निश्चयेऽवलोक्यते[८], क्वचिद् अपाकरणार्थे[९], क्वचिद् जिज्ञासायाम्[१०], क्वचिद् वाक्यालङ्कारे[११], क्वचित् प्रसिद्धौ[१२], क्वचिद् अनुनये[१३], क्वचिद् इवार्थे[१४], क्वचिद् निषेधे[१५], क्वचिच्च सम्भावनायामपि[१६]।

---

१. अथर्ववेदः–२०।२४।४।
२. ऋ० सं० २।३५।२, शतपथब्रा०–१।६।३।६।
३. ऋ० सं०–१।२४।१।
४. ऋ० सं०–१।२४।१०।
५. ऋ० सं०–८।२४।३।
६. ऋ० सं०–५।७४।१।
७. ऋ० सं०–१०।१०९।१।
८. संहितोपनिष ब्रा०–५।९।
९. आश्व० गृ० सूत्रम्–१।३।१।
१०. कुमारसम्भवम्–२।२६।
११. तदेव–४।१०।
१२. तदेव–४।१०।
१३. तदेव–४।२६।
१४. नैषधीयम्–४।१५।
१५. सिद्धहेमशब्दानु०–१।१।३१।
१६. सिद्धहेमशब्दानु०–१।१।३१।

काव्यभाषायां नाट्यभाषायाञ्चास्य वीप्सया प्रयोयोऽपि दृष्टिपथमायाति। तथा हि शाकुन्तले—**'न खलु न खलु वाणः सन्निपात्योऽयमस्मिन्[1]'** इति। वीप्सा ह्यर्थभूयस्त्वायैव क्रियते। समर्थयते च माधवभट्टः—

**अभ्यासादाह भूयांसमर्थं यस्ककुलोद्भवः।**
**अन्यमर्थं न तु ब्रूते व्याख्यातारो वदन्ति यम्[2]**॥ इति।

रूपविकासदृष्ट्या प्राकृतभाषायां विकारभूयस्त्वमवलोक्यतेऽस्मिन्। खलु > क्खु[3] > खु > खो > हु[4]—प्रभृतिशब्दा अस्योपादानकारणभूताः।

**(२५) च** [ = समुच्चये ]।

'च' इति निपातस्तु कामं संस्कृतवाङ्मयस्य प्राणभूतः। वस्तुतः 'च' इति निपातसत्तामस्वीकृत्य कामं संस्कृतभाषा पङ्गुतां व्रजति। एतादृशस्य भाषाप्राणभूतस्य निपातस्य महत्त्वमङ्गीकृत्यैव महामुनिपाणिनिना निपातसमूहस्य संज्ञैव 'चादयोऽसत्त्वे[5]' इति रूपेण कृता। सम्पूर्णस्य निपातवर्गस्यौपलाक्षणिकं बोधकत्वमस्मिन्नङ्गीकृतं वर्तते। एवं रूपदृष्ट्याऽणीयानयमर्थदृष्ट्या महीयान् दृश्यते। चादीनां प्रातिनिध्यं कुर्वताऽनेन तेऽसत्त्वपदलाञ्छिताः। महामुनिपाणिनेः प्राक्कालिके वाङ्मये 'चादिः' इति गणपाठ-बोधकस्य पदस्य चर्चाऽपि नाक्षिलक्ष्यीक्रियते। वैदिकवाङ्मये तु नाम-आख्यात-उपसर्ग-निपातरूपेण पदविभागोऽवलोक्यते। **'चादयः', 'प्रादयः', 'स्वरादयः', 'भूवादयः'** प्रभृतिगणबोधकानि लक्षणानि तु पाणिनिप्रणीतान्येव। अतोऽत्रैतद् वक्तुं पार्यते यन्निपातानां द्योतकताप्रख्यापने 'च' इति निपातोऽपि कारणतामेति।

अर्थविवर्तदृष्ट्याऽस्य महत्त्वमङ्गीकृतं शाब्दिकैः, कविभिश्च। शास्त्रकाराः प्रतिपादयन्ति यत्—'समुच्चय-अन्वाचय-इतरेतरयोग-समाहाराश्चस्यार्थाः[6]' इति। महाभाष्यकारोऽपि पुरस्करोति समुच्चयादीनर्थान्। तद्यथा—**'कः पुनश्चेन कृतोऽर्थः? समुच्चयः, अन्वाचयः, इतरेतरयोगः, समाहार इति[7]। समुच्चये—प्लक्षश्चेत्युक्ते गम्यते एतद्—न्यग्रोधश्चेति, तथा न्यग्रोधश्चेत्युक्ते गम्यते एतत्—प्लक्षश्चेति। अन्वाचये—प्लक्षश्चेत्युक्ते गम्यते एतत्—'सापेक्षोऽयं प्रयुज्यते' इति इतरेतरयोगे—प्लक्षश्च न्यग्रोधश्चेत्युक्ते गम्यते एतत्—'प्लक्षोऽपि न्यग्रोधसहायो न्यग्रोधोऽपि प्लक्ष-सहाय इति। प्लक्षश्च न्यग्रोधश्चेत्युक्ते समाहारेऽपि क्रियते—प्लक्षन्यग्रोधम्'** इति।

आचार्यचन्द्रकीर्तिनाऽपि व्याख्यातं—चार्थश्चतुर्विधत्वम्—समुच्चयः, अन्वाचयः, इतरेतरयोगः, समाहारश्च[8]।

---

१. अभिज्ञानशा०—१।१०।
२. ऋग्वेदानुक्रमणी—४।१।२६।
३. अशोक के अभिलेख—गिरनार—९।३७।
४. मृच्छकटिकम्—२।६।
५. अष्टाध्यायी—१।४।५७।
६. अष्टाध्यायी—२।२।२९। सिद्धान्तकौमुदीव्याख्या।
७. महाभाष्यम्—२।२।२९।
८. सारस्वतप्रक्रिया—१८।१५—चन्द्रकीर्तिव्याख्यायुता।

(क) कर्मद्वयस्यैकक्रियानिष्ठत्वं समुच्चयः। यदा परस्परनिरपेक्षाः पदार्था एकस्मिन् सम्बन्धिनि समुच्चीयन्ते, तदा समुच्चयः।

(ख) कर्मद्वयेऽपि प्रत्येकं क्रियाद्वयेन सम्बन्धोऽन्वाचयः। यदा त्वेकस्याप्राधान्यात्तदनुरोधेन त्वितरदन्वाचीयते तदाऽन्वाचयः।

(ग) पदद्वयेन द्वन्द्व-इतरेतरयोगः। परस्परसापेक्षयोरवयवप्राधान्येन एकक्रियायामन्वय इतरेतरयोगः।

(घ) बहूनां पदानां समवायः समाहारः। एते चस्यार्थाः। परस्परसापेक्षाणामेवावयवभेदतिरोधानेन संहतिरूपेणान्वयः समाहार इति।

तत्र चतुष्टयमध्ये समुच्चयान्वाचययोः समासो नास्तीति। तत्र—ईश्वरं गुरुञ्च भजस्वेत्यत्र कर्मद्वयस्यैकक्रियानिष्ठत्वे समुच्चये समासो न भवति। अत्र चकारो भजनक्रियाया ईश्वरेण गुरुणा च सम्बन्धं द्योतयतीति एकक्रियाभिसम्बन्धश्चार्थः। तथा हे बटो! भिक्षामट गाञ्चानयेति अटनक्रियाया भिक्षाकर्म, आनयनक्रियाया गौः कर्म। अत्र चकार एकस्य बटोः अटने आनयने च क्रियाद्वये सम्बन्धं द्योतयति।

एवमेकस्य कर्तुः कर्मद्वये क्रियाद्वयसम्बन्धेऽन्वाचये चार्थे समासो न भवति। परस्परसम्बन्धाद् नाम्नामन्वययोग्यत्वे सत्येव समासविधानम्। अत्र क्रियानिरोधाद् नाम्नां परस्परं सम्बन्धाभावात् समासो नास्तीत्यर्थः। यत ईश्वरस्य गुरोश्च युगपद् भजने सम्बन्धः। तथाऽन्वाचये भिक्षायामटनस्य गवामानयनस्य च परस्परसम्बन्धाभावाद् अन्वाचये समासो नास्ति।

इतरेतरयोगे, समाहारे चार्थे सम्बन्धाभावाद् द्वन्द्वः समासो भवति। अन्योऽन्यसापेक्षयोर्द्वयोर्योग एकक्रियाभिसम्बन्ध इतरेतरयोगः। बहूनां समुदायः समाहारः।

इत्थं शास्त्रीयाणामर्थानां विनियोगानन्तरं कविरूढिसम्भवा अर्था अपि प्रदर्श्यन्ते। कुत्रचिदयं निपातस्त्वर्थे व्यवहृतोऽवलोक्यते[१], कुत्रचिद् एवार्थे[२], कुत्रचिद् भविष्यदर्थे[३], कुत्रचित् त्वमर्थे[४], कुत्रचिद् विकल्पार्थे[५], कुत्रचित् समुच्चयार्थे[६], कुत्रचित् कर्तव्यबोधे[७], कुत्रचिद् उपमार्थे[८], कुत्रचित् शङ्कानिवृत्त्यर्थे[९], कुत्रचिच्छीघ्रार्थे[१०], कुत्रचिद् अन्वाचये[११], कुत्रचिच्चावधारणेऽपि[१२]।

निपातान्तराणां प्रसवेऽप्ययमुपादानकारणतां भजते। 'चन <च+न> चन[१३], चित् <च + ईत्> चित्[१४], चेत् <च + इत्> चेत्, नचेत् <न + च + इत्> नचेत्—प्रभृतयो निपाताः 'च' इति निपातोपादानमूलकाः।

---

१. ऋ० सं०–१।१७।२। २. तदेव–१।७३।८। ३. तदेव–६।५६।६।
४. तदेव–६।६७।८। ५. नाट्यशास्त्रम्–९।७६। ६. अथर्ववेदः–१७।३।२।
७. गीता–१।११। ८. नाट्यशास्त्रम्–१३।८०, २२।१२९।
९. सेश्वरमीमांसा–१।२।८। १०. रघुवंशम्–१०।६। ११. किरातार्जुनीयम्–२।२१।
१२. देशीनाममाला-परिशिष्टम्–३। १३. ऋ० सं०–१।१८।७, अथर्ववेदः–१।२०।४।
१४. ऋ० सं०–१।२३।४, अथर्ववेदः–३।३।२।

अशोकाभिलेखीयप्राकृतभाषायां तु 'च' इति निपातः 'चु[1]' इति रूपं गृह्णाति—च > चु—इति। प्राचीनभारोपीयभाषाभिरप्ययं संवदते[2]—च > अवे० च > प्रा० फारसी-चा > ग्री० चे > लै० क्वे > गाथि० चुह इति।

**(२६) ज्योक् [ =चिरार्थे ]।**

'ज्योक्' इति निपातः श्रुतिसाहित्यमात्रप्रसरः। आचार्ययास्कस्योपरिष्टादस्य व्यवहारः कात्स्न्येंन स्थगितः। सन्ति बहव एतादृशा निपाताः, येषां व्यवहाराः श्रुतिवाङ्मयपरिधावेवावलोक्यन्ते। वैदिकभाषायामेव सर्वथाऽवरुद्धप्रचारस्यास्य चर्चाऽपि महामुनिपाणिनिना चादिगणपाठे न कृता। वैदिकभाषायां चिरार्थे दीर्घकालार्थे वा रूढोऽयं निपातोऽर्थविकासदृशा, रूपविकासदृष्ट्या वा स्थाणुरिव दृश्यते।

एवं प्रायेण वैदिकनिर्वचनकारैरयमुपसर्गवद् व्यवहृतः। तत्तद्धातुभिः सहोपसर्गरूपेण व्यवहारोऽस्यावलोकयितुं शक्यते। कुत्रचिदयम्—√दृश [ = प्रेक्षणे[3] ] इति धातुना सहोपसर्गतामवाप्नोति, कुत्रचिद्√भू [ = सत्तायाम्[4] ] इति धातुना सह, कुत्रचिद् √जीव [ = प्राणधारणे[5] ] इत्यनेन सह, कुत्रचिद् √वस [ = निवासे[6] ] इत्यनेन सह, कुत्रचित् √कृ [ = करणे[7] ] इत्यनेन च सहास्योपसर्गता दृश्यते। उपसर्गरूपेण संश्लिष्यतोऽस्य प्रयोगनिष्पन्नानि आख्यातपदानि प्रदर्श्यन्ते—

(क) ज्योग्दृशे <ज्योक्+√दृश्> ज्योग्दृशे।

(ख) ज्योगभूवन् <ज्योक् + √भू> ज्योगभूवन्।

(ग) ज्योग्जीवति <ज्योक् + √जीव> ज्योग्जीवति।

(घ) ज्योग्वसेयुः <ज्योक्+√वस> ज्योग्वसेयुः।

(ङ) ज्योक्करत् <ज्योक् + √कृ> ज्योक्करत्।

सन्दर्भाणामेतेषां पर्यवेक्षणेनैतद् निर्धारयितुं पार्यते यदयं 'ज्योक्' इति निपातो वैदिक उपसर्ग आसीत्। मोनियरविलियम्समहोदयस्याप्ययमेव समयः[8]।

**(२७) तिरस् [ = तिरस्कारे ]।**

'तिरस्' इति निपातः प्रायेणोपसर्गवदेव व्यवह्रियमाणोऽवलोक्यते संस्कृतवाङ्मये। 'तिरः' 'तिरो' इति रूपेणाऽप्यस्य परामर्शो निभाल्यते वैदिकभाषायाम्। प्रातिशाख्यसूत्रसंज्ञके हस्तलिखितग्रन्थेऽप्यस्य 'तिरसः' व्याख्यानम् उपसर्गरूपेणैव कृतं

---

१. अशोक के अभिलेख—कालसी—६।२१। २. संस्कृत इंग्लिश डिक्श०—पृ० ३८०।

३. ऋ० सं०—१।२३।२१, ४।२५।४। ४. तदेव—२।३१।१०।

५. तदेव—१०।३७।७, शुक्लय०—३९।१९, शतपथब्रा०—१।८।३।१६, छान्दोग्योप—२।१२।२।

६. ऐतरेयब्रा०—३।७। ७. वाररुचनिरुक्तसमुच्चयः—२।२०।

८ संस्कृत इंग्लिश डिक्श—पृ० ४२८।

कात्यायनेन[1]। वस्तुतः 'तिरस्-पुरसोः' अर्थवैज्ञानिकं सापेक्ष्यमवलोक्यते। कुत्रचिदयं प्रकाशार्थे व्यवहृतो दृश्यते[2], कुत्रचिद् अनादरे[3], कुत्रचित् परिभवार्थे[4], कुत्रचित् तिरोधानेऽपि[5]।

एतेष्वेवार्थेषु ध्वनौ चास्य रूपविकासो द्रष्टुं शक्यते प्राचीनभारोपीयभाषासु। संस्कृतभाषायां तूपसर्गरूपेणास्य व्यवहारः—√कृ, √गम्, √धा, √भू—प्रभृतिभिर्धातुभिः कृतो वर्तते[6]। तत्तद् भाषाभिस्तुलाबोधकोऽस्य संवादोऽप्यवलोकनीयः—

(क) तिरस्[7] > प्रा० तिरख् > तिर्ल[8]; तिरश्च > प्रा० तिरिच्छि > तिलिश्चि पालि-तिरोक्ख, तिरस्कारः > प्रा० तिरक्कारो[9], तिरस्करिणी > देशी-टट्टइया > टाटी—इति।

(ख) तिरस् > अवे० तेरो > लै० ट्रन्स > गाथि० थ्रह > जर्म० दुरच् > हिब्रू-तर् > तैर्[10]—इति।

एवमस्य निपातस्य विकास उत्तरोत्तरमुपसर्गरूपेण सञ्जातः।

**(२८) तु [ = क्षिप्रार्थे ]।**

'तु' इति निपातो यद्यपि स्वरूपतस्तनुतरो दृश्यते, किन्तु निपातेतराणां सङ्घटनदृष्ट्याऽर्थविकासदृष्ट्या चाश्चर्यकरं शक्तिविस्फूर्जनं दृश्यतेऽस्मिन्। व्यवहारदृशा त्वस्य व्याप्तिः सम्पूर्णसंस्कृतवाङ्मये प्राप्यते। कविभिस्त्वयं पदे पदे छन्दःपरिपूरणाय व्यवहृतः। मन्ये यदनेन स्वरवर्णगणनया छन्दोनिर्माणसंसक्तमानसाः कवयो महदुपकृताः।

अर्थविवर्तदृष्ट्या त्वयं 'तु' इति निपातः कुत्रचित् क्षिप्रार्थे विनियुक्तोऽवलोक्यते[11], कुत्रचिद् भृशार्थे[12], कुत्रचिद् युक्तार्थे[13], कुत्रचिद् वैलक्षण्ये[14], कुत्रचिद् वारणार्थे[15],कुत्रचिद् यद्यपिशब्दार्थे[16], कुत्रचिद् अवच्छेदार्थे[17], कुत्रचिद् विशेषणार्थे[18], कुत्रचिच्च पादपूरणार्थेऽपि[19]।

---

१. प्रातिशाख्यसू०—सरस्वतीभवनग्रन्थालयहस्तलिखितग्रन्थः—ग्रन्थ सं०—२१३७।
२. ऋ० सं०—१।४६।६, ६।४८।६। ३. तदेव—७।४।२।
४. काव्यालङ्कारसूत्रम्—५।२।११। ५. अथर्ववेदः—९।३।१४।
६. ऋ० सं०—१।४०।६—स्कन्दस्वामिभाष्मम्।
७. प्राकृतशब्दानु० पृ० २२४, प्रबोधचन्द्रोदयम्—पृ० ४१।
देशीनाममाला—पृ० १७५, मालविकाग्निमित्रम्—पृ० ३३१।
८. ए कम्पैरेटिव डिक्श० आफ दी इण्डो-आर्यन लैंग्वेज—पृ० ३३१।
९. शाकुन्तलप्राकृतविवृतिः—पृ० ७, ले० नारायणः—हस्तलिखितग्रन्थः—ग्रन्थ सं०—४२२०८।
१०. संस्कृत इंग्लिश डिक्श०-पृ० ४४७। ११. ऋ० सं०-१।५।१। १२. तदेव—६।३०।५।
१३ महाभारतम्—शान्तिप०—८२।३२। १४. गीता—१।७। १५. तदेव—२।१६।
१६. तदेव—२।१४। १७. तदेव—२।३९। १८. सिद्धहेमशब्दानु०—१।१।३१।
१९. तदेव—१।१।३१।

वस्तुतो रूपतोऽणीयस्यस्मिन्नर्थतो महीयस्त्वशक्तिरपोह्यते। सगोत्रीयाणां निपातानां प्रसवेऽपि किलास्यैतिहासिको विकासो भाषायाः श्रियं संवर्धयति। 'त्वा <तु+ आ> त्वा, त्वाव <तु + वाव> त्वाव, त्वः <तु + व> त्वः, त्वावत् <तु + आवत्> त्वावत्, त्वै <तु + वैं> त्वै, तुवैं <तु + वै> तुवै—प्रभृतयो रूपप्रतिमा अस्योपादान-कारणभूताः। निपातयोरासञ्जनेन लब्धस्वरूपा एता रूपप्रतिमा अर्थान्तरमपि भजन्ति। तथा हि ऋग्वेदे—'अनामयित्नुभ्यां त्वा ताभ्यां त्वोप स्पृशामसि[1]' इति। व्याक्रियते च मन्त्रोऽयं सायणाचार्येण—'त्वा इति पुनरुक्तिः वितर्केऽर्थे' इति।

'त्वा' इति निपातस्य व्युत्पत्तिस्तु सायणाचार्येणैवं[2] व्यधायि—'त्वा इति निपात-द्वयम्। तु—वै इति पदद्वयम्। 'तु' शब्दस्य उकारः 'वै' शब्दे परतो याजुषा लुम्पन्ति। तु + वै > त्वै > त्वा = अनुमितिरित्यर्थः' इति। सायणाचार्यस्य विश्लेषणमिदं न रोचते। स स्वीकरोति यत् 'वै' निपातस्य 'ऐ' इति स्वरं याजुषा लुम्पन्ति, किन्तु 'त्वा' इति निपातद्वयसमाहारे न हि 'वै' इति निपातो घटकतया परामृष्टः, अपि तु 'वा' इति। एवं 'तु + वा > तुवा > त्वा' इति निरुक्तिः साधु प्रतिभाति। भट्टभास्कर-मिश्रस्यायमेव समयः[3]।

एवमेव 'त्वाव' इति निपातोऽपि निपातद्वयसमाहारमूलकः—'तु + वाव > तु वाव > त्वाव = प्रतिज्ञायाम्' इत्यर्थः। 'वाव' इति निपातस्तु प्रसिद्ध्यर्थे प्रयुक्त एव श्रीमद्भागवते—'**यर्हि वाव ह राजन् स राजपुत्रः प्रियव्रतः**[4]' इति। व्याख्याति च श्लोकममुं श्रीधराचार्यः—"**वावेति निपातः प्रसिद्ध्यादौ**[5]" इति। प्रमाणेनानेन निश्चाययितुं शक्यते यत् 'त्वाव <तु+वाव> त्वाव' इति निपातो निपातद्वययोराश्लेषणेन प्रसूत इति। 'त्वावत्' इति निपातोऽपि निपातद्वय—तु + आवत् > त्वावत् = अनुमितौ—सङ्घातजन्यः। 'आवत्' इति निपातस्तु संस्कृतभाषायां प्रसिद्ध एव। तथाहि कैयटः—'आवदिति निपातः प्रैषार्थे' इति। 'त्वा' इति निपातनिरुक्तिप्रसङ्गे सायणेन या व्युत्पत्तिः प्रदर्शिता, सा तु वस्तुतः 'त्वै <तु + वैं> तुवै > त्वै' इति निपातस्यैव। यतो हि 'तुवै' इति निपातस्यापि पृथक् स्थितिरवलोक्यते। तथा च हेमचन्द्राचार्यः—'तुवै इति निपातो वितर्के[6]' इति।

इत्थम् 'तु' इति निपात एव—वर्णागम-वर्णविपर्यय-वर्णविकार-वर्णनाश-अर्थातिशययोग—प्रभृतीनि नैरुक्तानि कार्याण्यनुभवन् विविधा रूपप्रतिमा निर्मापयति।

---

१. ऋ० सं०—१०।१३८।७।
२. शतपथब्रा०—१०।६।१।४।
३. तै० सं०—३।३।१०।
४. भागवतम्—५।१।६, ५।१।२३।
५. प्रदीपः—६।१।४९।
६. सिद्धहेमशब्दानु०—१।१।३१।

**(२९) न > नञ् [ = निषेधार्थे ]।**

'न' इति निपातः सर्वासु भारोपीयार्यभाषासु समानरूपेण व्यवह्रियमाणोऽवलोक्यते। संस्कृतभाषायां त्वस्य व्यवहारे विविधा विधय ऊरीक्रियन्ते शाब्दिकैः। धारावाहिकं किमपि वाक्यार्थं प्रतियोगिदिशि परावर्तनेऽयमेकाक्येव भाषाकलेवरे निषेधपक्षमलङ्करोति। स्वरूपतो लघीयसोऽस्यार्थतो महीयस्त्वं सर्वैर्भाषाशास्त्रचिन्तकैरङ्गीकृतम्। ग्रीकभाषानिपातव्याख्यात्रा डेनिस्टनमहानुभावेनोक्तं यत्—**'भाषाकलेवरे नञा निषेधाधिकारो धार्यते[1]'** इति।

नञो व्यवहारस्तु लोके प्रायेण निषेधार्थ एव क्रियते बोध्यते च, किन्तु ऐतिहासिकविकासक्रमानुसन्धानेनायं पुरुरूपेष्वर्थेषु चोपलभ्यते। अत एव पूर्णसरस्वतीसूरिणोक्तं यत्—

**प्रतिषेधे च सत्तायामन्यत्वे सदृशेऽपि च।**
**कुत्साल्पविरहार्थेषु विपक्षे चापि नञ् स्मृतः[2]॥** इति।

श्लोकेऽस्मिन् परिगणिता अर्थास्त्वौपलाक्षणिकाः। वैदिकवाङ्मयान्वेषणेनायमतिरिक्तेषु बहुष्वर्थेषूपलभ्यते। अस्य प्रामुख्येण व्यवहारस्तु द्विविध उपलभ्यते वैदिकसाहित्ये—उपामार्थीयत्वेन, निषेधार्थीयत्वेन च। सभाजयति स्कन्दस्वामी—'न शब्दोऽत्र सर्वत्रोपरिष्टादुपमार्थीयः। उपमार्थीयत्वाच्च अस्त्युपमानस्य सम्प्रत्यर्थे प्रयोगः' (या० ७।३१) इति पदपूरणः समुच्चयार्थो वा। 'तं व इन्द्रं न सुक्रतुं वरुणमिव मायिनम्' (ऋ० सं० ६।४८।१४) इति मन्त्रे वरुणमिव = वरुणञ्च मायिनम्। एवमत्र तृचे नशब्देवशब्दयोः पदपूरणत्वात् समुच्चयार्थत्वाद्वा इन्द्रादीनां देवतात्वम्। अथवा उपमार्थनशब्देवशब्दश्रुतेरिन्द्रादयोऽत्रोपमानभूताः'[3] इति।

सायणाचार्येणापि प्रत्यपादि—'नशब्दो लोके प्रतिषेधार्थ एव, स्वाध्याये तु प्रतिषेधार्थ उपमार्थश्चेति द्विविधः। येन पदेनान्वीयते तस्मात् पूर्वं प्रयुज्यमानः प्रतिषेधार्थः, उपरिष्टात् प्रयुज्यमान उपमार्थः। तथा च यास्क उदाहरति—'उभयमन्वध्यायं नेन्द्रं देवममंसतेति प्रतिषेधार्थीयः पुरस्तादुपचारस्तस्य यत्प्रतिषेधति। दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते[4] (नि० १।४)' इति। अत्रोपमेयवाचिनो द्युशब्दस्यापि प्रयुक्तत्वाद् उपमार्थः स्वीकृतः इति।

माधवभट्टेनापि किलास्योपमानार्थत्वं निषेधार्थत्वञ्चोपवर्णितम्[5]—

**बहुष्वर्थेषु दृष्टो नञ् निषेधेऽथ समुच्चये।**
**सम्प्रत्यर्थं इवार्थे च पूरणेऽपि च दृश्यते॥**

---

१. दि ग्रीक पार्टिकल्स-पृ० ३०५।
२. मालतीमाधवम्–४।४८–पूर्णसरस्वतीव्याख्या।
३. ऋ० सं० ६।४८।१४।
४. तदेव–१।८।५–सायणभाष्यम्।
५. ऋग्वेदानु०–३।३।१२–१५।

**प्रयुज्यते न वाक्यादावुपमार्थं इति स्थितिः ।**
**उपमायां निषेधे च दृश्यन्ते बहवो नञः ।**
**तथा समुच्चयार्थीया अग्निमुषान्न जरते ॥**
**तस्मिन् त्साकं त्रिशता न होता मनुष्यो न दक्षः ।**
**अश्वे न चित्रे अरुषि सम्प्रत्यर्थं नञं विदुः ॥**
**अस्मै सीमाय च तथा सन्ति चान्येऽपि तादृशाः ।**
**विपाञ्ज्योतींषि बिभ्रते नकारस्तत्र पूरणः ॥** इति ।

एवं सन्दर्भाणामेतेषां पर्यवेक्षणेन निष्कृष्यते यद् येन पदेन नकारोऽन्वीयते, तस्मात् प्राग् यद्यस्य व्यवहारो विहितस्तत्र किलायं निषेधार्थीयः । यत्र तु येन पदेनायमन्वीयते तस्मात् पश्चाद् यद्यस्य स्थितिर्भवेत्, तत्रायमुपमार्थीय इति । अतोऽन्वीयमानेन पदेन प्राक्प्रयुक्तोऽयमुपसर्गकोटिमप्यारोहति । तदन्यत्र निपातकोटिम् । अत एव चन्द्रकीर्तिनाऽप्युक्तम्—'**अथ केष्वर्थेषु नञ् प्रयुज्यते ? तस्मादन्यः तदन्यः, अश्वादन्य इति । तेन विरुद्धस्तद्विरुद्धः, धर्माद् विरुद्ध इति । तस्याभावस्तदभावः, तदभाव इति ग्रहणस्याभावः । एष्वर्थेषु पूर्वमुपसर्गरूपो नञ् भवति । तस्मिन् नञि पूर्वपदे तत्पुरुषसमासो भवतीत्यर्थः**[१]' इति ।

निष्कर्षरूपेणात्र कथयितुं पार्यते यदस्य प्रयोगो द्विविधो दृश्यते—उपसर्गरूपेण निपातरूपेण च । यत्र निपातत्वेनायं परामृश्यते, तत्रोपमार्थीयोऽर्थाद् इवार्थकः, यत्र तु नामोपसर्गत्वेन परामृश्यते, तत्र तु निषेधार्थीय इति । आचार्ययास्कमन्वस्योपमार्थीयः स्वरूपः स्थगित इव प्रतिभाति ।

अर्थविकासदृष्ट्याऽपि महामुनिपाणिनेः पश्चादस्य पन्थाः सङ्कुचित इव लक्ष्यते । वैदिकवाङ्मये त्वस्य चित्रात्मका अर्थाः कामं वैदिकसाहित्यस्य समृद्धिं द्योतयन्ति । एवं कुत्रचिदयं निपात उपमार्थे प्रयुक्तः[२], कुत्रचिद् वारणार्थे[३], कुत्रचिच्चार्थे[४], कुत्रचिद् अतिशयार्थे[५], कुत्रचित् सम्प्रत्यर्थे[६], कुत्रचित् पूरणार्थे[७], कुत्रचिद् आनर्थक्ये[८], कुत्रचिद् विपक्षेऽर्थे[९], कुत्रचिद् वितर्केऽर्थे[१०], कुत्रचिद् अप्यर्थे[११], कुत्रचिद् अङ्गीकरणार्थे[१२] च ।

यत्र तु वीप्सयाऽस्य व्यवहारो विधीयते, तत्र तु निषिद्धोऽर्थप्रवाहः पुनरनेन निषिध्यते, अर्थात् पुनः प्रकृतमर्थं गमयति ।

---

१. सारस्वतप्रक्रिया–१८।१४–चन्द्रकीर्तिव्याख्यायुता ।
२. ऋ० सं०–१।५।१५, ६।४७।१४, अथर्ववे० ४।२६।७, शतपथब्रा०–१४।२।५।१६ ।
३. ऋ० सं०–१।४१।९ । ४. तदेव–१।२।७, ६।२।१, ६।३।३, ६।२०।७ ।
५. तदेव–४।२३।४ । ६. तदेव–५।६४।७, ६।४।३, ८।२०।२० ।
७. तदेव–१०।८९।१९ । ८. तदेव–१०।१०५।५ । ९. मालतीमा०–९।४८ ।
१०. प्रदीपः–५।२।३९ । ११. ऋ० सं०–१।१२७।१०, १।१९०।२ ।
१२. महाभारतम्–उद्योगप०–१४२।२–अर्जुनमिश्रटीका ।

तथा च दृष्टान्तम्–**'अथवा काममनुरूपमस्या वयसो वल्कलं न पुनरलङ्कारश्रियं न पुष्यति[१]'** इति । शाकुन्तलवाक्यमिदं व्याचक्षाणेन श्रीनिवासाचार्येण व्याख्यातं यत्—**'न पुष्यति न = न वर्धयति न, किन्तु वर्धयत्येवेत्यर्थः। नञ्द्वयं सम्भाव्यनिदेश-निवर्तने द्वौ प्रतिषेधावित्याह वामनः'** इति । नैषधेऽप्येतादृशो व्यवहारोऽवलोक्यते नञः । तद्यथा—

**ममासनार्धे भव मण्डनं न न प्रिये ! मदुत्सङ्गविभूषणं भव ।**
**अहं भ्रमादालपमङ्ग ! मृष्यतां विना ममोरः कतमत्तवासनम्[२] ॥** इति ।

व्याख्याति च श्लोकममुं नारायणपण्डितः—**'न न = भ्रमाद् भ्रमाद् इति च संभ्रमे द्विरुक्तिः'** इति । मल्लिनाथो व्याख्याति यत्—**'चापले द्विरुक्तिः'** इति । वस्तुतो नञ्सदृशानां निपातानां वीप्सा द्विरुक्तिर्वा मनोभावमूलिका भवति । तथा हि सङ्केतयति जयचन्द्रः—

**विवादे विस्मये हर्षे खेदे दैन्येऽवधारणे ।**
**प्रसादने सम्भ्रमे वा द्विस्त्रिरुक्तिर्न दुष्यति[३]** ॥ इति ।

एवमेव शन्तनु[४]-राजाराम[५]-चतुर्धर[६]-सर्वानन्दप्रभृतयोऽपि[७] वदन्ति यत्—'शोकादिना ससम्भ्रमं द्विस्त्रिर्वाऽभिधानं भवत्येव' इति । नञोऽभ्यासयुक्तो व्यवहारस्त्व-र्वाक्कालिकः प्रतिभाति ।

रूपविकासदृष्ट्या निपातान्तराणां प्रसवदृष्ट्याऽपि चास्योपादानत्वमुपलभ्यते । तद्यथा—नकि: < न + कि: > नकिः, नचेत् < न + च + इत् > नचेत्, नेत् < न + इत् > नेत्[८], ननु < न + नु > ननु, नवा < न + वा > नवा, नवै < न + वै > नवै, नह < न + ह > नह, नहवै < न + ह + वै > नहवै, नहि < न + हि > नहि, नेमम् < न + इमम् > नेमम्, नो < न + उ > नो, नोहि < न + उ + हि > नोहि–प्रभृतयो निपातप्रतिमा 'नञ्' निपातस्यैवोपादनकारणभूताः । मन्ये यदस्मिन् 'ञ'-कारानुबन्धस्तु पाणिनिनोपश्लिष्टः ।

प्राचीनयूरोपीयार्यभाषाभिरस्य संवादोऽवलोक्यते[९]—न > अवे० नं > ग्री० उन > लै० ने > ऐंग्लोसै० ने > इंग्लिश–नो इति ।

**(३०) नाम** [ = सम्भावनायाम् ] ।

'नाम इति निपातो वैदिकलौकिकोभयभाषालब्धप्रसरः । समानरूपेणायं व्यवह्रियते श्रुतिस्मृतिसाहित्ये । अर्थदृष्ट्यैवास्य विकासोऽवलोक्यते संस्कृतभाषायाम् । रूपदृष्ट्या त्वयं समवस्थ एवावलोक्यते । प्राकृतभाषायां त्वस्य रूपविकासोऽपि दृश्यते । एवं स्वरूपतोऽव्ययवानयमर्थतस्तु व्ययवान् दृश्यते ।

---

१. अभिज्ञानशा०–१, पृ० ७३ ।
२. नैषधीयम्–९।११४ ।
३. कुन्दमाला–१, पृ० ७–जयचन्द्रसञ्जीविनीव्याख्या ।
४. दुर्गासप्तशती–५।१२–शान्तनवी व्याख्या ।
५. तदेव–दंशोद्धारव्याख्या ।
६. तदेव–५।१२–चतुर्धरीव्याख्या ।
७. नामलिङ्गानु०–१।६।१२ ।
८. तुलनीयम्–अवेस्ता–नो इव सं० नेत् ।
९. संस्कृत इंग्लिश डिक्श०–पृ० ५२३ ।

कुत्रचिदयं क्रोधार्थे विनियुक्तोऽवलोक्यते[1], कुत्रचित् कुत्सायाम्[2], कुत्रचिद् अलीके[3], कुत्रचित् प्रसिद्धौ[4], कुत्रचित् शिरश्चालने[5], कुत्रचिद् उपहासे[6], कुत्रचिद् आश्चर्ये[7], कुत्रचिच्च प्राकाश्येऽपि[8]। निपातान्तराणां सङ्घटनेऽप्यस्य प्रवृत्तिर्दृश्यते। यदि नाम <यदि + नाम> यदि नाम, कथं नाम <कथम्+नाम> कथं नाम, स्यान्नाम <स्यात्+नाम> स्यान्नाम, चेन्नाम <च+इत्+नाम> चेन्नाम–प्रभृतयो निपाताः 'नाम' इति निपातसमाहारभूताः।

रूपविकासदृष्ट्या प्राकृतभाषायामस्य[9] विकृतिप्राप्तानि रूपाण्युपलभ्यन्ते। तथा च—नाम > णम > णम् > णइम्[10]—इति।

**(३१) नु [ = नवशब्दार्थे ]।**

'नु' इति निपातोऽपि विविधेषु रूपेषु विभिन्नेष्वर्थेषु च व्यवहृतोऽवलोक्यते संस्कृतभाषायाम्। अद्यतनार्थवाचकत्वेनास्य प्रातिपदिकत्वमप्युपलब्धुं शक्यते। 'पुराणम्-नवम्' इत्युभावपि कालवाचकौ शब्दावन्योन्यसापेक्षौ स्तः। अत एव महाकविकालिदासेनापि किलैकस्मिन्नेव श्लोक इमौ—पुराणम्-नवम्-इति शब्दौ समाविष्टौ—

**पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्[11]।**
**सन्तः परीक्ष्यान्यतरद् भजन्ते मूढः परप्रत्ययनेयबुद्धिः॥** इति।

एवं संस्कृतवाङ्मयस्यैतिहासिकानुसन्धानेनैतत् कथयितुं शक्यते यत् कालसातत्यवाचकाः, दिग्वाचकाः, सङ्ख्यावाचकाः, चिरसत्तावबोधकाश्च शब्दा निपातमूलका इति। तथा च 'इतिहासः <इति+ह+आस> इतिहासः' इति शब्द एव त्रयाणां निपातानां समाहारोऽवलोक्यते। एवमेव—'पुरस्तात्', 'पश्चात्', 'उदक्तात्', 'अधरात्', 'प्राक्', 'अपाक्', 'अवाक्', 'परावतः', 'निवतः', 'उद्वतः', 'प्रवतः', 'प्रत्नम्', प्रभृतयो दिक्कालवाचकाः शब्दा निपातानाधारीकृत्यैवात्मानं लब्धवन्तः।

'पुराणम्-नवम्' इत्यनयोः सापेक्ष्यं पुरस्कृत्यैवाह सायणः—**पुराणम्=पूर्वक्रमागतम्। पुराशब्दात् शैषिकार्थे 'सायंचिरम्' इति ट्युप्रत्ययः। 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (पा०४।३।१०५) इति निपातनात्तुडभावः[12]'** इति।

'नवम्' इति पदस्य निरुक्तिरपि अद्यतनकालबोधकत्वेन कर्तुं शक्यते। केवलो 'नु' इति निपात एवाद्यतनकालवाचकत्वेन विनियुक्तो दृश्यते। तथा हि सायणाचार्यः—**'नु=अद्य, नः=अस्माकं रथम्, अनुस्थाति=आनुगुण्येनाधितिष्ठतु'[13]**

---

१. अभिज्ञानशा०—५।२०। २. तदेव—५, पृ० १७६। ३. तदेव—६।१०।
४. कुमारसम्भवम्—१।१, मेघसंदेशः—१।७। ५. नैषधीयम्—३।२५। ६. तदेव—७।७१।
७. तदेव—८।७०। ८. सिद्धहेमशब्दानु०—१।१।३१। ९. अभिज्ञानशा०—५, पृ० १७६।
१०. प्राकृतमणिदीपः—२।१।४०, गउडवहो—७१३, ८५५।
११. मालविकाग्निमित्रम् – १।२। १२. ऋ० सं०—३।४५।९।
१३. तदेव – २।३२।३, शतपथब्रा० –११।५।४।१३।

इति । 'नु' इति निपातः 'पुरा' पर्यायत्वेनापि भट्टभास्करेण व्याख्यातः–**'नु इति 'पुराणवचनः । पुराणोऽयं तव स्वभावः**[1]' इति ।

इत्थमैतिहासिकसंस्रवे कालबोधकोऽयं निपातो रूपविकासदृष्ट्याऽर्थविवर्तदृष्ट्या चाभिधानिकवैचित्र्याणि धारयति । कुत्रचिदयं चार्थे प्रयुक्तोऽवलोक्यते[2], कुत्रचित् क्षिप्रार्थे[3], कुत्रचिद् अद्यशब्दार्थे[4], कुत्रचित् पूरणार्थे[5], कुत्रचिद् नवशब्दार्थे[6], कुत्रचिद् निषेधार्थे[7], कुत्रचित् पराशब्दार्थे[8], कुत्रचिद् अवधारणार्थे[9], कुत्रचिद् वितर्कार्थे[10], कुत्रचिद् उपमार्थे[11], कुत्रचिद् हिशब्दार्थे[12], कुत्रचित् प्रश्ने[13], कुत्रचिद् निश्चये[14], कुत्रचित् सत्यार्थे[15], कुत्रचिद् अनुमितौ[16], कुत्रचिच्च समाप्तावपि[17] ।

निपातस्यास्यार्थविवर्तं स्मारं स्मारं माधवभट्टोऽपि प्रतिपादयति यत्— नु शब्दस्यार्थः प्रयोगश्च बहुविधमुपलभ्यते—

**नुशब्दः क्षिप्रवचनो वाक्यादावपि दृश्यते ।**
**नूमर्तो दयत इति मध्ये प्रश्नस्य वाचकः**[18] ॥ इति ।

अर्थविकासदृशाऽत्युर्वरस्यास्य 'नु' इति निपातस्य रूपविकासो भारोपीयार्यभाषाभिः संवादकश्चापि बहुविध उपलभ्यते । नुकम् < नु + कम् > नुकम्[19], नूचित् < नु + चित् > नूचित्[20], ननु < न + नु > ननु, नूनम् < नु + न > नूनम्[21], न्वा < नु+वा > न्वा[22], न्वाव < नु + वाव > न्वाव[23], न्वावत् < नु + आवत् > न्वावत्, न्वै < नु + वै > न्वै, नुवै < नु + वै > नुवै प्रभृतयो निपाताः 'नु' निपातोपादानमूलकाः । एवम्–नवम् < नु + अम् > नवम्[24], नवः प्रभृतिलिङ्ग-सङ्ख्या-विभक्तिजुषाः शब्दा अपि 'नु' इति

---

१. तै० सं०–१।४।२२ । २. ऋ० सं०–१।८।५, १०।५९।२, छान्दोग्यब्रा०–१।२।३ ।
३. ऋ० सं०–१।१७।८, ६।५१।१२, भागवतपु०–११।१०।७ ।
४. ऋ० सं०–२।३२।३, शतपथब्रा०–११।५।४।१३ । ५. ऋ० सं०–६।७।१ ।
६. तदेव–६।३७।३ । ७. तदेव–६।४८।१६ । ८. तदेव–६।३०।३ ।
९. तदेव–१०।१०।५ ।
१०. अथर्ववेदः–१२४।१।१, कुमारसं०–१।४५, नैषधीयम्–२।१०२ ।
११. शतपथब्रा०–११।४।२।४, नैषधीयम्–२।१०२ ।
१२ छान्दोग्यब्रा०–१।२।३ । १३. रघुवंशम्–१५।६९ ।
१४. गीता–२।३६, मृच्छक०–१०, पृ० २४८ । १५. ऋ० सं०–५।४।२ ।
१६. सि० हेमशब्दानु०–१।१।३१ । १७. तदेव–१।१।३१ ।
१८ ऋग्वेदानुक्रमणी–३।३।२० ।
१९. शुक्लयजुर्वेदः–५।१८, तै० सं०–१।२।१३ ।
२.० ऋ० सं०–१।३९।४, ६।६६।५, ७।२०।६ ।
२१. ऋ० सं०–१।१३।६, श० ब्रा०–१।७।४।३ । २२. सिद्धहेमशब्दानु०–१।१।३१ ।
२३. तदेव–१।१।३१ । २४. मालविकाग्निमित्रम्–१।२ ।

निपातजन्या बोद्धव्याः। प्राकृतभाषायामस्य व्यवहारस्तु ‘णु’ इति रूपेणोपलभ्यते—‘नु > णु[१], नूनम् > णुण[२]’ इति।

एवमेव प्राचीनार्वाचीनभारोपीयार्यभाषाभिरस्य ‘नु’ इति निपातस्य, तज्जन्य-नव-नव्य-नूतन-प्रभृतिशब्दानाञ्च संवादोऽवलोकनीयः—

(क) नु > अवे० नु > नुई > ग्री० नून > लै० नुच > गोथि० नु > प्रा० नार्शन्तु > डेनिश-नु > स्विडिश—नु > प्रा० जर्मन नू > डच-नु > चर्चस्ला० नीने > प्रा० इंग्लि० नु > नवइंग्लि० नाउ[३]—इति।

(ख) नवम् > अवे० नव > ग्री० नियोस् > लै० नोवुस् > इटालियन-नुववो > गोथि० निउजिस् > चर्चस्लावो० नोव > लिथु० नाउजस् > रसियन—नोविज > प्रा० इंग्लि० नूवे > मध्यइंग्लि० नेवे > नवइंग्लि० निउ—इति। एवमस्य तत्तद्भाषाभिस्तुलाबोधकः संवाद आर्यजातेः कौटुम्बिकसामीप्यमूलकः प्रतिभाति।

**(३२) पुरा < पुरस् [ = ऐतिह्ये ]।**

‘पुरा’ इति पुराणवाचकस्य, ऐतिह्यवाचकस्य वा निपातस्य विकासः ‘पुरस्’ इति निपातादेव सञ्जात इत्यपि कल्पयितुं प्रभवामः। यतो हि वैदिकभाषायामुपसर्गाणाम्, निपातानाञ्चादिमस्यान्तिमस्य चाक्षरस्य वर्णस्य वा लोपः स्वाभाविकतया दृष्टचरः। सैव लोपपरम्परा ‘परस् > परा’ इत्यनयोरपि सम्भाव्यते। ‘पुरा < पुरस्’ इत्यत्र तु दीर्घरूपो वर्णोपजनः कल्प्यते। वस्तुत एकस्यैव मौलिकस्य ‘पुरस्’ इति निपातस्य—पुरस् > पुरा > परस् > परा इति विपरिणामोऽभूदिति प्रतिभाति।

‘पुरस्’ इत्ययं निपातो विशेषतो वैदिकभाषायामुपसर्गरूपेणापि व्यवहृतोऽवलोक्यते। एवम्—√कृ, √गम्, √धा, √मुच्—प्रभृतिभिरस्याश्लेष उपसर्गरूपेणैव सङ्घटते। सभाजयति च भट्टभास्करमिश्रः—**‘पुरश्शब्दस्य उपसर्गवद्भावात् ‘आतश्चोपसर्गे इत्यङ्[४]’** । इति।

‘पुरस्’ इति निपातो वैदिकसाहित्ये प्रकृतिरूपेण प्रत्ययानुयोग्यपि कृतो वर्तते—पुरस् + तात् > पुरस्तात् = पूर्वस्यां दिशि इत्यर्थः[५]। एवंभूतोऽयं निपातः कुत्रचिद् ऐतिह्यार्थे व्यवहृतोऽवलोक्यते[६], कुत्रचित् तदानींशब्दार्थे[७], कुत्रचिद् भविष्यदर्थे[८], कुत्रचित् कालत्रयोपलक्षणेऽपि[९] च।

---

१. कर्पूरमञ्जरी–२।२३, मृच्छक० १०, पृ० २८४। २. प्राकृतमणिदीपः–१।२।१५।
३. विश्वसंस्कृतम्–पृ० ८३–८४–विश्वसंस्कृतसम्मेलनाङ्कः–१९७२।
४. तै० सं –७।४।१–भट्टभास्करभाष्यम्। ५. ऋ० सं०–१०।१३९।१।
६. तदेव–३।५४।९। ७. तदेव–६।६५।४।
८. शतपथब्रा०–११।५।३।८, मेघसन्देशः—२।१८।
९. गीता–२।२०–व्यङ्कटवृत्तियुता।

पालि-प्राकृत-अपभ्रंशप्रभृतिभाषास्वप्यस्य पुरुरूपो विकासोऽवलोक्यते[1]। यद्यथा—

(क)—पुरस् > प्रा० पुरो > पुलो पा० > पुलो > पुले—इति।

(ख)—अवेस्ता-ग्रीक-गाथिक-प्रभृतिभाषाभिरयं[2] संवदते-पुरस् > अवे० पुरो > ग्री० प्लोअस् > लै० प्रिस्—इति।

**(३३) मा > माङ्** [ = वारणे ]।

'मा' इति निपातः कृत्स्ने संस्कृतसाहित्ये परामृष्टोऽवलोक्यते। अर्थविकास-दृष्ट्यायं नातिमहत्त्वपूर्णः, किन्तु रूपविकासदृष्ट्याऽस्य बहुत्रोपादानत्वं दृश्यते। प्रायेण 'नञ्-माङ्' इत्युभावपि निपातौ समानार्थाविति मन्यन्ते संस्कृतभाषाऽध्येतारः; किन्तु वैदिकवाङ्मयस्य प्राथमिके सभारम्भ एवास्यार्थमूर्तेः प्रतिष्ठापना सञ्जाता। 'नञ्' इति निपातस्य मौलिकोऽर्थस्तु निषेधः, 'मा > माङ्' इत्यस्य मौलिकोऽर्थस्तु वारणम् इति। एवं निषेधो हि नाम प्रसक्तस्य विधेः स्थगनम्, वारणं हि नामाप्रसक्तस्य विधेर्नि-वारणम्। 'मा' इति निपातस्य प्रयोगस्तु विधेयार्थस्य स्थगनाय क्रियते, अतोऽस्योप-सर्गत्वमपि सिद्ध्यति। समर्थयते च सायणाचार्यः—**'अत्र माङ् श्रवणाद् भाविनी क्रिया सम्बध्यते। मा प्रापत् = हिंसितुं मैव प्राप्नोतु[3]'** इति। वररुचि[4]-उव्वट[5]-स्कन्द-स्वामिप्रभृतीनामप्ययमेव समयः[6]।

विशेषतो वैदिकसाहित्ये लुङ्-लङ्-लोडादिलकारनिष्पन्नेष्वाख्यातेषु 'माङ्' निपातयोगे क्वचिद् अडादीनामभावेन[7], क्वचिद् माङ्योगेऽट्स्थान उपसर्गाणां योगेन[8], क्वचिद् 'अट्-माङ्' उभयोरभावे अट्स्थाने केवलमुपसर्गस्याख्यानपूर्वं संयोजनेन[9], क्वचिद् माङ्-योगेऽप्यडादीनामागमेन[10], क्वचिच्च लुङ्-लङ्लकारयोः माङभावेऽप्यडादीनामभावेन[11] च कल्प्यते यदयं माङ्निपात उपसर्ग इवाख्यातमध्या-हृत्य तेन सह सम्बध्यमानश्च दृश्यते[12]। यथोपसर्गा आख्यातप्रयोगाभाव आख्याता-नध्याहरन्ति, आख्यातव्यवहितप्रयुक्ताः सन्त आख्यातेन सह संयुज्यमानाः, अन्वीय-मानाश्चापि दृश्यन्ते[13], तद्वदेव माङ्निपातोऽपि। अस्य 'मा > माङ्' इति निपातस्यैवं-विधानां चित्रात्मकप्रयोगाणामनुसन्धानेनैतद् वक्तुं पार्यते यत्—**'न माङ्योगे[14]'** इति

---

१. कर्पूरमञ्जरी—४।१९, सेतुबन्धकाव्यम्—८।४०, भविसयत्तकहा—५, अशोक के अभिलेख—शाहबाजगढ़ी—१।२।

२. संस्कृत इङ्गलिश डिक्श०—पृ० ६३४। ३. अथर्ववेदः—१।३०।१।

४. वाररुचनिरुक्तसमुच्चयः—२।१०। ५. शुक्लयजुर्वेदः—३।४६।

६. ऋ० सं०—१०।१८।४। ७. तदेव—१०।१८।४। ८. शुक्लयजुर्वेदः—३।२१।

९. ऋ० सं०—१।३९।९, १०।२६।७, छा० ब्रा० १।५।१३।

१०. तदेव—२।७।१, वाल्मीकिरा—१।२।१५, महाभा० १।३७।७।

११. ऋ० सं० ६।४७।५। १२. शुक्लयजुर्वेदः—३।४६।

१३. भागवतम्—८।२।२७। १४. अष्टाध्यायी—६।४।७४।

सूत्रस्य प्रणयनं भगवता पाणिनिना वैदिकव्यवहाराणां प्रभावेणैव कृतम्। सन्ति अष्टाध्याय्यां बहूनि सूत्राणि येषां प्रणयनं श्रुतिवाङ्मयप्रभावादेव सञ्जातम्।

'मा' इति वैदिकनिपातस्य प्रयोगस्त्वर्थभूयस्त्वायाभ्यस्य बहुत्रोपलभ्यते। अर्थभूयस्त्वायैव प्रायेण शब्दा अभ्यस्यन्ते। तथा चाह यास्काचार्यः—**'अभ्यासे भूयांसमर्थं मन्यन्ते। यथाहो दर्शनीयाहो दर्शनीयेति। तत्परुच्छेपस्य शीलम्'**[1] इति। व्याख्यातं च यास्कवचनं दुर्गाचार्येण—'शब्दाभ्यासे यत्रान्यो विशेषो नास्ति, तत्रैवं विशेषमाचार्या मन्त्रार्थसतत्त्वविदो मन्यन्ते यदुतार्थभूयस्त्वमिति। नह्येकस्मात् स एव शब्दः पुनरभ्यस्यते। लोकेऽपि चैतद् दृष्टम्—शब्दाभ्यासेऽर्थभूयस्त्वमिति। यथा अहो दर्शनीय, अहो दर्शनीय इति। गुणातिशये ह्रियाः शब्दाभ्यासः। तस्मान्मन्त्रेष्वपि तद्वदेवेति न्याय्यम्' इति। माधवभट्टस्याप्ययमेव सिद्धान्तः[2]।

अत्र 'मा' निपातस्यासकृत् प्रयोग एकस्मिन्नेव मन्त्रे वैदिक-आवेस्तिकभाषयोः कथमुपलभ्यते, इत्यस्य सान्दर्भिको व्यवहारोऽधस्तात् प्रस्तूयते—

(क) **मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः।**
**वीरान् मा नो रुद्र भामिनो वधीर्हविष्मन्तः सदमित्वा हवामहे**[3]॥ इति।

(ख) **मा गवू एइव्यू अइवि तूतुयाः मा जम् वए नोइत् अषिव्य।**
**मा गां वए नोइत् अषिव्य यो अएनङ्हइति नो मनो**[4]॥ इति।

मन्त्रयोरनयोः समानान्येवाख्यातपदानि निपातपदानि च द्रष्टुं शक्यन्ते। भाषाव्यवहारस्यैतादृशं साम्यम् आर्यजातेः कौटुम्बिकं सामीप्यं द्रढयति।

एवं 'मा' इति निपातस्य स्वरूपोपयिकमर्थोपयिकञ्चानुसन्धानमुदाहृत्य निपातान्तराणां स्वरूपात्मलाभेऽस्योपादानत्वमप्यवस्तात् प्रस्तूयते। तद्यथा—'माकिः < मा + किस् > माकिस् > माकिः, माकीम् < मा + किम् > माकीम्, मा स्म < मा + स्म > मा स्म, मो < मा + उ > मो—प्रभृतयो निपाता 'मा' निपातप्रकृतिभूताः। माकिस् < मा + किस्, माकीम् < मा + किम्—इत्यनयोर्निपातयोरुद्भवस्तु निपात-सर्वनामशब्दाभ्यामेवोपपन्नः।

अवेस्ताभाषायामपि—मा + चिश् > माकिस्[5], तए + चित् > तेचित्[6], तास् + चित् > ताश्चित्[7] प्रभृतयो निपातग्रामा निपात-सर्वनामसमाहारभूताः।

अत्रैतदपि ध्यातव्यमस्ति यत् 'मा' इति निपाते 'ङ्'कारानुबन्धसंश्लेषस्तु महर्षिपाणिनिप्रतिभाजन्यः। यतो हि वैदिकसाहित्येऽस्य व्यवहारो निरनुबन्धक एव दृश्यते। 'नञ् < न' इत्यत्रापि 'ञ्'कारानुबन्धस्तेनैव व्यधायीति।

---

१. निरुक्तम्–१०।४२। २. ऋग्वेदानुक्रमणी–२।४।२६–२७।
३. छान्दोग्यब्रा०–२।१।८। ४. अवेस्ता पृ० ६२। ५. तदेव–पृ० ५६।
६. तदेव–पृ० ५७। ७. तदेव–पृ० ५८।

**(३४) यथा** [ = सादृश्ये ]।

'यथा' इति निपातस्योद्भवस्तु 'यत्' इति सर्वनामशब्दात् 'था' प्रत्यययोगेन कल्प्यते। सन्त्येतादृशाः थाप्रत्ययान्ता बहवो निपाताः, येषामात्मलाभः सर्वनामशब्देभ्यः एव सञ्जातः। तथा < तत् + था > तथा, कथा < किम् + था > कथा, इत्था < इत् + था > इत्था, एवथा < एव + था > एवथा, सर्वथा < सर्व + था > सर्वथा—प्रभृतयो निपाताः सर्वनाममूलका एव। ह्विट्नी[१]-मोनियरविलियम्स[२]-मैकडानल[३]-प्रभृतीनामप्ययमेवाभिप्रायः।

एवं सर्वनामप्रकृतिकः थाप्रत्ययान्तश्चायं निपातो निपातेतराणामात्मलाभेऽप्युपादानकारणत्वं भजते। यथैव < यथा + एव > यथैव, यथाकथा < यथा + कथा > यथाकथा, यथा कथा च < यथा + कथा + च > यथा कथा च, यथायथम् < यथा + यथम् > यथायथम्, यथावत् < यथा + वत् > यथावत्—प्रभृतिनिपातग्रामेष्वस्य प्रकृतित्वं स्पष्टतरम्। 'यथा-तथा' इति निपातयोर्नित्यसापेक्ष्यमपि दृश्यते। कस्मिंश्चिदपि वाक्ये एकस्य प्रयोगेऽपि तावद् वाक्यार्थबुभुत्सा न शाम्यति, यावदपरस्य व्यवहारो न क्रियते। अत एव स्कन्दस्वामिनाऽप्युक्तं यत्—'**तच्छब्दात् योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः**[४]' इति। स्कन्दस्वामिनः प्रतिपादनमिदं सङ्केतयति 'यथा-तथा' इति निपातयोः 'यत्-तत्' इति सर्वनामशब्दमूलत्वम्। प्राकृतभाषायां त्वस्य विकासः—यथा > जहां > जह—इति रूपेणोपलभ्यते[५]।

**(३५) यदि** [=हेतौ]।

'यदि' इति निपातोऽपि 'यथा' निपातवत् 'यत्' इति सर्वनाममूलक एव विभाति। अस्य स्वरूपलाभस्तु 'यत् + इ > यदि' इति सर्वनाम-निपातयोर्मिथः समर्पणादेव सञ्जातः। यतो हि वैदिकभाष्यकारा व्याकुर्वन्ति यच्छब्देन यदिनिपातम्। तथा हि समर्थ्यते सायणेन—'**निपातानामनेकार्थत्वाद् अत्र यदिशब्दो यच्छब्दार्थे**[६]' इति। अन्यत्र स्कन्दस्वामिनापि यदि निपातः 'तत्' सर्वनामसापेक्षत्वेन व्याख्यातः। एतेनायाति यत् 'तत्' शब्देन सह सापेक्ष्यं तु 'यत्' शब्दस्यैवोपपद्यते। तथा च स्कन्दभाष्यम्—'**यदि शब्दस्तु पदपूरणो वा, यदि शब्दश्रुतिसामर्थ्याद्वा पूर्वस्मिन् पादे 'तत्' इत्यध्याहार्यम्**[७]' इति।

अव्ययार्थकारिकाकर्त्राऽप्येवमेव व्याख्यायि यत्—'**यदीति निपातो यच्छब्दमूलकः**[८]' इति। एवं 'यदि' इति निपातस्य 'यत्' इति सर्वनामशब्दमूलकत्वे सिद्धे

---

१. संस्कृत ग्रामर–पृ० ४९०।
२. संस्कृत इङ्ग्लिश डिक्श०–पृ० ८४१।
३. वैदिक ग्रामर–पृ० २८९।
४. ऋ०सं०–१।५४।३, ६।४७।२९।
५. षड्भाषाचन्द्रिका–१।३।१०२।
६. अथर्ववेदः–११३।१।१।
७. ऋ० सं०–१।७९।२।
८. अव्ययार्थकारिका सरस्वतीभवनपुस्तकालयस्थो हस्तलिखितग्रन्थः, ग्र० सं०–३९४६२।

सति, मैक्समूलरमहोदयस्य प्रतिपादनं साधु प्रतिभाति यत्–'प्रायेण सर्वविधा निपाताः सर्वनामाख्यातनामपदमूलकाः[१]' इति ।

एतादृशोऽयं 'यदि' इति निपातः कुत्रचिद् हेतौ प्रयुक्तोऽवलोक्यते[२], कुत्रचिद् असंदिग्धार्थे[३], कुत्रचित् पक्षान्तरे[४], कुत्रचित् पदपूरणे[५], कुत्रचिद् अप्यर्थे[६], कुत्रचिच्चातिशयार्थेऽपि[७] ।

निपातान्तराणामात्मलाभेऽप्ययमुपादानकारणत्वं भजते । यद्यपि <यदि+अपि >यद्यपि, यदिनाम <यदि+नाम >यदिनाम, यदिपरम् <यदि+परम् >यदिपरम्, यद्येवम् <यदि+एवम् >यद्येवम्–प्रभृतीनि निपातपदानि 'यदि' इति निपातमूलकान्येव ।

अवेस्ता-प्राच्यफारसीभाषाभ्यां सहास्य संवादोऽवलोक्यते—यदि >अवे० येजि >प्रा० फारसी-यदिय्[८]-इति ।

**(३६) यावत्** [ = साकल्यार्थे ] ।

'यावत्' इति निपातः 'तावत्' निपातसापेक्षः । यथा 'यत्-तत्' इति निपातयोर्नित्यं सापेक्ष्यमाम्नातं व्याख्यातृभिः, तथाऽनयोरपि । ऋग्वेदसंहितात एवानयोः सापेक्ष्यं दृश्यते । तथा हि मन्त्रः—'**तावदुषो राधो अस्मभ्यं रास्व यावत्स्तोतृभ्यो अरदो गृणाना**[९]' इति । स्वतः प्रमाणभूतेन सन्दर्भेणानेन सिद्धान्तयितुं शक्यते यच्छब्देषु किलार्थवैज्ञानिकं सापेक्ष्यं स्वाभाविकमेव ।

इत्थम् आ वैदिकवाङ्मयाल्लौकिकवाङ्मयं यावदयमर्थदृष्ट्या स्वरूपदृष्ट्या चोर्वरत्वमादधाति । किञ्चिद्भेदेनास्यार्थविकासोऽपि तदवस्थ एव दृश्यते । शतपथब्राह्मणे स्वयं प्रत्ययजुषोऽप्यवलोक्यते । 'यावच्छः <यावत् + छ >यावच्छः' इति रूपेणास्य व्यवहारस्तत्र कृतः । तथा हि मन्त्रः—'अन्याः प्रजा यावच्छो यावच्छ इव तिष्ठन्ते[१०]' इति । मन्त्रेऽस्मिन् वीप्सायुक्तो व्यवहारो दृश्यते 'यावच्छः' इति निपातस्य । 'यावच्छः' इति निपातः शतपथब्राह्मणेऽल्पार्थे प्रयुक्तो वर्तते । प्रकृतिप्रत्ययवतोऽस्योपलब्धिः सङ्केतयति निपातानामर्थवाचकत्वम् ।

एवमस्य व्यवहारः कुत्रचित् साकल्येऽवलोक्यते[११], कुत्रचिद् मानार्थे[१२], कुत्रचिद् अवधारणे चापि[१३] । कुत्रचित्तु कालनियन्त्रकत्वेनाप्यस्य व्यवहारो दृष्टचरः । '**यावत्पुरानिपातयोर्लट्**[१४]' इति महामुनिसूत्रमेव प्रमाणम् ।

१. लेक्चर्स आन दि साइन्स आफ लैंग्वेज-पृ० ३८२ । २. ऋ० सं०–१।७९।२ ।
३. अभिज्ञानशा०–१, पृ० १४ । ४. किरातार्जुनीयम्–२।१७ ।
५. अथर्ववेदः–१११।४।२ । ६. वा० रामायणम्–६।१।१८ ।
७. कुमारसं०–१।४३ ।
८. अवेस्ता–पृ० ४ । ९. ऋ० सं०–७।७९।४ । १०. शतपथब्रा०–२।२।३।४ ।
११. गीता–१।२२ । १२. सिद्धहेमशब्दानु०–१।१।३१ ।
१३. सिद्धहेमशब्दानु०–१।१।३१ । १४. अष्टाध्यायी–३।३।४ ।

अवेस्ता-पालि-प्राकृत-अपभ्रंशभाषास्वप्यस्यापभ्रष्टं स्वरूपमपि दृश्यते। तद्यथा—'यावत् > अवे० यवत्[1] > पा० यावतक्[2] > यव > अवतक > अब अप० यामहिं[3] > जाम' इति।

**(३७) वषट्** [ = देवेभ्योऽन्नप्रदानर्थे ]

'वषट्' इति निपातो देवोद्देश्यकहविष्प्रदानार्थे व्यवहृतो वर्तते संस्कृतवाङ्मये। अस्य रूपविकासस्तु बहुविधो दृश्यते। ऋग्वेदसंहितायां तु 'वषट्' इत्येक एव निपातो दर्शनपथमवतरति। परवर्तिवैदिकसाहित्ये, विशेषतः शतपथब्राह्मणे त्वयं पुरुरूपेषूपलभ्यते। 'वषट्' इति निपातस्तु प्रथितचरः। शतपथब्राह्मणे तु—'वौषट्', 'वौक्षाट्', 'वौक्', 'वौझक्', 'वाक्षट्'—प्रभृतयो निपाता उपलभ्यन्ते। मन्ये यत् 'वषट्' इति निपातोपादानकारणभूता इमे।

'वषट्' इति निपातं व्याचक्षाणेन सायणाचार्येणैवमेव प्रत्यपादि। स वक्ति यत्—**'वौगिति[4] उच्चारणं कुर्यात्। वौगित्येतदौकारस्थाने आकारे कृते वाक् इति भवति, अतो वषट्कारो वाग् रेतः; सेचनसाधनत्वात्। उच्चारणमेव तत्सेकः। तथा षडिति करोत्यनुषज्यते=ब्रूयादित्यर्थः। सङ्ख्याया ऋतुष्वपि सम्भवात्। 'ऋतवः' एव 'षट्' इत्यनेन विवक्षिताः। प्राक् षडित्यतो वौगित्येतत्स्थापनम्। तस्मादेवं वौषडिति वषट् कुर्यात्'** इति। व्याख्यानेऽस्मिन् सायणाचार्येण 'वषट्' इति निपातस्य व्युत्पत्तिः कुर्वतोक्तं यत् 'वाक्+षट् > वाक्षट् > वषट्' इति। 'वाक्-षट्' इत्यनयोः पदयोः समाहारेण वाक्षट् > वौक्षाट् > वौक् > वौझक् > वौषत् > वषट् > प्रभृतिनिपातानामुद्भवप्रकारः प्रदर्शितः सायणाचार्येण।

शतपथब्राह्मण एव पुनः स व्याख्याति—'तत्र[5] वौगिति पूर्वाक्षरेण एषः अग्निरुच्यते। वक्तेर्वौगिति पदनिष्पत्तिरूह्या। षडित्यक्षरेण षट्चितिकोऽग्निः। तथा सति 'वौषट्' इत्यस्यायमर्थः सम्पद्यते—अस्मै आहवनीयाग्नये षट्चितिकमग्निमन्नं कृत्वा आत्मसम्मितम् अपि दधाति = कृतवान् भवति' इति। उभयत्र व्याख्याने तेन 'षट्' शब्दो वाग्विशेषणत्वेन प्रयुक्तः। प्रथमे व्याख्याने तु 'षट्' शब्द ऋतूनां विशेषणत्वेनापि व्याख्यातः। यथा षड् ऋतवो भवन्ति, षडग्नयो भवन्ति, तथैव षड्वाचोऽपि मन्तव्याः। प्रातिशाख्यभाष्यकारेणापि पुरस्कृतोऽयं सिद्धान्तः[6]।

सत्याषाढश्रौतसूत्रव्याख्यात्रा महादेवभट्टेन त्वन्यथैव व्याकृता इमे शब्दाः। स विवृणोति यत्—'वौषडिति[7] वषट् करोतीति सामान्येन विधाय वषडित्येके, वौक्षा-

---

१. अवेस्ता—पृ० २९।
२. अशोक के अभिलेख—गिरनार—४।९, कालसी—११।३, शहवाजगढ़ी—९।१९।
३. हैमप्राकृतशब्दानुशासनम्—८।४।४०६। ४. शतपथब्राह्मणम्—१।७।२।२१।
५. तदेव—१०।४।१।३।
६. प्रातिशाख्यभाष्यम्—उव्वटाचार्यकृतम्—हस्तलिखितग्रन्थोऽयम्, ग्र० सं० २१४०।
७. सत्याषाढश्रौतसूत्रम्—२१।२।३२।

डित्येके, षडित्येके, वाक्षडित्येक इति कल्पान्तराणि विधाय वषडिति ब्राह्मणस्य वषट्-कुर्यात्, वौषडिति राजन्यस्य, वौक्षाडिति वैश्यस्य, षडिति शूद्रस्येति निमित्तसंयोगेनाप्याम्नातम् । अत्र पञ्चानां तुल्यवद् विकल्पः' इति ।

अमीभिः श्रुतिसन्दर्भैरेतन्निष्कृष्यते यदेतेषु निपातग्रामेषु घटकत्वेन 'वाक् + षट्' इति संज्ञा-सङ्ख्याशब्दौ समाविष्टौ । इत्थं संज्ञा-सङ्ख्याशब्दयोरास्कन्दनेन निपातमूर्तेरुदयादेतत् कथयितुं शक्यते यत् सर्वविधा निपाताः सर्वनाम-नाम-आख्यात-पदमूलका इति ।

'वषट्' इति निपातः प्रायेणोपसर्गतयैव परामृष्टोऽवलोक्यते । √कृ [ = करणे ] इति धातुना सहास्य योगः प्रायिकः । आ वैदिकवाङ्मयाल्लौकिकवाङ्मयं यावदयं कृ धातुना सहैवोपसर्गतामवाप्नोति स्म । तथा हि किलानर्घराघवनाटके—

**पश्यैते पशुबन्धवेदिवलयैरौदुम्बरीदन्तुरै-**
**र्नित्यव्यञ्जितगृह्यतन्त्रविधयो रम्या गृहस्थाश्रमाः ।**
**यत्रामी गृहमेधिनः प्रचलितस्वाराज्यसिंहासना**
**वैतानेषु कृपीटयोनिषु पुरोडाशं वषट्कुर्वते**[1] ॥ इति ।

(३८) **वा** [ = उपमायाम् ] ।

'वा' इति निपातः श्रुति-स्मृतिसाहित्ये समभावेन व्यवह्रियमाणो दृश्यते । लौकिकसाहित्येऽयमर्थदृष्ट्याऽतिसङ्कुचितः । केवलं वैकल्पिकमर्थं बोधयति स्मृतिसाहित्ये । वैदिकभाषायां त्वयं विविधेष्वर्थेषु विनियुक्तो दृष्टिपथमायाति । कुत्रचिदयं प्रतिशब्दार्थे[2] प्रयुक्तोऽवलोक्यते, कुत्रचिच्चार्थे[3], कुत्रचिद् उपमार्थे[4], कुत्रचित् पदपूरणार्थे[5], कुत्रचिद् इदानीं[6]शब्दार्थे, कुत्रचिद्[7] अपरिमितार्थे, कुत्रचिद् विकल्पार्थे[8], कुत्रचिद् अवधारणार्थे[9], कुत्रचित् स्वाध्यायार्थे[10], कुत्रचिद् यथाशब्दार्थे[11], कुत्रचित् प्रश्नार्थे[12], कुत्रचित् पूर्वपक्षापरितोषे[13], कुत्रचित् सम्भावनायाम्[14], कुत्रचित् परिहासार्थे[15], कुत्रचित् चेदर्थे[16], कुत्रचिद् निषेधार्थे[17], कुत्रचिद् अभावार्थे[18] च ।

---

१. अनर्घराघवम्—२।१७ ।
२. ऋ० सं०—१।८।६ ।
३. तदेव—१।३०।१, अथर्व०—१।९।२, शतपथब्रा०—१।७।१।१ ।
४. ऋ० सं०—५।६२।७, गीता—४।४७ ।
५. ऋ० सं० ५।६२।७ ।
६. तदेव—६।४५।११ ।
७. तदेव—१०।१०५।११ ।
८. शतपथब्रा०—१।१।२।४ ।
९. सामवि० ब्रा०—१।१।२, कुमारसं०—२।५९ ।
१०. छान्दोग्योप०—१।११।१ ।
११. महाभारतम्—५।२७।२९ ।
१२. उत्तररामच०—१, पृ० १६ ।
१३. नैषधीयम्—९।११० ।
१४. तदेव—९।२६ ।
१५. तदेव—९।२६ ।
१६. गउडवहो—२९७ ।
१७. सारस्वतप्रक्रिया—स्त्रीप्र०—३ ।
१८. पारस्करगृह्यसूत्रम्—श्राद्धसू०—१ ।

एवं लघीयः प्रतिमावतोऽस्यार्थविवर्तस्तु महाश्चर्यंकरः। लौकिकसंस्कृत-साहित्येऽस्यार्थसङ्कोचस्य मुख्यो हेतुस्तु तस्य सूत्रवद्धता पद्यवद्धता च प्रतिभाति।

**(३९) वि** [=द्विशब्दार्थे]।

'वि' इति निपात उपसर्गो वा संस्कृतभाषाया ऐतिहासिकप्रवाहे विविधमर्थं रूपञ्च गृह्णाति। शब्दानां निरुक्तिप्रसङ्गे–वर्णागम–वर्णविपर्यय–वर्णविकार–वर्णनाश–धातोरर्थातिशययोगरूपाणि निरुक्तपञ्चलक्षणानि स्वीकृतानि, तेषु वर्णविकाररूपभाषा-शास्त्रीयधर्मेणातिप्रभावितोऽयं निपातो दृश्यते। **'बेकनाटाः', 'बेकुरयः'** इति प्रयोगौ भाषाशास्त्रीयसिद्धान्तेनातिमहत्त्वमाधत्तः। "वि" इत्युपसर्गस्य केवलस्वरव्यञ्जनयो-र्व्यावृत्त्या एको विलक्षणार्थकः संज्ञाशब्दः कथं प्रयोगपदवीमारोहतीत्यस्य मौलिकमुदा-हरणम् **'बेकनाटाः'** इति शब्दोऽस्ति। तद्यथा—वि+एक+√नट [=अवस्यन्दने] > व्येकनाटाः > वेकनाटा, > बेकनाटाः =वृद्धिजीविनो वार्धुषिका इत्यर्थः'। समर्थयते चेमां व्युत्पत्तिं सायणाचार्यः—'इदृशेन[१] द्विविधेन बलेन इन्द्रः विश्वान् = सर्वान्, बेकनाटान् = वृद्धिजीविनो वार्धुषिकान् वा। कथं तद्व्युत्पत्तिः? 'बे' इत्यपभ्रंशो द्विशब्दार्थे। एकं कार्षापणमृणिकाय प्रयच्छन् द्वौ मह्यं दातव्यौ इति नयेन दर्शयन्ति। ततो द्विशब्देनैकशब्देन च नाटयन्तीति बेकनाटाः' इति। दुर्गाचार्यस्याप्ययमेव सिद्धान्तः[२]। भट्टभास्करेणापि निर्णीतं यत्–**'वेरुपसर्गस्य स्वरव्यञ्जनयोर्व्यावृत्तिरिति[३]'** इति।

बरोमहोदयास्तु[४] सङ्गिरन्ते यद् "वि" इत्युपसर्गस्य मौलिकोऽर्थस्तु द्विसङ्ख्या-बोधकत्वेन स्वीकृत आसीत्। अत एव 'विंशतिः', 'विंशः', 'द्वाविंशः' प्रभृतिशब्दाः तत्तत्संख्यां बोधयन्तीति।

**(४०) विषु** [=नानार्थे]।

'विषु' इति निपातो नानार्थे रूढोऽवलोक्यते। प्रायेणास्य व्यवहार उपसर्ग-रूपेणैवावलोक्यते। √अञ्च् [=गतौ] इति धातुना सहायं प्रायेणोपलभ्यते। तथा च ऋग्वेदे—'विषूचो अश्वान् युयुजान ईयत एकः समान आ रथे[५]' इति। शुक्लयजुर्वेदेऽ-प्यस्य प्रयोगः√अन्च् सहकृत एव राजते। तद्यथा—'या व्याघ्रं विषूचिकोभौ वृकं च रक्षति[६]' इति। व्याक्रियते च मन्त्रोऽयम् उव्वटाचार्येण—'विषु निपातो नानावचनः। अञ्चतिर्गत्यर्थः। अन्तर्व्यापत्तिर्नानाञ्चना विषूचिकेत्युच्यते। विषूचिका =व्याधि-विशेषः' इति।

अत्रावधातव्यमस्ति यद्√अञ्च् [= गतौ] इति धातुना सह योगेन 'विष्वक् < विषु + अन्च् > विष्वक्' इति रूपस्य निष्पत्तिर्भवति। अर्थाद् धातूपसर्गयोरास्कन्दनेन

---

१. ऋ० सं०–८।६६।१०।
२. निरुक्तम्–६।५।४।
३. तै० सं०–३।४।७।
४. संस्कृत भाषा–पृ० ३१२।
५. ऋ० सं०–६।५९।५–स्कन्दभाष्यम्।
६. शुक्लयजुर्वेदः–१९।१०।

सर्वतोभावार्थकस्यास्य 'विष्वक्'शब्दस्योद्भवः सञ्जातः। एवं धातूपसर्गसमाहारेण लब्धात्मनोऽस्य 'विष्वक्' इति शब्दग्रामस्य पुनरुपसर्गत्वं दृश्यते—'विष्वङ् व्यक्रामत्[1]'। विष्वक् + वि + √क्रम् [ = पादविक्षेपे ] > विष्वग् व्यक्रामत्, विष्वग् भवन्ति < विष्वक् + √भू [ = सत्तायाम् ] > विष्वग्भवन्ति[2], विष्वक् पतन्तु < विष्वक् + √पत [ = गतौ ] > विष्वक्पतन्तु[3]—एतेषु प्रयोगेषु। अमीषां प्रयोगाणामनुसन्धानेन कथयितुं पार्यते यत् कुत्रचिद् धातवोऽप्यनर्थका भवन्ति। यथा—विषु + √अञ्च् > विष्वग् इत्यत्र 'अञ्च' इति धातुः।

**(४१) श्रत्** [ = आस्तिक्यबुद्धौ ]।

'श्रत्' इत्ययं निपात उपसर्गरूपेण व्यवहृतो दृश्यते संस्कृतभाषायाम्। अत एव शौनकाचार्येणातिरिक्तनिपातत्वेनायं परिसङ्ख्यातः। तथा च श्लोकः—

**अच्छ-श्रदन्तरित्येतानाचार्यः शाकटायनः।**
**उपसर्गाः क्रियायोगान् मेने तेन त्रयोऽधिकाः[4]**॥ इति।

अयं निपातः संस्कृतभाषायान्तूपसर्गरूपेण व्यवह्रियत एव, अन्यास्वपि भारोपीयार्यभाषासूपसर्गतयैव पुरस्कृतोऽवलोक्यते। प्रायेणायमुपसर्गः √कृ, √दा, √धा—प्रभृतिभिर्धातुभिरनुषज्यते। 'श्रत्कृधि < श्रत् + √कृ [ = करणे ] > श्रत्कृधि[5], श्रद्दधाति < श्रत् + √धा [ = धारणपोषणयोः ] > श्रद्दधाति[6]—प्रभृतयो रूपप्रतिमाः 'श्रत्' इत्युपसर्गसहकृताः। जिनेन्द्रबुद्धि[7]-विट्ठलाचार्य[8]-लल्लदीक्षित[9]-प्रभृतिभिरपि समर्थितमस्योपसर्गत्वम्। उपसर्गवृत्तिनामके[10] हस्तलिखितग्रन्थेऽप्यय-मुपसर्गतयैव व्याख्यातः।

इत्थम् उपसर्गरूपेण व्यवह्रियमाणोऽयं निपातः कुत्रचित् सत्यार्थे[11] विनि-योजितोऽवलोक्यते, कुत्रचिद् उत्साहार्थे[12], कुत्रचिद् विश्वासार्थे[13], कुत्रचिच्छ्रवणार्थे[14], कुत्रचिच्चास्तिक्यबुद्धावपि[15]।

---

१. ऋ० सं०—१०।९०।४। २. तदेव—८।४५।८। ३. तदेव—१०।१३५।५।
४. बृहद्देवता—२।९७। ५. ऋ० सं०—८।७५।२।
६. तदेव—१।५५।५, १।१०४।६, २।१२।५। ७. न्यासः—३।३।१०६।
८. प्रक्रियाकौमुदी—३।३।१०६।
९. मृच्छकटिकम्—३।२५—लल्लदीक्षितव्याख्या।
१०. उपसर्गवृत्तिः—हस्तलिखितग्रन्थः—ग्रं० सं०—३८७९३।
११. निरुक्तम्—३।१०। १२. ऋ० सं०—१।१०४।६।
१३. तदेव—२।१२।५। १४. निरुक्तम्—३।१३—दुर्गव्याख्या।
१५. मृच्छकटिकम्—३।२५।

प्राकृत-पालि-अपभ्रंशभाषास्वप्यस्य स्वरूपविकासो दृश्यते[१]—

(क) श्रत् + √धा > श्रद्धा > प्रा० सद्धा > सड्ढा > सड्डा, श्रत् + √धा > श्राद्धः > प्रा० सराध > मरा० षधु, श्रद्दधते > प्रा० सद्दहइ = विश्वसितीत्यर्थः।

(ख) यूरोपीयार्यभाषाभिरयं संवाद्यते[२]—

श्रत् + √धा > श्रद्धा > अवे० ज़्रजदा > प्रा०फारसी अस्द > नवीनफा० सद > लहंदा सद् > लै० क्रेदो > लिथु० क्रेदुस् > गाथि० ह्लर्द > अंग्रेजी हर्ट—इति।

**(४२) सकृत्** [ = एकवारम् ]।

'सकृत्' इति निपात एकसङ्ख्यार्थे रूढोऽस्ति संस्कृतवाङ्मये। प्रायेण वैदिक-लौकिकोभयवाङ्मयेऽस्य व्यवहार एकवारार्थे समानरूपेणोपलभ्यते। निपातस्यास्य स्वरूपलाभः—सम् + √कृ [ = करणे ] > संस्कृत् > सकृत्—धातूपसर्गयोरास्कन्दने-नैवाजनि। यतो हि 'सम्' इत्युपसर्ग एकत्वसंख्यावबोधकत्वेनोरीकृतोऽवलोक्यते श्रुति-वाङ्मये। तथा च मन्त्रः—

**समानी व आकूतिः समाना हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति**[३]॥ इति।

व्याख्यायते च मन्त्रोऽयं स्कन्दस्वामिना—'वः = युष्माकम्, आकूतिः = सङ्कल्पोऽध्यवसायः, समानी = एकविधोऽस्तु' इति। सायणाचार्येणाप्यूरीकृतं स्कन्दस्वामिमतम्। सोऽपि व्याख्याति—'समाने योनौ = एकस्मिन् स्थाने[४]' इति। बृहदारण्यकोपनिषद्यप्येषा व्याख्या पुरस्कृता[५]।

अमीभिः प्रमाणैरेतत् प्रतिपादयितुं प्रभवामो यत् 'सकृत् < सम् + √कृ > सकृत्'—इति निपातस्योद्भवो धातूपसर्गसंसर्गजन्यः। 'सहस्रम्' इति संख्याबोधके शब्देऽपि 'सम्' उपसर्गो घटकत्वेन परामृष्टः। बरोमहोदयस्याप्ययमेव[६] राद्धान्तः। अनया रीत्या सङ्ख्यावाचिनोः सकृत्-सहस्रशब्दयोर्विश्लेषणेनैतिहासिकदृष्ट्या भाषा-शास्त्रीयदृष्ट्या च निपातमूर्तीनामुदये नाम-आख्यात-सर्वनाम-शब्दा घटकत्वेनोरीकृताः। अत एव **'इयन्त इति संख्यानं निपातानां न विद्यते[७]'** इत्युक्तिश्चरितार्थतां गच्छति। अस्य 'सकृत्' इति निपातस्य तस्मिन्नेवार्थे संवादोऽपि भवति भारोपीयभाषाभिः।

---

१. द्र० प्रा० शब्दानु० पृ० ९, प्राकृतमणिदीपः—पृ० ३६१, कुमारपालचरितम्—३।१२, उक्तिरत्नाकरः—पृ० ९, मराठीव्युत्पत्तिकोशः—पृ० ६९७।

२. द्र० वैदिक ग्रामर—पृ० ३५०, संस्कृतग्रा० पृ० ३९७, संस्कृत लैंग्वेज—पृ० १०२, संस्कृत-इंग्लिश-डिक्श०—पृ० १०९५, कम्पैरेटिव डिक्श०-आफ दी इण्डो आर्यन लैंग्वेजेज—पृ० ७३६।

३. ऋ० सं०—१०।१९१।४।

४. तदेव—१०।१०।७।

५. बृहदारण्यकोपनिषद्—३।४।७।

६. संस्कृत लैंग्वेज—पृ० १४९।

७. बृहद्देवता—२।९५।

तद्यथा—'सकृत् > अवे० हृकृत् > हकरत् > लिथु० कर्तस् > प्रा० स्ला० क्रतुः = एकवारमित्यर्थः[1]' इति ।

**(४३) सना** [ = नित्यार्थे ]।

'सना' इति निपातस्य चतुर्विधो विकासोऽवलोक्यते संस्कृतभाषायाम्—कुत्रचिद् निपातरूपेण, कुत्रचिद् उपसर्गरूपेण, कुत्रचिद् नामरूपेण, कुत्रचिच्चाख्यातरूपेण च। अपरञ्च 'सना' इति मौलिको निपातो लिङ्ग-संख्या-विभक्तिभागपि दृश्यते। एतेन सत्त्वगन्धित्वमप्यस्मिन्नपोह्यते। सत्त्वगन्धितायां सत्याम् **'चादयोऽसत्त्वे[2]'** इति महामुनिसूत्रस्य का गतिरिति चिन्तनीया ?

एवमत्रैकैकस्य विकासस्योदाहृणानि विमर्शिष्यन्ते—

(क) 'सना' इति निपातो बहुत्र विभक्तिसङ्ख्यामनुहरते। 'सनम्[3]', 'सनेन[4]', 'सनकात्[5]', 'सनात्[6]' प्रभृतयो निपाताः 'सना' इति निपातमूलकाः। प्रयोगेष्वेतेषु सर्वत्र विभक्तिसङ्ख्या द्रष्टुं शक्यते। अत एवोचिवान् स्कन्दस्वामी—**'सनात् इति पञ्चमीनिर्देशात् प्रभृतीति वाक्यशेषः। चिरात् प्रभृतीति[7]'** इति।

(ख) 'सना' इति निपात उपसर्गरूपेणापि व्यवहृतोऽवलोक्यते। सनजाः < सना + √जनी [ = प्रादुर्भावे ] > सनजाः[8], सनश्रुतः < सना + √श्रु [ = श्रवणे ] > सनश्रुतः[9]—इत्यनयोः प्रयोगयोरस्योपश्लेष औपसर्गिकः। अत एव व्याख्याति सायणाचार्यः—**'सनश्रुतः = चिरप्रख्यातः। जगति स्वभावत एव विख्यात इत्यर्थः[10]'** इति।

(ग) 'सना' इति निपातो नामरूपेणापि व्याख्यातो वर्तते। तथा च मन्त्रः—**'घनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः[11]'** इति।

व्याख्याता च ऋगियं स्कन्दस्वामिना—**'सनकशब्दस्य पुराणवचनस्येदं रूपम्। अयज्वानः सनकाः = चिरन्तना अयष्टारः। जन्मन एव प्रभृति यागवर्जिता इत्यर्थः'** इति। मुद्गलीयवृत्तिकारेण तु 'सनकाः' इति पदमन्यथा व्याख्यातम्—**'सनकाः = एतन्नामका वृत्रानुचराः[12]'** इति। अमीभिर्वैदिकसन्दर्भैः **'सना'** इति निपातस्य नामत्वं सिद्ध्यति।

---

१. द्र० संस्कृत-लैंग्वेज-पृ० २६२, २७५, अवेस्ता-पृ० १७, २४।
२. अष्टाध्यायी-१।४।५७।
३. ऋ० सं०-४।१०।७।
४. तदेव-२।२९।३, शतपथब्रा०-२।३।४।१६।
५. ऋ० सं०-३।२९।१४, १०।७०।१२।
६. तदेव-२।५१।६, ४।५७।६, ८।११।१०।
७. तदेव-१।६२।८।
८. ऋ० सं०-१।६२।७।
९. तदेव-१०।२४।३।
१०. तदेव-१०।२४।२।
११. तदेव-१।३३।४।
१२. तदेव-१।३३।४-मुद्गलीया वृत्तिः।

लौकिकसाहित्ये तु नामरूपेणास्य विकासः स्पष्टतया दृष्टचरः। तथा हि भागवते—

**तप्तं तपो विविधलोकसिसृक्षया मे।**
**आदौ सनात् स्वतपनः स चतुःसनोऽभूत्[1]॥**

व्याख्यायते च श्लोकोऽयं श्रीधरस्वामिना—**'स हरिः चतुःसनोऽभूत्—सनत्कुमारः, सनकः, सनन्दनः, सनातन इति चत्वारः सनशब्दा नाम्नि यस्य सः। कथम्भूतात् स्वतपसः सनात् = अखण्डितात्'** इत्यर्थः। महाभारतेऽपि 'सना' इति निपातस्य नामत्वमुपवर्णितम्। तथा च श्लोकः—

**यथोत्पन्नस्तथैवाहं कुमार इति विद्धि माम्।**
**तस्मात् सनत्कुमारेति नामैतन्मे प्रतिष्ठितम्[2]॥**

क्षीरस्वामि[3]-भानुजिदीक्षितावप्येवमेव[4] सिद्धान्तयतः।

(घ) आख्यातरूपेणाप्यस्य विकासोऽवलोक्यते। तथा च श्रुतिः—**'सनायते गोतम इन्द्र[5]....'** इति। व्याख्यातश्च मन्त्रोऽयं सायणेन—**'सः = इन्द्रः, सनायते = नित्य इवाचरति। 'सना' इति निपातो नित्यशब्दसमानार्थः। तस्मादाचारार्थे क्यङ् प्रत्ययः'** इति।

एतेषां स्वतः प्रमाणभूतानां सन्दर्भाणामनुसन्धानेन स्वत एव प्रथिततरो भवति यन्निपाता असत्त्वगन्धिनश्चेति वादा अनैतिहासिका विमर्शशून्याश्च।

प्राचीनभारोपीयार्यभाषाभिरप्यस्य संवादोऽवलोकनीयः–'सनकः > लै० सेनेक्स > लिथु० सेनास् > गाथि० सिनिस्त[6]' इति।

**(४४) सु [ = सुष्ठ्वर्थे ]।**

'सु' इति निपातोऽर्थदृष्ट्या निपातेतराणां प्रसवदृष्ट्या च संस्कृतवाङ्मये कामं मूर्द्धन्यं स्थानमलङ्करोति। अत एव महामुनिपाणिनिः प्रादिगणेऽपि पठत्यमुं चादिगणेऽपि। निपातोऽयमर्थविज्ञानदृशा 'कु' इति निपातसापेक्षः। 'सुकुमारः < सु + कु + मारः < सुकुमारः' इति शब्दे उभयोः सापेक्ष्यं दृश्यते।

वैदिकभाषायां त्वयं वर्णविकारमप्यनुभवति—'सु > षू' इति रूपेण। तथा च मन्त्रः—**'नि षू नमध्वं भक्ताः[7]'** इति। मन्त्रोऽयं व्याचक्षाणेन सायणाचार्येणोक्तम्—'सु = सुष्ठु। 'षू' 'निपातस्य च' इति संहितायां दीर्घः' इति।

वैदिकसाहित्ये निपातोऽयम् 'उवङ्०' इत्यादेशमप्यनुभवति। तथा च ऋग्वेदे—**'आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुवितायागन्तन[8]'** इति। व्याख्याति च

---

१. भागवतम्–२।७।५। २. महाभा०–हरिवंशम्–१८।३५।
३. अमरकोषः–१।१।५१। ४. तदेव–१।१।५१। ५. ऋ० सं०–१।६३।१३।
६. संस्कृत इंग्लिश डिक्शनरी–पृ० ११४१।
७ 'ऋ० सं०–३।३५।९—सायणभाष्यम्। ८. तदेव–५।५७।१, तै० सं० १।६।१३।

स्कन्दस्वामी मन्त्रममुम्—'शोभनं गम्यते यस्मिन् तत् सुवितम्। छान्दसत्वादुपसर्ग-स्यापि सोरुवङादेशः' इति।

सोरुवङादेशदृष्ट्या 'सुवर्गम् <सु + √ऋ [ = गतौ ] >सुवर्गम् >स्वर्गम्' इति प्रयोगमपि भाषाशास्त्रीयं महत्त्वमादधाति। वैदिकसाहित्ये प्रायेण 'सुवर्गम्' इति प्रयोग एवोपलभ्यते[१], लौकिके तु 'स्वर्गम्' इत्येव व्यवह्रियते। तथा च श्रुतिः—**'लोकमजिगांसन्ते सुवर्गं लोकं न प्रजानन्त'**[२] इति। तैत्तिरीयब्राह्मणेऽपि किलोपलभ्यते 'सुवर्गम्' इति पदम्[३]। 'सुवर्गम्' इति नामशब्दः 'न्यरकम् >नि + √ऋ [= गतौ] > न्यरकम् >नरकम्' इति शब्दसापेक्षः। तथा हि सुश्लोकयति महेश्वरः[४]—**'न्यरकम् = नीचैः अर्यते = गम्यते यस्मिंस्तन्नरकम्'** इति।

एवमेव भारतीयवाङ्मयस्य सर्वस्वभूतः 'सुन्दरम्' <सु + नरम् >सुनरम् > सुन्दरम्' इति विशेषणशब्दः 'सु' इति निपातस्यावयवभूतः। वस्तुतः 'सुन्दरः-सुन्दरी' इति विशेषणशब्दावर्वाक्कालिकाविति। अनयोः शब्दयोर्विकासस्तु 'सुनरः >सुन्दरः, सुनरी >सुन्दरी' इति शब्दाभ्यामुपपन्नः। तथा हि तैत्तिरीयसंहितायाम्—**'सरस्वत्येहि रन्तिरसि रमतिरसि सूनर्यसि जुष्टे जुष्टिं तेऽशीयोपहूत उपहवम्'**[५]। इति। व्याख्यातवांश्च मन्त्रममुं भट्टभास्करः—**'हे सरस्वति = सरणवति ! त्वं सूनरी = शोभनमनुष्या असि। मनुष्याणां सुखहेतुत्वात्। उपसर्गविकारश्छान्दसः'** इति।

शब्दानामेतेषां व्युत्पत्तिमूलकेनानुसन्धानेन सिद्धान्तयितुं शक्यते यत् किल संज्ञाशब्दानाम्, सर्वनामशब्दानाम्, विशेषणशब्दानाञ्च रूपबिम्बोद्भवे निपातोपसर्गाणा-मेवोपादानत्वमूरीकृतं शाब्दिकैः।

निपातेतराणां सङ्घटनेऽप्यस्य 'सु' इति निपातस्य महत्त्वं दृष्टचरम्। 'स्वगा < सु + √गम् [ = गतौ ] >स्वगा[६], स्वधा <सु + √अद [ = भक्षणे ] >स्वधा[७], स्वस्ति <सु + √अस [ =भुवि ] >स्वस्ति[८], स्वाहा <सु + आह >स्वाहा[९], स्वित् <सु + इत् >स्वित्[१०]—प्रभृतिनिपाताः 'सु' निपातावयविभूताः।

अवेस्ता-ग्रीकभाषानिपातेनाप्यस्य संवादोऽवलोक्यते—'सु >ग्री० सू[११] > अवे० हू—इति, सु + उक्तम् >सूक्तम् >अवे० हूक्तम्[१२]' इति।

**(४५) स्म** [ = अतीते ]।

'स्म' इति निपातस्य द्विविधो व्यवहारोऽवलोक्यते संस्कृतवाङ्मये—वैदिको लौकिकश्च। वैदिकसाहित्ये कामम् अयं निपातो चित्रात्मको विविधार्थश्च दृश्यते।

---

१. ऋ०सं०—६।१।९। २. तदेव—६।५।८। ३. तै० ब्रा०—३।३।७।
४. निरुक्तम्—६।३—महेश्वरकृता निरुक्तभाष्यटीका।
५. तै० सं०—१।६।३—भट्टभास्करभाष्यम्। ६. तदेव—१।४।४४—भट्टभास्करभाष्यम्।
७. आश्व० गृ० सूत्रम्—१।३।११। ८. अथर्ववेदः—७।३०।१।
९. तदेव—७।७९।८। १०. वाजसनेयिप्रा०—२।५३।
११. संस्कृत इंग्लि० डिक्श० पृ० १२१९। १२. अवेस्ता—पृ० २७।

लौकिके तु सङ्कुचितार्थोऽयं निपातः केवलं लुङ्-लङ्-लकारार्थे व्यवहृतोऽवलोक्यते, अर्थाद् अर्वाक्कालिकसंस्कृतवाङ्मये कालनियन्तृत्वेनास्य परामर्शो विहितः।

अत्रावस्तादस्याभिधानिकानि वैचित्र्याणि प्रस्तूयन्ते। कुत्रचिदयं निपातः सर्वथाशब्दार्थे विनियोजितो दृष्टिपथमायाति[1], कुत्रचित् खल्वर्थे, कुत्रचिच्चार्थे[2], कुत्रचिद् भूतार्थे[3], कुत्रचिद् अविस्मृतौ[4], कुत्रचित् पादपूरणार्थे[5], कुत्रचित् प्रसिद्धौ[6], कुत्रचिद् आश्चर्ये[7], कुत्रचित् 'स्मः' इति क्रियार्थे[8] चापि। चित्रं यत् पाणिनिमन्वस्य चित्रात्मका अर्थाः स्थगिताः !

अत्रावधातव्यमस्ति यद् वैदिकभाषायाम्—'सुमत्–स्मत्' इति निपातौ **'स्वयम्'** इत्यर्थे सहार्थे चोपलभ्येते। अत्रैतत् कल्पयितुं शक्यते यत् 'स्म' इति निपातस्य विकासः 'सुमत्-स्मत्' इति निपाताभ्यामेवोपपन्नः। एवमस्य विकासक्रमस्तु—सुमत् >स्मत्> स्म—इति रूपेण घटितः।

तैत्तिरीयारण्यके[9] तु 'स्म' इति निपातः 'स्न' इति रूपेणापि दृश्यते। तत्र व्याख्याति भट्टभास्करः—**'स्न इति पादपूरणे। छान्दसो मकारस्य नकारः'** इति। दुर्गासप्तशतीव्याख्यात्रा चतुर्धरेणोक्तं यत्—**'स्म इति निपातः 'स्मः' इत्यर्थे। प्रणताः स्म = प्रणताः स्मः'** इति। मन्ये यदत्र छन्दोनुरोधेन विसर्गो लुप्त इति।

अवेस्ताभाषानिपातोऽप्यनेन संवादं करोति-स्मत् >अवे० मत्[10]—इति।

**(४६) स्वगा** [ =सुष्ठुगमनार्थे ]।

'स्वगा' इति निपातस्तु धातूपसर्ग—सु + √गम् [ =गतौ ] >स्वगा—समाहारभूतः। ऋग्वेदसंहितायां निपातरूपेणायं शब्दो नावलोक्यते। ऋग्वेदसंहितायाः पश्चाद् वैदिकसाहित्य एवास्य निपातरूपेण विमर्शोऽवलोक्यते। तथा हि तैत्तिरीयसंहितायाम्—**'स्वगा वो देवास्सदनमकर्म य आजग्म सवनेदं जुषाणाः**[11]**'** इति।

उपबृंहयति स्म च मन्त्रममुं भट्टभास्करः—**'स्वगेति निपातो यथास्वकरणं द्योतयति। यथायथमसङ्कीर्णस्थानं कृतवन्तो वयमित्यर्थः'** इति। शतपथब्राह्मणेऽप्ययं निपातत्वेनैव स्वीकृतो व्याख्यातश्चावलोक्यते। तथा हि श्रुतिः—'स्वगाकरोति देवलोकं वाऽस्य[12]'। मन्त्रोऽयं व्याचक्षाणेन हरिस्वामिनोक्तं यत्–**'स्वगा इति निपातः। स्वस्थानगामिवचनम्। स्वगाकरोति = स्वस्थानगामिनं करोतीत्यर्थः'** इति।

---

१. ऋ० सं०–१।२६।३।
२. तदेव–४।३१।८।
३. तदेव–५।५२।३।
४. तदेव–१०।३३।१।
५. अथर्ववेदः–१२३।१।१।
६. ऋ० सं०–५।५३।५, तै० आ० १।११।५३।
७. तै० आ०—१।२७।११४।
८. भागवतम्–२।७।३१।
९. तै० आ०–१।११।५३।
१०. अवेस्ता–पृ० ३६।
११. तै० सं०–१।४।४४।
१२. शतपथब्रा०–१।८।३।११–हरिस्वामिभाष्यम्।

एवं धातूपसर्गसङ्घातजन्येनानेन निपातेन √कृ इति धातुयोग उपसर्गत्वमङ्गीक्रियते। तथा हि तैत्तिरीयके–**'स्वगाकृत्य गात्राणाम्[1]'** इति। 'स्वगा' इति निपातार्थ एव ऋग्वेदे[2]–अथर्ववेदे[3]–यजुर्वेदे[4]–मैत्रायणीसंहितायाम्[5]–काठके[6]-कापिष्ठले[7] च 'सुगा <सु + √गम् [=गतौ] > सुगा = सुष्ठुगमनानीत्यर्थः–इति शब्दो व्यवहृतः। तथा हि मन्त्रः–'त आदित्या अभयं शर्म यच्छत सुगा नः[8]' इति। व्यावृणोति च मन्त्रममुं सायणः–'सुपथा = सुपथानि, नः = अस्माकम्, सुगा = सुष्ठुगन्तव्यान्, कर्त = कुरुत' इति। आथर्वणिकमन्त्रव्याख्यानावसरेऽपि सायणाचार्येणैवमेवाभ्यधायि–**'हे देवाः, वः = युष्माकम्, सदनाः = सदनानि, सुगा = सुगानि = सुगमनानि = सुखेन गन्तव्यानि सन्तु। सुपूर्वाद् गमेः 'सुदुरोरधिकरणे' इति डः'** इति।

एतेषां श्रुतिसन्दर्भाणां गवेषणया निष्कृष्यते यद् वैदिकसंहितासु क्रियाविशेषणभूतोऽयं 'सुगा' इति शब्दो ब्राह्मणारण्यकोपनिषद्भ्य आरभ्य लौकिकसंस्कृतवाङ्मयं यावत् 'स्वगा' इति रूपेण निपाताभिख्यामधिकृतवान्। 'स्वगा' इति निपात एव 'स्वागतम्' इत्यत्रापि अवयवभूतः। तथा हि कालिदासः–'**प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार[9]**' इति।

(४७) **स्वधा** [= पितृभ्यो हविर्दाने]।

'स्वधा' इति निपातो धातूपसर्ग–सु + √अद् [= भक्षणे] > स्वधा–समाहारभूतः। निपातस्यास्य विविधा व्याख्या उपलभ्यन्ते संस्कृतवाङ्मये। कुत्रचिदयं ज्योतिःशब्दार्थे विनियुक्तो दृश्यते[10], कुत्रचिद् रथशब्दार्थे[11], कुत्रचिद् अन्नार्थे[12], कुत्रचित् स्वात्मावधारणार्थे[13]; क्वचिद् उदकार्थे[14] कुत्रचिद् आशीर्वादार्थे[15], कुत्रचित् तृप्तौ[16], अमृतार्थे[17] च।

व्युत्पत्तिदृष्ट्याऽप्यस्य निरुक्तिः पुरुरूपा एवाकारि शाब्दिकैः। अथर्ववेदे सायणाचार्येण व्याख्यातोऽयं निपातः–**'स्वेभ्यो धीयते, स्वस्मिन् वा धीयते इति स्वधा। घञर्थे**

---

१. तै० सं०–३।४।३। २. ऋ० सं०–६।६४।
३. अथर्ववेदः–७।९७।४, निरु० १२।४।
४. शु० यजुर्वेदः–८।१८। ५. मैत्रा० सं०–१।३।४८।
६. काठकसं०–४।१२, बौधायनश्रौतसू०–१।१९।
७. कपिष्ठलसं०–३।१०। ८. ऋ० सं०–१०।६३।७।
९. मेघसंदेशः–४।
१०. ऋ० सं०–१।१।१३–स्कन्दभाष्यम्। ११. तदेव–४।२६।४, १०।२७।१९।
१२. तदेव–६।२।८, ६।२१।३, १०।२७।१९, छा० ब्रा० २।३।१५।
१३. तै० सं०–१।३।४–भट्टभास्करभाष्यम्। १४. निघ०–१।१२।
१५. मनुस्मृतिः–३।२५२–कुल्लूकभट्टः। १६. तदेव–३।२५४।
१७. अथर्ववेदः–२।२९।७।

**कविधानम्'** इति। व्याख्यायामस्यां √धा [=धारणपोषणयोः] इति धातोर्योगः स्वीकृतः सायणेन। रामायणव्याख्यात्रा गोविन्दराजीयेन तु 'स्वधा' इति निपाते सूपसर्गस्य √अद् [=भक्षणे] इति धातोश्च समाहारोऽङ्गीकृतः—**'स्वधभोजिनामिति ह्रस्व आर्षः। स्वधाभोजिनां पितॄणाम्। स्वधा=पितृभक्ष्यं कव्यम्[१]'** इति।

महाभारतव्याख्यात्रा सर्वज्ञनारायणेन तु 'स्वधा-सुधा' इत्यनयोरर्थसाम्यं सामानाधिकरण्यञ्चोरीकृतम्[२]। तद्यथा-**'सुधाहारेषु=देवेषु। सुधा=अमृतं हव्यरूपम्। स्वधा=कव्यरूपममृतम्'** इति। नीलकण्ठ-अर्जुनमिश्राभ्यां तु 'स्वधा' इत्यत्र घटकत्वेन 'सु + अद्' इति भक्षणार्थको धातुरेवाङ्गीकृतः। तथा हि नीलकण्ठः-**'सुधेति सर्पपितृ-देवानां तत्तद्योग्याहाररूपं पयः क्षरतीत्यर्थः। सुधा सर्पस्य भोजनम्। स्वधाभोजिनः पितरः'** इति।

मनुस्मृतावेव 'स्वदितम्<सु+√अद्>स्वदितम्' इति पदमपि दृश्यते। तद्यथा—**'पित्र्ये स्वदितमित्येव वाच्यं गोष्ठे तु सुश्रुतम्[३]'** इति। श्लोकोऽयमुपबृंहयता कुल्लूकभट्टेन लिखितं यत्—'पित्र्ये=निरपेक्षपितृमातृदेवताक एकोद्दिष्टश्राद्धे तृप्तिप्रश्नार्थं स्वदितमिति वाच्यम्। तथा च गोभिल-साङ्ख्यायनौ—'स्वदितमिति तृप्तिप्रश्नः'। मेधातिथि-गोविन्दराजौ तु श्राद्धकालागतेनान्नेनापि स्वदितमित्येव कर्तव्यमिति व्याचक्षतुः। तथा च—

**श्राद्धे स्वदितमित्येतद्वाच्यमन्नेन केनचित्।**
**नानुरुद्धमिदं विद्वद्वृद्धैर्न श्रद्दधीमहि[४]** ॥ इति।

वाचस्पत्यभिधानकारेणापि स्वीकृतः 'स्वधा' इति पदे 'सु+√अद्>स्वद + आ>स्वदा>स्वधा' अनयोः संहतिः। अमीभिः स्वतःप्रमाणभूतैः तथ्यैरेतद् वक्तुं पार्यते यत् 'स्वधा' इति निपातस्य विकासस्तु आस्वादनार्थकादुत वा तृप्त्यर्थकात् 'स्वदितम्' इति पदग्रामादेव सञ्जातः।

'स्वधा' इति निपातो नामधातुत्वेनापि व्यवहृतोऽवलोक्यते। तथा च भागवते-**'अमृतमयगभस्तिभिः स्वधयति[५]'** इति। स्वधया[६], स्वधाभिः[७], स्वधायै[८], स्वधावः[९]-प्रभृतिकारक-लिङ्ग-सङ्ख्या-विभक्तिभिरन्विताः शब्दाः प्रख्यापयन्ति निपाताना-मर्थवाचकत्वम्।

---

१. रामायणम्—७।२३।२९।
२ महाभारतम्—उद्योगप०—१०२।१३।
३. मनुस्मृतिः—२।२५४।
४. वाचस्पत्यम्—पृ० ५३७८।
५. भागवतम्—५।८।२५।
६. ऋ० सं०—४।२६।४, १०।२७।१९।
७. तदेव—१।११३।१३।
८. छां० ब्रा०—२।३।१०—गुणविष्णुभाष्यम्।
९. ऋ० सं०—६।२१।३।

प्राचीनभारोपीयार्यभाषास्वप्यस्य विकास एवमेवास्मिन्नेवार्थे दृश्यते—'स्वधा > अवे० हुदातो > ग्री० स्वोदुस् > ले० स्वुअविस > गाथि० सिदुस् > प्रा० सैक्स० स्वोति > ऐंग्लोसै० स्वीटे > इंग्लि० स्वीट'[1] इति।

**(४८) स्वस्ति** [=क्षेमे]।

क्षेमार्थकोऽयं **'स्वस्ति'** इति निपातो निपातद्वय—सु+अस्ति > स्वस्ति—समाहारभूतः। 'अस्ति' इति शब्दो विभक्तिप्रतिरूपको निपातः। तथा चोचिवान् जिनेन्द्रबुद्धिः—**'अस्तिशब्द इत्यादिः—विभक्तिस्वरप्रतिरूपकाश्चेति निपाता भवन्ति' इति निपातसंज्ञकं तिङन्तसदृशं प्रातिपदिकमेतत्, न तिङन्तः। एतच्च तिङन्तेन समानार्थम्। यथा—अस्ति क्षीरा ब्राह्मणी। भिन्नार्थकश्च यथा—धने वर्तते, यथा—अस्तिमानिति। धनवानिति गम्यते। तदिह विशेषस्यानभिधानादुभयस्यापि ग्रहणम्'**[2] इति। हरदत्तस्याप्ययमेवाग्रहः—**'अस्ति-नास्तिशब्दौ निपाताविति, तेन प्रातिपदिकाधिकारो न बाध्यते इति भावः'**[3] इति। प्रतिपादनाभ्यामेताभ्यां स्वत एव साध्यते अनयोर्निपातत्वम्।

इत्थम्—सु+अस्ति > स्वस्ति—इति निपातद्वयसमुदितो निपातो विविधेष्वर्थेषूपलभ्यते। कुत्रचिदयम् अविनाशार्थे दृश्यते[4], कुत्रचिच्छ्रेयोर्थे[5], कुत्रचिद् वाग्देवतार्थे[6], कुत्रचिद् अभिपूजितार्थे[7], कुत्रचित्तु समृद्ध्यर्थे[8], कुत्रचिद् अङ्गीकारे[9], कुत्रचिच्चाशिषि[10], कुत्रचिद् अनुग्रहार्थेऽपि[11]।

प्रातिपदिकसंज्ञयाऽलङ्कृतोऽयं निपातो कारकविभक्तिभागपि दृश्यते। 'स्वस्तिम्[12]', 'स्वस्तिभिः[13]', 'स्वस्तये[14]', स्वस्तौ[15]' प्रभृतिविभक्तिभाजो निपाताः प्रख्यापयन्ति निपातानामर्थवाचकत्वम्। प्राकृतभाषायां तु किलास्य विकासः—स्वस्ति > सोत्थि > सत्थि[16]—इति रूपेणोपलभ्यते।

---

१. द्र० अवेस्ता—पृ० ५१, संस्कृत इंग्लिश डिक्श०—पृ० १२७९; ए कम्पैरे० ग्रा० आफ सं० ग्री० एण्ड लैटिन—पृ० १७५।
२. न्यासः—४।३।५६।
३. पदमञ्जरी—४।४।६०।
४. ऋ० सं० १।११६।६, तै० सं०—१।५।३, छा० ब्रा०—२।६।१९।
५. ऋ० सं०—३।३९।९।
६. तदेव—१०।७।६०।
७. निरुक्तम्—४।२१।
८. भागवतम्—४।२४।३३।
९. वाचस्पत्यम्—पृ० ५३८६।
१०. तदेव—पृ० ५३८६।
११. आश्वलायनगृ० सू०—१।४०।
१२. तै० सं०—३।२।४।
१३. छां० ब्रा०—२।६।१९।
१४. ऋ० सं०—२।२।६, तै० सं०—१।२।३।
१५. ऋ० सं०—२।३८।१।
१६. मालविकाग्निमित्रम्—पृ० ४३।

**(४९) स्वाहा [ = स्वयमेवाहेत्यर्थे ]।**

निपातद्वय—सु + आह > स्वाहा—समाहारभूतस्य 'स्वाहा' इति निपातस्य विविधा अर्थाः, विविधा निरुक्तयश्चोपलभ्यन्ते। भट्टभास्करमिश्रो ब्रवीति यद् 'आह' इति तिङ्प्रतिरूपको निपातः। 'स्वाहा' इति समुदायात्मा निपातः। तद्यथा—'एवं कर्तव्यमिति स्वयमेव सरस्वत्याह। विभक्त्यन्तसमुदायात्मा निपातः 'स्वाहा' इति। संस्कारविशेषानवधारणात् नावगृह्यते[1]' इति। नारायणभट्टेनाप्युक्तम् (कु० सं० ७।८२) **'आह'** इत्यस्य निपातत्वम्—

**पञ्चानां ब्रुव आद्यानामाहादेशः स्मृतो लटि।**
**आहेत्येतदतीते तिङ्प्रतिरूपकमव्ययम्** ॥ इति।

स्वाहाकारस्य जन्म कथमभूदिति तैत्तिरीयाः समामनन्ति—**'तं वागभ्यवदज्जुहुधीति। सोऽब्रवीत्—कस्त्वमसीति? स्वैव ते वाग् इत्यब्रवीत्। सोऽजुहोत्—स्वाहेति। तत्स्वाहाकारस्य जन्म**[2]' इति। एवं वाक्प्रजापत्योरुक्तिप्रत्युक्तिरूपं वाक्यं 'स्वाहा' शब्देनोक्तम्। प्रजापतेः स्वकीयया वाचा यः संवादोऽभूत्, तस्मादस्य 'स्वाहा' इति निपातस्य व्याख्यानं तु वाक्कर्तृकवचनरूपेऽर्थे सायणाचार्येण कृतम्—**'इति स्वाहा= सरस्वती अब्रवीद् इत्यर्थः। मन्त्रमध्यवर्तिनां स्वाहाशब्दानां प्रदानार्थत्वाभावात्। वस्तुतस्तु स्वाहाशब्दस्य वाक्कर्तृकवचनरूपेऽर्थे निरुक्तत्वात् स्वा=स्वकीया प्रजापतिसम्बन्धिनी, वाग् आह=अब्रवीद् इति स्वाहाशब्दस्य अर्थ उक्तः। अन्तिमस्वाहाशब्दस्य प्रदानार्थता। स्वाहा=इदम् आज्यं स्वाहुतम् अस्तु**[3]' इति।

यास्काचार्येण विविधा व्युत्पत्तयो विहिता स्वाहाशब्दस्य। तद्यथा—**'सु आहेति वा स्वा वागाहेति वा एवं प्राहेति वा स्वाहुतं हविर्जुहोतीति वेति**[4]' इति। महाभारते तु वाग्रूपिण्या धेनोश्चतुर्षु स्तनेषु किलैकः स्तनः 'स्वाहाकारः[5]' इत्येवं रूपेणाम्नातः 'स्वाहा' इति निपातः। तद्यथा—

**गौरिव प्रसवत्यर्थान् रसमुत्तमशालिनी।**
**सततं स्यन्दते ह्येषा शाश्वतं ब्रह्मवादिनी** ॥ इति।

उपबृंहितश्च श्लोकोऽयं नीलकण्ठेन—**'वाचं धेनुमुपासीत। तस्याश्चत्वारः स्तनाः स्वाहाकारः, स्वधाकारः, हन्तकारः, वषट्कार इति श्रुतेः'** इति। गोभिलीयगृह्यसूत्रव्याख्यात्रा भट्टनारायणेनापि वाचश्चतुर्विधत्वमुक्तम्—

**स्वाहाकार-वषट्कार-नमस्कारा दिवौकसाम्।**
**स्वधाकारः पितॄणाञ्च हन्तकारो नृणां मतः**[6] ॥ इति।

---

१. तै० सं०—१।१।११।
२. तै० ब्रा०—२।१।२।३।
३. अथर्ववेदः—७।९७।८।
४. निरुक्तम्—८।२०।
५. महाभारतम्—आश्वमेधिकप०—२१।२२।
६. गोभिलीयगृह्यसूत्रम्—१।४।१२।

अमीभिः सन्दर्भैरेतन्निर्णीयते यद् वाक्कर्तृकस्तुतौ 'स्वाहा' इति निपातस्य विनियोगः कृत आसीत् । मोनियरविलियममहोदयैस्तु[1] 'स्वाहा' इति निपातस्यार्थः 'शोभनवाक्' इति कृतः । हेतुत्वेन सः 'दुराहा—दुर् + आह > दुराहा' इति शब्दं प्रस्तौति । अनेनानयोः—स्वाहा-दुराहा-इति शब्दयोः सापेक्ष्यमप्युक्तम् ।

एवं स्वरूपतोऽवयविभूतोऽयं निपातः कुत्रचिद् होमप्रदाने विनियोजितोऽवलोक्यते[2], कुत्रचिद् दानार्थे[3], कुत्रचिद् वाक्कर्तृकोक्तौ[4], कुत्रचित् प्रक्षेपार्थे[5], कुत्रचिच्च वाचः स्तनार्थेऽपि[6] । अर्थदृष्ट्याऽयं निपातो भारतीयवाङ्मयस्य प्राणभूतः ।

**(५०) स्वित्** [ = प्रश्ने ] ।

'स्वित्' इति निपातोऽपि निपातद्वय—सु + इत् > स्वित्—अवयविभूतः । अर्थविकासदृष्ट्याऽयं बहूनर्थानभिव्यनक्ति । कुत्रचिदयं निपात एवार्थे प्रयुक्तोऽवलोक्यते[7], कुत्रचित् खल्वर्थे[8], कुत्रचित् प्रतिशब्दार्थे[9], कुत्रचिदयं विकल्पार्थे[10], कुत्रचिच्चार्थे[11], कुत्रचित् प्रश्ने[12], कुत्रचिद् विमर्शे[13], कुत्रचित् पादपूरणे[14], कुत्रचिच्च पृच्छायामपि[15] । जिज्ञासार्थत्वेन ऋग्वेदेऽर्थभूयस्त्वायाप्ययं प्रयुक्तो दृश्यते । तद्यथा—

**तिरश्चीनो विततो रश्मिरेषामधः स्विदासीदुपरि स्विदासीत् ।**
**रेतो धा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयतिः परस्तात्**[16] ॥ इति ।

निपातान्तराणां सङ्घटनदृष्ट्याऽप्यस्य गरीयान् महिमा दृश्यते । किंस्वित् < किम् + सु + इत् > किंस्वित्, उदस्वित् < उत + सु + इत् > उदस्वित्, आहोस्वित् < आह + उ + सु + इत् > आहोस्वित्—प्रभृतयो निपाता अस्यावयविभूता इति । अशोकाभिलेखीयप्राकृतभाषायां तु 'स्वित्' निपातः 'सु' इति रूपेणोपलभ्यते—स्वित् > सु[17]—इति ।

अवेस्ताभाषानिपातेन सहास्य संवादोऽवलोक्यते—'सु + इत् > स्वित् > अवे०[18] ह्वीसत्' इति ।

---

१. संस्कृत इंग्लि० डिक्श०—पृ० १२८४ ।
२. ऋ० सं०—१।१३।१२, तै० सं०—३।१।१०, शतपथब्रा०—३।८।२।२१ ।
३. ऋ० सं०—३।३२।१५, शतपथब्रा०—३।८।२।२१ ।
४. तै० सं०—१।२।५ ।
५. तै० सं०—१।१।१२ ।
६. महाभारतम्—आश्वमेधिकप०—२१।२२ ।
७. ऋ० सं०—१।१५०।१ ।
८. तदेव—१।१६१।१२ ।
९. तदेव—१।१६४।१७ ।
१०. तदेव—६।१७।३ ।
११. शुक्लयजुर्वेदः—३३।७४ ।
१२. तै० सं०—७।१८।४५, वाजसनेयिप्रा० २।५३ ।
१३. शब्दार्थचिन्तामणिः—९७९ ।
१४. अमरकोषः—३।२५१ ।
१५. नानार्थसंग्रहः—९७।६८ ।
१६. ऋ० सं०—१०।१२९।५ ।
१७. अशोक के अभिलेख-धौली—२।५ ।
१८. शुक्लयजुर्वेदः—२७।२५ ।

(५१) ह [ = ऐतिह्ये ]।

'ह' इति निपातो यद्यपि बहुविधेष्वर्थेषूपलभ्यते वैदिकवाङ्मये; किन्तु ऐतिह्यमर्थोऽस्य प्रधानत्वेनोरीकृतो वैदिकमहर्षिभिः। 'इतिहासः < इति+ह+आस > इतिहासः' इति पुरावृत्तवाचकेऽव्ययविभूते शब्दे 'ह' इति निपातस्यैव प्रामुख्येणार्थ-समर्पणमवलोक्यते। वैदिकसन्दर्भैरप्ययं निर्णयः प्रमाण्यते। तथा हि शुक्लयजुर्वेदे-**'आपो ह यद् बृहतीर्विश्वमायन् गर्भं हविषा विधेम'** इति। संश्लोकयति च मन्त्रममुम् उव्वटाचार्यः-**'पुराकल्पद्योतको ह इति निपातः'** इति। शतपथेऽप्येवमेवाम्नातम्-**'दृप्तबालाकिर्हानूचानो गार्ग्य आस[1]'** इति। व्याख्यातश्च मन्त्रोऽयं वासुदेवेन-**'हशब्द ऐतिह्यार्थकः'** इति।

एवं प्राधान्येनैतिह्यार्थे रूढोऽयं निपात इतरेष्वपि विविधेष्वर्थेषूपलभ्यते। कुत्र-चिदयं चार्थेपरामृष्टोऽवलोक्यते[2], कुत्रचिद् वार्थे[3], कुत्रचिद् एवशब्दार्थे[4], कुत्रचित् पाद-पूर्तौ[5], कुत्रचित् खेदार्थे[6], कुत्रचित् पुनरावृत्तौ[7], कुत्रचिद् आश्चर्ये[8], कुत्रचिच्च स्फुटार्थेऽपि[9]।

परवर्तिकालिकसंस्कृतवाङ्मये त्वस्य व्यवहारः प्रायेण पादपूर्तावेवोपलभ्यते। अस्य प्रधानो हेतुस्तूत्तरकालिकस्य संस्कृतवाङ्मयस्य सूत्रबद्धता पद्यबद्धता चाङ्गी-क्रियते। निपातान्तराणां प्रसवेऽप्ययमवयवत्वेन परामृष्टोऽवलोक्यते। तद्यथा—'हो < ह+उ > हो, हवै < ह+वै > हवै, हवा < ह+वा > हवा, हैव < ह+एव > हैव, ह स्म < ह+स्म > ह स्म, नह < न+ह > नह—प्रभृतयो निपाता 'ह' निपातस्यावयविभूताः।

(५२) हा [=विरहातुरार्थे ]।

'हा' इति निपातो निपातद्वय—ह+आ > हा—अवयविभूतः। 'हा' इति निपातस्य विकासो वैदिकः। ऋग्वेदसंहितायामयं नोपलभ्यते। अस्यावयवभूतो 'ह' इति निपातस्तु वैदिकसाहित्यस्य प्राणभूमिरिव लक्ष्यते। तैत्तिरीयोपनिषदि तु 'हावु < ह+अव+उ > हावु' इति निपात आश्चर्ये प्रयुक्तोऽवलोक्यते। तथा च मन्त्रः—**'एतत् साम गायन्नास्ते हावु हावु हावु'[10]** इति। शङ्कराचार्येण व्याख्यातोऽयं मन्त्रः—'हावु इति अहो इत्येतस्मिन्नर्थेऽत्यन्तविस्मयख्यापनार्थम्' इति।

लौकिकसाहित्येऽयं निपातः प्रायेण वीप्सया व्यवहृतोऽवलोक्यते। तथा च महाभारते-**'हा हेति कुर्वतस्तस्य प्रहृष्टास्ता वराङ्गनाः[11]'** इति। आचार्यनीलकण्ठेनैवं

---

१. शतपथब्रा०-१४।२।१।१। २. ऋ० सं०-१।६३।१। ३. तदेव-१।७५।३।
४. तदेव-६।४८।२२। ५. तदेव-६।६४।५। ६. शतपथब्रा०-१।१।४।१४।
७. तदेव-१।२।३।१२। ८. गीता-२।९। ९. भागवतम्-११।२०।५।
१०. तैत्तिरीयोपनिषद्—३।१०।५—शाङ्करभाष्यम्।
११. महाभारतम्—विरा० प०—२०।३३।

व्याख्यायि श्लोकोऽयम्—'हा राधे ! हा चन्द्रमुखि ! इत्यादिशब्दैः स्वस्य विरहातुरत्वं कुर्वतः' इति । मन्ये यत् 'हा' इति निपातो मनोभावमूलकः । विषाद-क्षोभ-मोहप्रभृतिमनोभावैः क्षुब्धो मानवोऽन्तर्निगूढं कषायितं मानसव्यापारं 'हा-हा' इति निपाततितिभिरुह्यते । अत एव 'हा' सदृशानां निपातानामसकृदाम्रेडनं भवति । सभाजयति च चतुर्धरः—

**विषादे विस्मये हर्षे खेदे दैन्येऽवधारणे ।**
**प्रसादने सम्भ्रमेऽपि द्विस्त्रिरुक्तं न दुष्यति**[1] ।। इति ।

वस्तुतो महाकविभवभूतिना साधूक्तं यत्—'शोकदशायाम्, क्षोभदशायाम्, विषाददशायाञ्च हृदयं प्रलापैर्धार्य्यते—**'शोकक्षोभे च हृदयं प्रलापैरेव धार्य्यते**[2]' इति । अत्र **'प्रलापैः'** इति पदमन्यथाकृत्वा 'निपातैः' इति वक्तुं पार्यते । यतो हि शोके क्षोभे च हृदयं हा-हेति-प्रभृतिनिपातैरेव धार्य्यते । अत एवैतादृशानां निपातानां विनियोगो मनोभावमूलकः प्रतिभाति ।

(५२) हि [ = प्रसिद्धौ ] ।

'हि' इति निपातो रूपतोऽणीयान्, किन्त्वर्थतो महीयान् । आ वैदिकवाङ्मयाल्लौकिकवाङ्मयं यावत् किलायं समवस्थ एव दृश्यते । अर्थस्त्वस्योत्तरकालिकसंस्कृतसाहित्ये सङ्कुचितोऽवलोक्यते । हेर्निपातस्य वैदिकान्याभिधानिकवैचित्र्याणि प्रदर्शयन्नाह माधवभट्टः[3]—

**वैश्वानराय मीह् लुषे व्याचिख्यासति माधवः ।**
**आदौ प्रदर्शयन् वृत्तिं तिङां ये हिभिरन्विताः ।।**
**वाक्यार्थस्य परार्थत्वे हिशब्दोऽयं प्रयुज्यते ।**
**उद्गृह्णाति च वाक्यार्थमिन्दवो वामुशन्ति हि ।।**
**उद्गृह्यमाणो वाक्यार्थो न स्वस्मिन् पर्यवस्यति ।**
**कामयन्ते हि वां सोमास्तस्मादागच्छतं युवाम् ।।**
**सुते हि त्वा हवामहे स हि नः प्रमतिर्मही ।**
**न हि त्वा रोदसी उभे तिङर्थोऽत्र हिना स्फुटः ।।**
**वाक्यान्तरेणान्वयार्थमप्ययं हिः प्रयुज्यते ।**
**असत्यपि च हेतुत्वे तथैवोद्ग्रहणे सति ।।**
**युक्ष्वा हि देवहूतमानुषो वाजं हि वस्वम् ।**

---

१. दुर्गासप्तशती—५।१२ । २. उत्तररामच०—३।२९ ।
३. ऋग्वेदानुक्रमणी—३।५।१–१३ ।

न हि ते क्षत्रं न सहो उरुं हि राजा वरुणः ॥
आश्चर्यं हिः प्रसिद्ध्यां च तथौचित्ये च दृश्यते ।
परा हि मे विमन्यव आ हि ष्मा सूनवे पिता ॥
न हि वामस्ति दूरके आश्चर्यार्थं इमे ह्ययः ॥
स हि श्रवस्युस्त्वं ह्यग्ने प्रसिद्ध्यां ही श्रुताविमौ ।
तथा त्वं ह्यग्ने सदमिद् बहवः सन्ति तादृशाः ॥
एवां ह्यस्य सूनृतेति तृचे दृष्टा ह्यस्त्रयः ।
औचित्यार्था भवन्त्येते सन्त्यन्येऽपि च तादृशाः ॥
हेरर्थं यो विजानाति न स मन्त्रेषु मुह्यति ।
तेन प्रदर्शितोऽस्माभिर्हेरर्थश्च प्रपञ्चितः ॥ इति ।

इमे माधवभट्टेन परिसङ्ख्याता अर्था वैदिकभाषायां लब्धप्रसराः । हन्त ! लौकिकसंस्कृतेऽर्थानां सङ्कोचः ।

रूपदृष्ट्या त्वस्य विकासः—ही[1] < हि—रूपेण दीर्घान्तो लौकिकसाहित्ये द्रष्टुं शक्यते । मन्ये यत् प्राकृतभाषाप्रभावोऽयम् । 'हि' इति ह्रस्वान्तो निपातो विकसन् सन् हिन्द्यादिभाषासु 'जी' इति रूपेणापि दृष्टचरः । यतो हि अवेस्तायां[2] तु 'हि' निपातः 'जि' इति रूपं गृह्णात्येव—'हि > अवे० जि > हिन्दी—जी' इति विकासक्रमोऽवधातव्यः ।

एवं कतिपयलब्धव्युत्पत्तिस्वरूपाणां निपातानाम् ऐतिहासिको भारोपीयार्यभाषाभिः संवादमूलकस्तुलाबोधकश्चानुसन्धानं प्रस्तुतम् । अमीषां व्युत्पत्तिमूलकानां निपातानां पर्यवेक्षणेनैतद् वक्तुं प्रभवामो यत् कामं हि निपातोपसर्गा नाम-सर्वनामशब्दा इव व्युत्पत्तिभाजो लिङ्ग-संख्या-विभक्तिमन्तश्चासन् । बहुतिथे पर्युषिते काले तेषामवयवबोध्यार्थाः संक्षेपरुचिभिर्निर्वचनकर्तृभिरथ च शाब्दिकैर्विस्मारिताः । प्रतिपादनस्यास्यानुपदं समर्थनं करोति माधवभट्टः—

शाकल्यः पाणिनिर्यास्क इत्यृगर्थपरास्त्रयः ।
यथाशक्त्यनुधावन्ति न सर्वं कथयन्त्यमी[3] ॥ इति ।

शब्दराशेरन्योन्यसंसक्तवृत्तिमत्त्वादेवैतादृशं प्रतिपादनं व्यधायि माधवभट्टेन । अत एव शाब्दिकनिकाये पदे पदे शाब्दिकैरुद्घोष्यते यत्—

अनन्ताः खल्वनन्तार्थाः स्वराद्याश्चादयोऽपि च ।
असत्त्वपरतैवात्र चादीनां नियता मता[4] ॥ इति ।

---

१. नैषधीयम् ।
२. अवेस्ता—पृ० ३७ ।
३. ऋग्वेदानुक्रमणी—८।१।७ ।
४. प्रक्रियासर्वस्वम्—सुब्विधिखण्डः ।

**गणपाठेष्वनुपलब्धा निपाताः**

प्रसङ्गेऽस्मिन् केचनैतादृशा निपाता विमर्शकोटिमवतरिष्यन्ति, येषां परिसंख्यानं पाठो वा तत्तच्चादिगणेष्वसन्निविष्टोऽवलोक्यते। चादीनामियत्तानिर्धारणसङ्कल्पितमानसैः शाब्दिकशिरोमणिभिः पदे पदे अघोषि यत्—'**शेषा ज्ञेयाः प्रयोगतः**[1]' इति। आचार्यहर्षकीर्तिनापि निरदेशि यत्—

**उपसर्गस्य संयोगाद् भिन्नभिन्नार्थवाचिता।**
**धातूनां या भवत् सा तु विज्ञेया कविरूढितः**[2] ॥ इति।

अर्थात् कविरूढितः = महाकविप्रयोगानाधारीकृत्यैव निपातसङ्ख्याया निपातार्थानाञ्चेयत्ता निर्धारणीयेति। तत्तद् गणपाठास्त्वौपलाक्षणिका एव। अत एवापभ्रंशकाव्यत्रयीप्रणेत्रोक्तं यत्—

**वाचस्पतेरपि मतिर्न प्रभवति दिव्ययुगसहस्रेण।**
**देशेषु ये प्रसिद्धास्तान् शब्दान् सर्वतः समुच्चेतुम्**[3] ॥ इति।

महाभाष्यकर्तुः—'तत्रोपलब्धौ यत्नः क्रियताम्—महान् शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः, साङ्गाः सरहस्या बहुधा भिन्नाः, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाऽथर्वणो वेदः, वाकोवाक्यम्, इतिहासः, पुराणम्, वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः[4]' इत्युक्तिः सङ्केतयति तत्तद् वर्गीयाणां शब्दानामनैयत्यविषये।

निपातानां पाठे व्याख्यायाञ्च भूयान् स्वैराचारोऽवलोक्यते। समर्थयते शन्तनुः—

**पाठा व्याख्या निपातानां दृश्यन्ते च स्वैरिणः।**
**प्रयोग एव भगवांस्तानवस्थापयत्यपि**[5] ॥ इति।

सन्दर्भाणामेतेषामनुसन्धानेनैतद् वक्तुं पार्यते यद् न हि गणपाठैः पदसङ्ख्या प्रमाण्यते, अपि तु वाङ्मयनिरीक्षणादेव प्रमाणयितुं शक्यते। अत एव माधवभट्टेनोक्तं यत्—

**ऋचां निरीक्षणादेते निपाताः शतमुद्धृताः।**
**त्रिंशच्च सूक्ष्मेक्षिकया समुद्धार्यास्तथापरे**[6] ॥
**ग्रन्थेऽस्ति पदसंख्येति यत्नो न भवतस्ततः।**
**पदसंख्या च भवता वाच्या ग्रन्थं निरीक्ष्य तम्**[7] ॥

---

१. उपसर्गवृत्तिः—६, भरतमल्लिककृता।
२. सारस्वतीयो धातुपाठः—हर्षकीर्तिविरचितः।
३. अपभ्रंशकाव्यत्रयी—भूमिका—पृ० ९४।
४. महाभाष्यम्—पस्पशाह्निकम्—पृ० ५४।
५. दुर्गासप्तशती ८।३५ शन्तनुव्याख्या।
६. ऋग्वेदानुक्रमणी—३।१।१२।
७. तदेव—८।४।१४।

आभ्यां माधवभट्टश्लोकाभ्यां निष्कृष्यते यत् पदसंख्यां मातुं कृत्स्नं वाङ्मयमेव प्रमाणत्वेनोरीकरणीयम्, न तु गणपाठाः। गणपाठास्तु अङ्गुलिनिर्देशं कुर्वन्ति। अत एव भोजव्याकरणकर्त्राऽप्युक्तं यत्—'निपाता निपातगणतस्तु ग्राह्या एव, तदतिरिक्ता अपि निपाताः सन्तीति। तद्यथा—

**निपातगणतो ग्राह्या निपाता अपरेऽपि च।**
**अव्ययान्यपराण्येवं ग्राह्याण्यव्ययकामतः[1]॥**

एवं महाकविव्यवहारेषु लोकमानसनिवहेषु च संरक्षिताः सम्पोषिताश्च बहवो नाम-आख्यात-उपसर्ग-निपाता लोकनिरीक्षणादेवावगन्तुं क्षमा भवन्तीति। साधूक्तं कृष्णाचार्येण प्रक्रियाकौमुद्यां यत्—'प्रयोगवशादित्यनेनापठिता अपि—सुदि-वदि-रोदसी-चिराय-इत्यादयो लोके प्रयुज्यमाना निपातत्वेन ज्ञेयाः' इति। अर्थाद् ग्रन्थेष्वनुपात्ताः, लोकमानसैः पुरस्कृताश्चापि शब्दा लोकनिरीक्षणाधीनाः। अत एव गुरुणा तीर्थदर्शिनाऽप्युक्तं यत्—**'त्रयो लोकाः'** इति।

वस्तुतः शब्दागमस्य स्रोतस्तु चतुर्मुखं प्रवहति—पाठ-सूत्र-लोक-आगमरूपेण। अर्थात् पाठस्थिताः, सूत्रस्थिताः, लोकस्थिताः, आगमस्थिताश्चापि।

१. पाठस्थितास्तावत्–पूर्वाचार्याणां गणपाठेषु स्थिताः—च, वा, ह, नु प्रभृतयः।

२. सूत्रस्थिताः—गणपाठेषु न दृष्टाः—भोस्, भगोस्, अघोस् प्रभृतयः।

३. लोकस्थिताः—गणपाठेसु सूत्रेषु च न दृष्टाः, महाकविप्रयोगेषु दृष्टाः—वव, आष, ममत्–प्रभृतयः।

४. आगमस्थिताः—भाषाविषयेषु = गण-धातुपाठ-सूत्र-लोकेषु न दृष्टाः, वेदेष्वेव प्रयुक्ताः—विश्वाहा, चिश्वा, इत्यादयः।

एतादृश्यां शब्दस्रोतोवहायां पदरत्नान्यन्वेष्टव्यानि भवन्ति। अस्मिन्नेव सन्दर्भे शन्तनोः श्लोकस्य स्वारस्यम्—

**पाठा व्याख्या निपातानां दृश्यन्ते च स्वैरिणः।**
**प्रयोग एव भगवांस्तानवस्थापयत्यपि॥** इति।

एवं रीत्याऽत्रावस्तात् केचनैतादृशा निपाता विमर्शपदवीमवतरिष्यन्ति, ये गणपाठेष्वसन्निविष्टाः सन्तः सूत्र-लोक-आगमेषु लब्धप्रतिष्ठाः।

**(१) अद्य** [ = अधुनार्थे ]।

'अद्य' इति निपातो वर्तमानकालार्थे प्रयुक्तो दृश्यत ऋग्वेदसंहितायाम्। तथा हि मन्त्रः—**'अद्या देवा उदिता सूर्यस्य निरंहसः'[3]** इति। व्याख्यातश्च मन्त्रोऽयं

---

१. भोजव्याकरणम्–निपातप्र० ५। २. प्रक्रियाकौमुदी–भूमिका–पृ० ३१।
३. ऋ० सं०–१।११५।६–सायणभाष्यम्।

सायणाचार्येण—'अद्य=अस्मिन् काले। 'अद्य' 'निपातस्य च' इति संहितायां दीर्घत्वम्' इति। 'अद्य'इति निपातस्य व्यवहारस्तु निपातत्वेन पाणिनिमनु नावलोक्यते। हेमचन्द्राचार्यस्तु 'द्य' इति निपातं हिंसाप्रतिलोम्ययोरित्यर्थे पठति स्म[१]। माधवभट्टेन तु 'अद्य-अथ' इति निपातौ पर्यायत्वेन पठितौ—

**अथाद्येति समानार्थौ तौ पठन्ति च बह्वृचाः।**
**अवघातेन महता तौ यथा स्तः पृथक् पृथक्**[२]॥ इति।

**(२) अन** [ = नानार्थे ]।

'अन' इति नानार्थको निपातः सङ्ख्यावाचकत्वेनापि परामृष्टः। यथा—अन+एकः>अनेकः—इति। विविधेषु गणपाठेष्वयं निपातकोटौ न दृश्यते। तैत्तिरीयारण्यकेऽयं निपातत्वेन व्याख्यातः। तथा हि—**'अनवर्णे इमे भूमी। इयं चासौ च रोदसी**[३]**'** इति। उपबृंहयति च भट्टभास्करः—**'अनवर्णे=अनेकरूपे—इयं वै रजता, असौ हरिणी इति दर्शनात्। 'अन' इति निपातोऽनेकवचनः'** इति। आधुनिकभाषास्वप्ययं निपातो निर्विशेषरूपेणैव व्यवह्रियते। सर्वानन्दस्तु 'अन' इति निपातं कुत्सार्थे व्याख्याति स्म[४]।

**(३) अन्तिके** [ = समीपे ]।

'अन्तिकम्' इति समीपार्थकस्य निपातस्य विकासस्तु 'अन्ति' इति मौलिकनिपातात् सञ्जातः। तथा हि मन्त्रः—**'सर्वं राजभ्यः परमाचिदन्ति**[५]**'** इति। व्याख्यातश्च मन्त्रोऽयं सायणाचार्येण—'अन्ति=अन्तिके=समीपे वर्तते इति शेषः' इति। माधवस्तु 'अन्तिकम्' इति शब्दग्रामं निपातत्वेनोरीकरोति स्म[६]।

ग्रीक-लैटिनभाषानिपातेनाप्यस्य संवादोऽवलोक्यते—'अन्ति>अवे० अन्ते>ग्री० अन्ति>लै० अन्ते[७]'-इति।

**(४) अन्यतरस्याम्** [ = विकल्पे ]।

'अन्यतरस्याम्' इति सप्तम्यन्तो निपातः 'अन्यत्' इति वैदिकसर्वनामशब्दादेव लब्धास्पदम्। 'अन्यत्र< अन्यत् + त्र>अन्यत्र, अन्यथा<अन्यत् + था>अन्यथा, अन्यच्च<अन्यत् + च>अन्यच्च प्रभृतयो निपाताः 'अन्यत्' इति सर्वनामशब्दसमूहिभूताः। 'अन्यतरस्याम्' इति निपातस्तु काममर्वाक्कालिकः। तथा च कैयटः—

---

१. सिद्धहेमशब्दानु०-१।१।३१-स्वोपज्ञवृत्तिः।
२. ऋग्वेदानुक्रमणी-३।६।१। ३. तै० आ०-१।८।२८।
४. नामलिङ्गानुशासनम्-१।६।२१-सर्वानन्दव्याख्या।
५. ऋ० सं०-२।२७।३, १०।११४।४-सायणभाष्यम्।
६. ऋग्वेदानुक्रमणी-३।१।५। ७. संस्कृत-इंग्लि० डिक्श-पृ० ४४।

**'अनेकार्थत्वान्निपातानां समुच्चयेऽन्यतरस्यां शब्दः'**[1] इति। हरदत्तमिश्रस्याप्ययमेवाभिप्रायः—'अनेकार्थत्वान्निपातानामन्यतरस्यां ग्रहणमिह समुच्चयार्थम्, न विकल्पार्थम्'[2] इति। प्राचीनभारोपीयभाषानिपातेनाप्ययं[3] संवदते—'अन्यत् > अवे० अन्य > ग्री० अर्लोस् > लै० अलिउस् > गाथि० अल्जिस् > जर्म० ऐल इति।

**(५) अन्येद्युः** [ = परदिने ]।

'अन्येद्युः' इति निपातस्यापि विकासः 'अन्यत्' इति सर्वनामशब्दादेवोपपन्नः। ऋग्वेदसंहितायां त्वयमानुपूर्व्या नोपलभ्यते। प्रथमतोऽयमथर्ववेदे दृष्टिपथमायाति। तथा हि मन्त्रः—**'अन्येद्युरुभयद्युरेति'**[4] इति। मन्त्रोऽयं व्याचक्षाणेनोक्तं सायणाचार्येण—'अन्येद्युः = अन्यस्मिन् परदिने। उभयद्युः = उभयस्मिन् द्वितीयेऽहनि। 'सद्यः-परुत्परारि' (पा० ५।३।२२) इत्यादिना 'अन्येद्युः', 'उभयेद्युः' इति शब्दौ निपातितौ। उभयद्युरित्यत्र एत्वाभावश्छान्दसः' इति। मल्लिनाथस्याप्ययमेव समयः[5]।

ह्विट्नीमहोदयेनापि शब्दोऽयं निपातत्वेनैव व्याख्यातः[6]। तेनोक्तं यत्—'उभयेद्युः', 'पूर्वेद्युः', 'परेद्युः' प्रभृतयो निपाता अप्येवमेव निष्पन्नाः।

**(६) अपु** [ = पवित्रीकरणे ]।

'अपु' इति निपातः केवलं तैत्तिरीयसंहितायामेवोपलभ्यते। तथा हि मन्त्रः—**'एवास्यापुवायतें यन्मीयते तदेवास्यैतेनाप्यायत्यातुभ्यमिन्द्रः'**[7] इति। व्याख्याति च मन्त्रममुं भट्टभास्करः—**'एतेन चाप्यायनेन यदस्य सोमस्यापुवायते = पूतीभवति। अपशब्दस्य छान्दसो वर्णविकारः। उकारान्तो वा उपसर्गसधर्मा शब्दः। तत्पूर्वकश्च सकर्मको वातिः। वातेः कर्मणि कर्त्तरि वा लकारः। 'अचः कर्तृयकि' इत्यस्य पाक्षिकत्वाद् यक्स्वरः'** इति।

अत्रावधातव्यमस्ति यत् 'अपुवायते' इति पदस्याख्यातपदसदृशोऽत्र व्यवहारः। दृश्यते हि निपातानामपि नामधातुवत् परामर्शः। यथा—**'स्वधामहे,' 'स्वधयति'**[8] इत्यादिः।

**(७) अभितः** [ = आभिमुख्ये ]।

'अभितः' इति निपातो विभक्तिप्रतिरूपकः। तथा चोक्तं न्यासे-**'उपसर्ग-विभक्ति-स्वरप्रतिरूपकाश्च निपाता भवन्ति'**[9] इति। गणपाठेऽप्ययम्—'अभितः <अभि+तस्>

---

१. प्रदीपः—५।२।९७।
२. पदमञ्जरी—५।३।१०९।
३. संस्कृत-इंग्लि० डिक्श०—पृ० ४५।
४. अथर्ववेदः—१।२६।४—सायणभाष्यम्।
५. रघुवंशम्—२।२६—मल्लिनाथव्याख्या।
६. संस्कृत-ग्रामर—पृ० ४९३।
७. तै०सं०—६।२।२—भट्टभास्करभाष्यम्।
८. श्रीमद्भागवतम्—५।८।२५—श्रीधरव्याख्या।
९. न्यासः—२।२।२४।

अभितः इति निपातो नावलोक्यते। ऋग्वेदे तु 'अभि' इत्युपसर्गस्यावयविभूतौ **'अभितः-अभीके'** इति निपातौ दृश्येते। अर्थस्तु समान एव। तथा हि मन्त्रः—**'उदस्तभ्ना: पृथिवीं द्यामभीके भ्रातुः पुत्रान्मघवन्तित्विषाणः'**[1] इति। निरुवाच मन्त्रममुं सायणः—'अभीके—अन्तिकनामैतत्। तव समीप एव' इति।

परवर्तिसाहित्ये तु 'अभितः' इत्येक एव निपातः कुत्रचिद् अव्ययत्वेन, कुत्रचिच्च निपातत्वेन शाब्दिकैर्व्याख्यातः। तथा च कैयटः–**'आभिमुख्यवृत्तिरपि विभक्तिप्रतिरूपको निपातोऽभितः शब्दोऽस्ति'**[2] इति। हरदत्तमिश्रस्याप्ययमेवाभिनिवेशः[3]।

**(८) अमा** [ = सहभावे ]।

'अमा' इति निपातो निपात-सर्वनाम—आ + मा > अमा–समूहिभूतः। 'अमा' घटकः 'मा' इति सर्वनामशब्दो सप्तम्यर्थकः—मा = मयीत्यर्थः। 'अमावास्या' पदनिरुक्तिप्रसङ्गे किलोवाच सायणाचार्यः–'अहमेव अमावास्या[4] अमावास्याभिमानिनी देवता अस्मि। न केवलं शब्दतः, अपित्वर्थतोऽपि एतन्नामिका भवामि। तद् दर्शयति पादत्रयेण—सुकृतः = सुकर्माणो देवा माम् = मयि आ वसन्ति = निवसन्ति यष्टव्यत्वेन अवतिष्ठन्ते। 'उपान्वध्याङ्वसः' ( पा० १।४।४८ ) इत्याङ्पूर्ववसिप्रयोगे माम् इत्यस्य कर्मता। आ मा वसन्ति देवा इति 'अमावास्या' शब्दनिरुक्तिः। आङ्वसत्योर्मध्ये 'मा' इति अस्मदो द्वितीयैकवचनस्य प्रयोगः। आङुपसर्गस्य ह्रस्वत्वम् इति 'अमावास्या' शब्दनिष्पत्तिः प्रदर्शिता। प्रत्ययस्तु पूर्वमेव उक्तः। 'माम्' इति द्वितीयार्थमेव विवृणोति—मयीमे इति। इमे देवाः मयि निवसन्ति इति आवासपदस्य अर्थकथनद्वारेणापि 'अमावास्या' शब्दो निरुच्यते। अमा सह वसुरूप इन्द्रो वसति अस्यां तिथौ इति अमावास्याशब्दनिरुक्तिरिति तैत्तिरीये श्रूयते—'अमा वै नो अद्य वसु वसतीति। इन्द्रो हि देवानां वसु। तद् अमावास्याया 'अमावास्यत्वम्' ( तै० ब्रा० २।५।३।६ ) इति।

एवं हि निपात – आ + माम्—सर्वनाम्नोरास्कन्दनेनैको निपातप्रत्यय उदितः सन् पुनः स √वस [ = निवासे ] इति धातुनोपश्लिष्यन् एकम्–आ + माम् + √वस [ = निवासे ] > अमावास्या इति संज्ञापदं निर्मापयति। अत्र 'अमा' इति निपातार्थस्याभिव्यक्तिस्तु अधिकरणबोधकेन 'मयि' इति पदेनैव स्फोट्यते।

**(९) अहम्** [ = अवलेपे ]।

'अहम्' इति विभक्तिप्रतिरूपको निपातः। निपातोऽयं गणपाठे नावलोक्यते। 'अहमहमिका' इति पदं व्याचक्षाणेनाह क्षीरस्वामी—'अहं शक्तोऽहं शक्त इत्यस्त्यस्या-

---

१. ऋ० सं०–१०।५५।१—सायणभाष्यम्। २. प्रदीपः—२।३।२।
३. पदमञ्जरी—२।३।२। ४. अथर्ववेदः—७।७९।२—सायणभाष्यम्।

महमहमिका। ठन्। अहंशब्दो निपातः'[1] इति। सर्वानन्दस्याप्ययमेव राद्धान्तः[2]। निपातोऽयम् √कृ [= करणे] इति धातुनाऽपि युज्यते-अहङ्करोति[3]—अहम्+√कृ > अहङ्करोति इति।

(१०) **आके** [= समीपार्थे]।

'आके' इति सप्तम्यन्तो विभक्तिप्रतिरूपको निपातः केवलम् ऋग्वेदस्य द्वयोर्मन्त्रयोः 'अन्तिकार्थे' प्रयुक्तोऽवलोक्यते। तथा हि मन्त्रः—**'त्वमग्न ऋभुराके नमस्यस्त्वं वाजस्य क्षुमतो राय ईशिषे'**[4] इति। विशदयति च मन्त्रममुं सायणाचार्यः—'हे अग्ने, त्वम् आके = अन्तिके सन्निधावेव नमस्यः = नमस्कार्यः' इति। परवर्तिवाङ्मये निपातस्यास्य व्यवहारः स्थगितः।

(११) **आत्** [= अनन्तरार्थे]।

'आत्' इति पञ्चम्यन्तो विभक्तिप्रतिरूपको वैदिको निपातः 'अनन्तरार्थे' प्रयुक्तः। यास्कमन्वस्य प्रसरोऽवरुद्धप्राय एव।

एवं कुत्रचिदयं निपातः तदाशब्दार्थे प्रयुक्तो दृश्यते[5], कुत्रचिद् अपिशब्दार्थे[6], कुत्रचित् पदपूरणार्थे[7] चापि। मन्ये यद् भोजेन स्वीयचादिगणे पठितः 'आदह <आत् + अह>आदह' इति उपक्रमार्थीयो निपातः 'आत्' इति निपातसमूहिभूतः[8]।

अवेस्ताभाषानिपातेनाप्यस्य[9] संवादोऽवलोक्यते-'आत् > आअत्' इति।

(१२) **आरात्** [= दूरार्थे]।

'आरात्' इति पञ्चम्यन्तो विभक्तिप्रतिरूपको निपातः सम्पूर्णे संस्कृतसाहित्ये येन केन प्रकारेण व्यवहृतोऽवलोक्यते। वैदिकसाहित्येऽस्य भूयान् परामर्शो विहितः। लौकिके तु कार्पण्यं गतमस्य व्यवहारः। 'आरात्' इति निपातः सप्तम्यन्तोऽपि 'आरे'[10] इति रूपेणापि दृश्यते। 'आरे' इति सप्तम्यन्तो व्यवहारस्तु किलार्वाक्कालिकसाहित्येऽलब्धावकाशः। परवर्तिवाङ्मये 'आरात्' इति पञ्चम्यन्तो निपातो भृशमक्षिलक्ष्यीक्रियते।

एवमयं 'आरात्' इति निपातः कुत्रचिद् दूरार्थे[11] व्यवहृतो दृश्यते, कुत्रचिद् अधुनार्थे[12], कुत्रचित् सन्निकृष्टार्थे चापि[13]।

---

१. नामलिङ्गानुशासनम्—२।८।१०१। २. तदेव।
३. महाभारतम्—५।२।१८। ४. ऋ० सं०-२।१।१९-सायणभाष्यम्।
५. तदेव-१।५१।४, ८।३२।११-स्कन्दभाष्यम्। ६. तदेव-१।६८।३।
७. तदेव-६।६७।१। ८. सरस्वतीकण्ठाभरणम्—१।१।१२५।
९. अवेस्ता-पृ० ४१। १०. ऋ० सं०—१।१७२।२—सायणभाष्यम्।
११. तदेव—६।४७।१३,१०।४३।६—स्कन्दभाष्यम्।
१२. तदेव—३।५४।९, अथर्ववेदः-२०।१।१। १३. ऋ०सं०-१०।४२।७-स्कन्दभाष्यम्।

**(१३) आवह** [ = प्रापणार्थे] ।

'आवह' इति तिङ्प्रतिरूपको निपातः प्रापणार्थे व्यवहृतो दृश्यते । व्याख्याति च कैयटः—**'केचित्तु आवहशब्दोऽपि निपात इत्याहुः'** इति । मन्ये यद् धातु—आ + √वह [ = प्रापणे] > आवह—निपातयोः समाहारभूतोऽयं निपातः ।

**(१४) उवे** [=स्त्रीणामाह्वाने] ।

'उवे' इति निपातः स्त्रीणामाह्वाने विनियुक्तो दृश्यत ऋग्वेदे । तथा हि मन्त्रः—**'उवे अम्ब सुलाभिके यथेवाङ्ग भविष्यति**[1]**'** इति । व्याकृतवान् मन्त्रममुं मुद्गलाचार्यः—**'उवे इति निपात आभिमुख्यकृत् स्त्रीणाम्**[2]**'** इति । सायणोऽप्येवमेव व्याख्याति स्म । लौकिकसाहित्येऽस्य व्यवहारो न दृश्यते ।

**(१५) उच्चा** [=उपर्यर्थे] ।

'उच्चा' इति विभक्तिप्रतिरूपको निपात उपर्यर्थे प्रयुक्तोऽवलोक्यते वैदिकसाहित्ये । अस्यैव तृतीयाबहुवचनान्तो निपातः 'उच्चैः' इति । 'उच्चैः' इति बहुवचनान्तो निपातो वैदिक-लौकिकोभयभाषायां समानरूपेण परामृष्टः, किन्तु 'उच्चा' इति निपातस्य प्रयोगस्तु वैदिकसाहित्य एवोपलभ्यते । तथा हि मन्त्रः—**'वाजेवोच्चा वयसा घर्म्येष्ठा मेषेवेषा सपर्या पुरीषा'**[3] इति । व्याख्यातवान् च मन्त्रममुं सायणाचार्यः—'उच्चा = उच्चैर्वर्तमानौ । पुष्टावित्यर्थः । उच्चा-उच्चैः शब्दात् सुपो डादेशः । डित्वा-ट्टिलोपः' इति । यद्यपि सायणेन 'उच्चा' इति निपातः 'उच्चैः' इत्यस्य प्रतिरूपत्वेन व्याख्यातः, किन्तु तृतीयैकवचनान्तोऽयं निपातः 'उच्चा' इति ।

**(१६) ऋधक्** [ = पृथगर्थे] ।

'ऋधक्' इति निपातः पृथगर्थे प्रयुक्तो वैदिकसंहितासु । प्रायेणास्य परामर्शः उपसर्गवत् कृतो वर्तते तत्र । मन्ये यद् वैदिकोऽयं निपात इति । तथा हि मन्त्रः—**'यन्मा सावो मनुष आह निर्णिज ऋधक्कृषे दासं कृत्व्यं हव्यैः'**[4] इति ।

व्याख्यायते च मन्त्रोऽयं सायणाचार्येण—ऋधक्कृषे = पृथक्करोमि । ऋधगित्ययं पृथगर्थे' इति । प्रायेणास्योपसर्गवद् व्यवहारः √कृ, √जुष, √भज प्रभृतिभिर्धातुभिः कृतोऽस्ति । दुर्गाचार्यस्याप्ययमेव सिद्धान्तः[5] ।

**(१७) कर्हि** [ = कदाशब्दार्थे ] ।

'कर्हि' इति निपातो वैदिकसाहित्य एव प्रयुक्तो दृश्यते । प्रायेणायं 'कदा', 'कस्मिन्' इत्यनयोरर्थयोः लब्धप्रसरः । तथा हि व्याख्यातवान् सायणाचार्यः—**'कर्हि = कस्मिन्नपि देशे काले वा'**[6] इति ।

---

१. प्रदीपः—८।२।९१ ।
२. ऋ० सं०—१०।८६।७—मुद्गलीया वृत्तिः ।
३. तदेव—१०।१०६।५—सायणभाष्यम् ।
४. तदेव—१०।४९।७ ।
५. निरुक्तम्—४।४ ।
६. ऋ० सं०—८।७३।५—सायणभाष्यम् ।

तर्हि, यर्हि, कर्हि—प्रभृतयो निपाताः 'र्हि' प्रत्ययान्ताः। 'तर्हि' इति निपातस्तु लोक-वेदसामान्यः। 'यर्हि' 'कर्हि' इतीमौ तु वैदिकसाहित्यलब्धप्रसरौ।

**(१८) कीज** [ = आश्चर्ये ]।

'कीज' इति निपातोऽद्भुतार्थे प्रयुक्तोऽवलोक्यते ऋग्वेदसंहितायाम्। तत्रापि किलास्य व्यवहारः सकृत् कृतो वर्तते। तथा हि मन्त्रः—**'यः शक्रो मृक्षो अश्व्यो यो वा कीजो हिरण्ययः**[१]' इति। मन्त्रोऽयं व्याचक्षाणेनोक्तं सायणाचार्येण—**'कीज इत्यद्भुतमाह। किमस्य कथं जातः'** इति।

ऋग्वेदमन्वस्य व्यवहारः सर्वथा स्थगितः। मन्ये यत् परवर्तिकाले विकसितः 'कीस' इति निपातः 'कीज' इत्यस्यैव वर्णविकारमापन्नो निपातः। 'माकिस्<मा+कीस्>माकिस्, नकिस्<न+कीस्>नकिस्' इत्यनयोर्निपातयोरस्य रूपसद्भावो दृश्यत एव।

**(१९) कुह** [ = क्वशब्दार्थे ]।

'कुह' इति निपातो वैदिकसाहित्ये प्रायेण कुत्रार्थे[२] व्यवहृतो दृष्टिपथमायाति। लौकिकसाहित्येऽस्य परामर्शो न दृश्यते। एतदाभाति यद् निपातोऽयं निपातद्वय—कु + ह>कुह—समाहारभूतः। परवर्तिकालिकसंस्कृतसाहित्ये तु 'त्र' प्रत्ययान्तस्यैव 'कु' इति निपातस्य व्यवहारः कविभिः, शाब्दिकैश्च पुरस्कृतः।

**(२०) घ** [ = एवार्थे ]।

'घ' इति तनुतरो निपातो वैदिकभाषायां प्रायेण पदपूरणाय विनियुक्तः[३]। एवार्थेऽप्यस्य विनियोगो दृश्यते[४]। कुत्रचिदयं तत्र अप्यर्थे[५] च स्वीकृतो लक्ष्यते।

**(२१) चिश्चा** [ = हासवचने ]।

'चिश्चा' इति वैदिको निपातो हासार्थे परामृष्टो ज्ञायते। ऋग्वेदेऽस्य व्यवहारः सकृद् दृश्यते। तथा हि मन्त्रः—'बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य[६]' इति। व्याख्याति स्म मन्त्रममुं स्कन्दस्वामी—**'चिश्चा कृणोति—चिश्चेति निपातः हासवचनः। हासमिव करोत्युद्घाट्यमानः'** इति। माधवस्याप्ययमेव समयः। ऋग्वेदमन्वस्य व्यवहारः प्रायेणावरुद्ध इति प्रतिभाति।

**(२२) छम्बट्** [ = विनाशार्थे ]।

'छम्बट्' इति निपातस्य विकासस्त्ववार्क्कालिकः। तथा हि भागवते—'एषा घोरतमा संध्या लोकच्छम्बट्करी प्रभो[७]' इति। संश्लोकयति स्म च श्लोकममुं श्रीधरस्वामी—**'छम्बडिति निपातो विनाशे वर्तते'** इति।

---

१. ऋ० सं०—८।६६।३।
२. तदेव—१।२४।१०, ५।७४।२।
३. तदेव—५।७६।८, ८।३४।३।
४. तदेव—१।८२।४।
५. तदेव—१०।१०।३।
६. तदेव—६।७५।५—स्कन्दभाष्यम्।
७. भागवतम्—३।१८।२६—श्रीधरव्याख्या।

**(२३) ताजक्** [ = तदानीमित्यर्थे ] ।

'ताजक्' इति निपातस्तैत्तिरीयसंहितायां तदानींशब्दार्थे प्रयुक्तो दृश्यते । ऋग्वेदसंहितायामस्य प्रयोगो नावलोक्यते । तथा हि तैत्तिरीयो मन्त्रः— **'श्रोत्राभ्यामात्मनोऽङ्गेभ्य[१] आयुषोऽन्तरेति ताजक्प्रधन्वति'** इति । व्याक्रियते च मन्त्रोऽयं भट्टभास्करेण—'ततश्च ताजक् = तदानीमेव अयं प्रधन्वति = प्रगच्छति क्रियत इत्यर्थः । ताजक् इति निपातः' इति । एवमेव मैत्रायणिसंहितायाम्[२], ताण्ड्यब्राह्मणे चायं निपातोऽस्मिन्नेवार्थे विनियोजितो दृश्यते[३] ।

**(२४) दोषा** [ = रात्रौ ] ।

'दोषा' इति वैदिको निपातः रात्रिवाचकः । प्रायेणायं निपातो दिवसवाचकेन 'वस्तोः' इति निपातेन सह सापेक्षत्वेन व्यवहृतोऽवलोक्यते । तथा च ऋग्वेदे—**'अयं द्योतयदद्युतो व्यक्तून्दोषावस्तोः शरद इन्दुरिन्द्रः[४]'** इति । व्याख्यातश्च मन्त्रोऽयं सायणाचार्येण—'दोषा = रात्रिम्, वस्तोः = दिवसम्, शरदः संवत्सराश्च विद्योतयत = व्यदीपयत्' इति ।

तैत्तिरीयेऽपि मिथो हि सापेक्षत्वेनैवास्य विनियोगोऽवलोक्यते । तथा च श्रुतिः— **'इह त्वा भूर्या चरेदुपत्मन दोषावस्तर्दीदिवांसमनुद्यून्[५]'** इति । संश्लोक्यते च ऋगियं भट्टभास्करेण—'दोषावस्तरिति—पदसमुदायात्मको वा एको निपातः । 'निपाता आद्युदात्ताः' (फि० ८०) इति तस्याद्युदात्तत्वम्' इति । मन्ये यत् प्रदोषः <प्र + दोषा>प्रदोषः, प्रतिदोषम् <प्रति + दोषा > प्रतिदोषम्—प्रभृतयो शब्दा निपातोपसर्गावयविभूता इति । मोनियरविलियम्समहोदयस्याप्ययमेव राद्धान्तः[६] ।

**(२५) द्वन्द्वम्** [ = रहस्यार्थे ] ।

'द्वन्द्वम्' इति रहस्यार्थको निपातो रामायणे प्रयुक्तो दरीदृश्यते ।

तथा च श्लोकः—

**चोदिता राजसिंहेन मुनिर्वाक्यमभाषत ।**
**द्वन्द्वमेतत्प्रवक्तव्यं हितं वै यद्यपेक्षसे[७]** ।। इति ।

व्याख्याति च श्लोकममुं गोविन्दराजः—**'द्वन्द्वशब्दो रहस्यार्थे द्विवचननिपातः । रहस्यमेतत्प्रवक्तव्यमित्यर्थः'** इति । निपातोऽयमर्वाक्कालिकः ।

---

१. तै० सं०—३।२।३—भट्टभास्करभाष्यम् । २. मै० सं०—४।८।९ ।
३. ताण्ड्यब्रा०—१७।१२ ।
४. ऋ० सं०—६।३९।३—सायणभाष्यम् । ५. तै० सं०—१।२।१४—भट्टभास्करभाष्यम् ।
६. संस्कृत-इंग्लिश-डिक्शन०—पृ० ४९८ । ७. रामायणम्—७।१०३।१२ ।

**(२६) पराचैः** [ = पराङ्मुखार्थे ]।

'पराचैः' इति निपातस्य व्यवहारो वैदिकसाहित्ये प्रायिकः, लौकिके तु क्वाचित्क इति। यथा—'उच्चैः-नीचैः', 'शनैः' प्रभृतयो विभक्तिप्रतिरूपका निपाताः प्रयुज्यन्ते, तथैव 'पराचैः' इत्ययमपि विभक्तिप्रतिरूपको निपातः। तथा हि श्रुतौ—**'बाधेयां दूरं निर्ऋतिं पराचैः कृतम्[१]'** इति। निरुवाच चेमाम् ऋचं सायणाचार्यः—**'पराचैः = पराङ्मुखम्, दूरं बाधेयाम्। पराचैरिति निपातोऽयम् उच्चैर्नीचैरितिवत्'** इति। माधवभट्टेनाप्युरीक्रियते निपातत्वेनायम्[२]।

मन्ये यत् 'पराचैः < परा + √अञ्च् [ = गतौ ] > पराचैः' इति निपातो धातूपसर्गसमाहारभूत इति।

**(२७) पुनः** [ = अभ्यावृत्तौ ]।

'पुनः' इति निपातो लोकवेदसाधारणः। चादिपाठेष्वयं नोपलभ्यते। वैदिकसाहित्ये त्वस्य परामर्शो निपातत्वेनैव कृतो वर्तते। तथा हि मन्त्रः—**'आदह स्वधामनु पुनर्गर्भत्वमेरिरे[३]'** इति। व्याख्यातवान् चेमाम् ऋचं सायणाचार्यः—**'प्रतिसंवत्सरमेवं कुर्वन्तीति दर्शयितुं पुनः शब्दः प्रयुक्तः। अनु-पुनःशब्दो निपातावाद्युदात्तौ'** इति। स्कन्दस्वामिना त्वयं निपातोऽङ्गीकृतवीप्सार्थे व्याख्यातः[४]।

निपातोऽयं प्रायेण—√इ, √गम्, √या, √दा, √भू, √अस—प्रभृतिभिर्धातुभिर्योग उपसर्गवदपि प्रयुक्तोऽवलोक्यते[५]। प्राकृतभाषायां तु किलायम्—पुण < पुनः—इति रूपमपि गृह्णाति[६]।

**(२८) प्रायः** [ = तपसि ]।

'प्रायः' इति निपातस्य निपातरूपेण विकासोऽर्वाक्कालिकः। ऋग्वेदसंहितायां 'प्रायः' इति निपातो न दृश्यते। तत्रैकस्याम् ऋचि—'प्राये प्राये' इति शब्दो वीप्सया व्यवहृतोऽवलोक्यते। तथा च मन्त्रः—**'उप ज्येष्ठे वरूथे गभस्तौ प्राये प्राये जिगीवांसः स्याम्[७]'** इति। उपबृंहयति चेमाम् ऋचं सायणः—'किं च प्राये प्राये = सोमपानार्थमिन्द्रस्य यज्ञशालायां प्रवेशे प्रवेशे जिगीवांसः शत्रूणां जेतारो भवेम' इति। सायणाचार्यस्योपबृंहणेऽस्मिन्—√अय [ = गतौ ] इति धातोः प्रोपसर्गस्य च योगेन—'प्रायः < प्र + √अय [ = गतौ ] > प्रायः'—इति निपातस्योद्भवोऽङ्गीकृतो दृश्यते।

---

१. अथर्ववेदः—७।४२।१—सायणभाष्यम्।
२. ऋग्वेदानुक्रमणी—३।१।९।
३. ऋ० सं०—१।६।४—सायणभाष्यम्।
४. तदेव—१।३१।४—स्कन्दभाष्यम्।
५. संस्कृत-इंग्लिश-डिक्श०—पृ० ६३३।
६. प्राकृतमणिदीपः—२।९।
७. ऋ० सं—२।१८।८—सायणभाष्यम्।

सामविधानब्राह्मणेऽप्येतादृशं व्याख्यानं द्रष्टुं शक्यते। व्याख्याति च सायणाचार्यः—**'प्रायश्चित्तानाम्—आयः = प्राप्तिः, प्रकर्षेणायः प्रायः। विहितकर्माकरणस्य प्राप्तिरित्यर्थः। तत्प्रतीकारविषयं चित्तम्–चित्तिर्ज्ञानम्। तत्पूर्वानुष्ठानानि प्रायश्चित्तानि'**[1] इति। अस्मिन्नपि व्याख्याने विहितकर्मणः प्रकर्षेणायः = प्राप्तिः प्रायः शब्देनोपवर्णिता। अतो ज्ञायते यदस्य निपातस्य प्रसवस्तु धातूपसर्गास्कन्दनेनैवोपपन्नः।

आङ्गिरसस्स्मृतौ तु 'प्रायः' इति निपातस्तपोवाचकत्वेन स्वीकृतो दृश्यते। तथा हि श्लोकः—

**प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते।**
**तपो निश्चयसंयोगात् प्रायश्चित्तमितीर्यते**[2]॥ इति ।

शतपथब्राह्मणस्य व्याख्यानप्रसङ्गे तु सायणेन 'प्रायः' इति निपातो विनाशार्थे व्याख्यातः—**'प्रायो विनाशः। तस्य चित्तिः = सन्धानं यस्येति तथाविधो बभूव'**[3] इति।

हरदत्तमिश्रेण तु 'प्रायेण' इति शब्दो विभक्तिप्रतिरूपकनिपातत्वेन व्याख्यातः—**'केचित् प्रायेण शब्दो विभक्तिप्रतिरूपको निपातो ज्ञातमित्यस्यार्थे वर्त्तते इत्याहुः। दृश्यते च—प्रायेण सामग्र्यविधौ गुणानामिति**[4]**'**। महावीरचरितेऽप्येतादृशं व्याख्यानमवलोक्यते[5]।

एवं स्वतःप्रमाणभूतानामेतेषां सन्दर्भाणामनुसन्धानेनैतन्निष्कृष्यते यद् यदि 'प्रायेण' इति शब्दस्तृतीयाविभक्तिप्रतिरूपको निपातः, तर्हि ऋग्वेदीयोऽपि 'प्राये' इति शब्दः सप्तमीविभक्तिप्रतिरूपकनिपात एव। दृश्यन्ते हि संस्कृतवाङ्मये विभक्तिभेदेन निपातभेदाः। तद्यथा—चिरेण–चिराय–चिरस्य–इत्यादिः।

प्राकृतभाषायामप्यस्य रूपविकासो दृश्यते प्रायः > प्राउ > प्राइव > प्राइम्ब > पगिम्ब[6] इति।

**(२९) फट् [ = क्रौर्ये ]।**

'फट्' इति निपातोऽभिचारे, गुह्यानुष्ठाने च व्यवहृतो दृश्यते। तान्त्रिकपरम्परायामस्य विनियोगः पुरश्चरणेऽपि विहितः। तथा हि नित्याषोडशिकार्णवे—

**हृदयाशिरसोः शिखायां कवचाक्ष्यस्त्रेषु सह चतुर्थीषु।**
**नत्या हुत्या च वषट्-हुं-वौषट्–फट्पदैः षडङ्गविधिः**[7]॥ इति।

---

१. सामविधानब्रा०—१।५।१।
२. आङ्गिरसस्स्मृतिः—२।४।
३. शतपथब्रा०–५।५।४।८–सायणभाष्यम्।
४. पदमञ्जरी–२।३।१८।
५. महावीरचरितम्–४।२५।
६. प्राकृतशब्दानुशासनम्–३।३।४२।
७. नित्याषोडशिकार्णवः–१।१२८।

सायणाचार्येण तु 'फट्' इति निपातस्य व्युत्पत्तिः प्रदर्शयतोक्तं यत्—**'एतन्नामा शत्रुः हतः सन् फट्=विशीर्यताम् । ञिफला विशरणे (पा० धा० ५१८) इत्यस्य क्विपि डलयोरभेदश्छान्दसः । अभिचारे स्वाहाकारस्य स्थाने 'फट्' इति वचनात्[१]'** इति । सायणाचार्यस्य निरुक्तिरियं साध्वी प्रतिभाति । यतो हि पुरश्चरणे, गुह्यक्रियासु, अभिचारे वाऽस्य विनियोगस्तु विशरणमूलक एव ।

गोपीनाथभट्टस्तु सर्ववाचः क्रौर्योपलक्षणत्वेन निपातममुं व्याख्यातवान् । तद्यथा **'फडिति सर्ववाचः क्रूराणामुपलक्षणम्[२]'** इति । एवं सायणाचार्यस्य निरुक्तिः प्रमाणयति केवलं धातोरेव निपातस्य जन्म ।

**(३०) बट्** [ = सत्यार्थे ] ।

'बट्' इति निपातः सत्यार्थे प्रयुक्तो दृश्यते । वैदिकसाहित्यमात्रे एवास्य प्रसरभूमिः । नहि लौकिकसाहित्येऽस्य परामर्शोऽवलोक्यते । वैदिकसाहित्ये **'बट्-इत्था'** इति द्वौ निपातौ प्रायेण सापेक्षाविति । उभयोरर्थस्तु समान एव, तदपि किलानयोर्भाषिकः प्रयोगः सहैव दृश्यते । तथा हि मन्त्रः—**'बलित्था महिमा वामिन्द्राग्नी पनिष्ठ आ[३]'** इति । व्याक्रियते च मन्त्रोऽयं स्कन्दस्वामिना—**'बट् इत्था' इति द्वयोः सत्यनाम्नोः । अभ्यासे भूयांसमर्थं मन्यन्ते ( या० १०।४२ ) इति । अर्थभूयस्त्वेनापौनरुक्त्यम् । सत्यं महिमा वाम्=युवयोः'** इति । एवं समानार्थयोर्निपातयोः सहैवैकत्र प्रयोगविषये सायण[४]–उव्वट[५]–महेश्वर[६]–दुर्ग[७]–प्रभृतीनामप्ययमेन परामर्शः ।

**(३१) बलात्** [ = हठार्थे ] ।

'बलात्' इति विभक्तिप्रतिरूपको निपातो हठार्थे प्रयुक्तः । प्रमाणयति च क्षीरस्वामी—**'बलादिति निपातो हठार्थः । हठप्लुतिशठत्वयोः[८]'** इति । ऋग्वेदसंहितायामयं निपातः सकृत् प्रयुक्तो दृश्यते । तथा च श्रुतिः—**'त्वमिन्द्र बलादधि सहसो जात ओजसः । त्वन्वृषन्वृषेदसि[९]'** इति ।

यद्यपि सायणाचार्येण कण्ठतोऽस्य व्याख्या निपातत्वेन न कृता, तथापि सन्दर्भस्तु तादृश एवानुमीयते । वैदिकसाहित्ये सङ्कुचितप्रसरोऽयं लौकिकसाहित्ये पौनःपुन्येन परामृष्टः ।

---

१. शतपथब्रा०–४।१।१।२६–सायणभाष्यम् ।
२. सत्याषाढश्रौतसूत्रम्–१०।७।२२–गोपीनाथभट्टव्याख्या ।
३. ऋ० सं०–६।५९।२–स्कन्दभाष्यम् ।
४. तदेव–८।१०१।११–सायणभाष्यम् ।
५. शुक्लयजुर्वेदः–३३।३९–उव्वटभाष्यम् ।
६. निरुक्तम्–१०।२–महेश्वरव्याख्या ।
७. निरुक्तम्–३।१–दुर्गव्याख्या ।
८. नामलिङ्गानुशासनम्–२।८।१०८–क्षीरस्वामिव्याख्या ।
९. ऋ० सं०–१०।१५३।२ ।

**(३२) बत्रि** [ = क्षिप्रार्थे ]।

'बत्रि' इति निपातः क्षिप्रार्थे विनियोजितो दृश्यते ऋक्संहितायाम्। तथा हि ऋक्—**'उभा ता बत्रि नश्यतः**[1]' इति। व्याख्यायते च मन्त्रोऽयं स्कन्दस्वामिना—**'बत्रि निपातोऽयं क्षिप्रार्थः। बत्रि=क्षिप्रम्'** इति। माधवभट्टोऽप्येवमेव व्याख्याति[2] स्म। ऋग्वेदमनु सर्वथाऽस्य व्यवहारो लुप्तः।

**(३३) भोस्** [ = आमन्त्रणे ]।

'भोस्' इति निपातः पाणिनेश्चादिपाठेऽपरिसंख्यातः। भोज-हेमचन्द्र-प्रभृतीनां चादिपाठेऽयमुपात्तोऽवलोक्यते। वैदिकसाहित्येऽयमप्रयुक्तः। हरदत्तमिश्रेण प्रतिपादितं यद् भवेन्नाम चादिपाठेऽपरिसङ्ख्यानमस्य, किन्तु सौत्रोऽयं निपात इति। सौत्राश्च निपाता भवन्तीति। तथा हि पदमञ्जर्याम्—**'तस्मादसम्बुद्धौ स्त्रियां च दर्शनान्निपाता एवेति विज्ञेयम्। निपातत्वं च विभक्तिस्वरप्रतिरूपकत्वेनेति। नन्वसत्यस्मिन्नुपसंख्याने 'भो' इत्यादिकः शब्दो विभक्त्यन्तो नास्ति, यत्प्रतिरूपका एते स्युः? तस्मात् सौत्रा एते निपाताः 'भो-भगो-अघो' इति सूत्रे निर्दिष्टाः, चादिषु वा पठितव्याः**[3]' इति।

हरदत्तमिश्रस्य प्रतिपादनमिदं सङ्केतयति **'इयन्त इति संख्यानं निपातानां न विद्यते'** इत्यमुं सिद्धान्तम्। व्याख्यानेनैतेन त्रयाणामपि–भोस्–भगोस्–अघोस्–निपातत्वं सिद्ध्यति।

**(३४) मनाक्** [ = स्तोकार्थे ]।

'मनाक्' इति स्तोकार्थको निपातः श्रुतिस्मृतिसाहित्यलब्धप्रसरः। मन्ये यदयं निपातो नाम-धातु—मना + √अञ्च् [ = गतौ] > मनाक्–समाहारभूतः। मोनियर-विलियम्समहोदयस्येदमेव हार्दम्[4]।

ऋग्वेदसंहितायां तु नुमागमोऽप्यनेनानुभूयते—मनाक् > मनानक्–इति। तथा हि मन्त्रः—**'मनानग्रेतो जहतुर्वियन्ता सानौ निषिक्तं सुकृतस्य योनौ**[5]' इति।

व्याख्यातवान् मन्त्रममुं स्कन्दस्वामी—**'मनानक् इति निपातः। छान्दसो नुमागमः'** इति। प्राकृतभाषायां[6] त्वस्य विकासः—मंणा < मंणाई < मनाक्–इति रूपेण दृश्यते।

**(३५) ममत्** [ = बलवदित्यर्थे ]।

'ममत्' इति विभक्तिप्रतिरूपको निपातः। ऋग्वेदसंहितायामस्य वीप्सया व्यवहारोऽवलोक्यते। तत्रार्थभूयस्त्वायास्यासकृदभ्यस्य प्रयोगः सङ्केतयति किलार्थ-प्रवाहम्। तथा च मन्त्रः—

---

१. ऋ० सं०–१।१२०।१२–स्कन्दभाष्यम्। २. ऋग्वेदानुक्रमणी–३।१।५।
३. पदमञ्जरी–८।३।१। ४. संस्कृत-इंग्लि० डिक्श०–पृ० ७८४।
५. ऋ० सं०–१०।६१।६–सायणभाष्यम्। ६. अशोक के अभिलेख–कालसी–१।५-६।

**ममच्चन त्वा युवतिः परास ममच्चन त्वा कुषवा जगार ।**

**ममच्चिदापः शिशवे ममृड्युर्ममच्चिदिन्द्रः सहसोदतिष्ठत्[१] ।। इति ।**

तत्र 'ममत्' इति निपातस्य व्याख्या प्रमत्तार्थेऽकारि सायणाचार्येण । प्रमत्तो हि नाम बलवत्तरो भवत्येव । महाभारतेऽप्यस्य प्रयोग उपलभ्यते । तद्यथा—

**यदा विराटः परवीरघाती ममत्तरे शत्रुचमूं प्रवेष्टा ।**

**मत्स्यैः सार्धमन्तशंसरूपैस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत्[२] ।। इति ।**

व्याख्यातश्च श्लोकोऽयं नीलकण्ठेन—**'ममत्तरे = बलवत्तरे । ममदिति निपातो बलवद् वाचक इत्यर्थः'** इति । परवर्तिसाहित्येऽस्य परामर्शः स्थगितो दृश्यते ।

**(३६) रात्रिंदिवम्** [ = सततमित्यर्थे ] ।

'रात्रिंदिवम्' इति निपातो द्वयोः संज्ञाशब्दयोराश्लेपजन्यः—रात्रौ च दिवा च रात्रिंदिवम् इति । निपातोऽयं वैदिकसंहितासु नोपलभ्यते । रामायणेऽयं शब्दो निपातत्वेन व्यवहृतोऽवलोक्यते । तथा च श्लोकः—

**तद्वियोगेन्धनवता तच्चिन्ताविपुलार्चिषा ।**

**रात्रिंदिवं शरीरं मे दह्यते मदनाग्निना[३] ।। इति ।**

उपबृंहितश्च श्लोकोऽयं तिलकेन—**'रात्रिंदिवमिति निपातः सततमित्यर्थे'** इति ।

रघुवंशमहाकाव्येऽप्यस्योपलब्धिर्निपातत्वेनैवावलोक्यते—

**रात्रिंदिवंविभागेषु यदादिष्टं महीक्षिताम् ।**

**तत्सिषेवे नियोगेन स विकल्पपराङ्मुखः[४] ।। इति ।**

श्लोकोऽयं व्याचक्षाणेनोक्तं मल्लिनाथेन—'रात्रौ च दिवा च रात्रिंदिवम् । 'अचतुर०' (पा० ५।४।७७) इत्यादिनाऽधिकरणार्थे द्वन्द्वेऽच्प्रत्ययान्तो निपातः[५]' इति ।

**एवं प्रमाणाभ्यामुभाभ्यामेतन्निष्कृष्यते यद् निपाता हि नाम धातु-प्रातिपदिक-प्रत्यय-विभक्ति-स्वरप्रतिरूपकाश्च भवन्तीति । 'रात्रिंदिवम्' इति निपाते द्वयोः संज्ञाशब्दयोः सन्निवेशः स्पष्टतर एव ।**

**(३७) वाव** [=प्रसिद्धौ] ।

'वाव' इति निपात ऐतिह्यार्थे, निश्चये चापि प्रयुक्तो दृश्यते । तथा हि भागवते—**'यर्हि वाव ह राजन् स राजपुत्रः प्रियव्रतः[६]'** इति । व्याख्यातश्च श्लोकोऽयं

१. ऋ० सं०–४।१८।८–सायणभाष्यम् ।
२. महाभारतम्–उद्योगप० ४८।३७ ।
३. रामायणम्–६।५।८–तिलकटीका ।
४. रघुवंशम्–१७।४९–मल्लिनाथव्याख्या ।
५. तदेव—१७।४९—मल्लिनाथव्याख्या ।
६. भागवतम्—५।१।६–श्रीधरव्याख्या ।

श्रीधरस्वामिना—'वावेति प्रसिद्ध्यादौ' इति। अन्यत्र स एव निश्चयार्थेऽपि व्याख्यातवान् 'वाव' इति निपातम्[१]।

लौकिकसंस्कृतसाहित्ये, विशेषत आलङ्कारिकसाहित्ये निपातोऽयं न परामृष्टो दृश्यते। अस्य प्रसरभूमिस्तु वैदिकी भाषैव।

**(३८) विभाषा [=विकल्पार्थे]।**

'विभाषा' इति निपातस्य विकासस्त्ववर्वाक्कालिकः। वैदिकवाङ्मयेऽयं निपातो न दृश्यते। निपातस्यास्योद्भववस्तु—उपसर्गधातुसंसर्गेणैवोपपन्नः—वि+√भाष [=परिभाषणे]>विभाषा इति निपातोऽयं समुच्चयार्थे, विकल्पार्थे च विनियोजितोऽवलोक्यते। तथा हि न्यासे—'विभाषाग्रहणं च्वेः प्रापकमिति। समुच्चयार्थत्वात्। समुच्चयार्थत्वं त्वनेकार्थत्वान्निपातस्य। यद्येवम्, पकार एव कस्मान्नोह्यः? वैचित्र्यात् सूत्रकृतेः' इति। धातूपसर्गसंसर्गसंभवोऽयं निपात ऐतिहासिकदृष्ट्या पाणिनेरष्टाध्याय्यामेव लब्धस्वरूपविकासः। तदन्वयं यत्र तत्र निपातत्वेनाचार्यैर्व्याख्यातो दृश्यते।

**(३९) विश्वाहा [=सर्वदाशब्दार्थे]।**

'विश्वाहा' इति निपातो वैदिकवाङ्मय एव निपातत्वेन प्रयुक्तो दृश्यते। निपातस्यास्य प्रसवस्तु 'विश्व' इति सर्वनाम 'अहः' इति नामशब्दाभ्यामुपपन्नः। नाम-सर्वनामशब्दाभ्यां प्रसूतोऽयं निपातः सर्वेष्वहःस्वित्यस्मिन्नर्थे प्रयुक्तोऽवलोक्यते। तथा हि श्रुतिः—**'स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत्'**[२] इति। व्याक्रियते चेयमृक् स्कन्दस्वामिना—**'विश्वाहा निपातोऽयं सर्वेष्वहःस्वित्यस्मिन्नर्थे वर्तते। विश्वाहा=सर्वदा'** इति। सायणाचार्यस्याप्ययमेवाऽभिनिवेशः[३]।

'विश्वाहा<विश्व+अहः>विश्वाहा—इति निपातेऽवयवभूतो 'विश्व' इति सर्वनामशब्दः सर्वशब्दार्थवाचकः। तथा हि ऋग्वेदे—**'अरिष्टः स मर्तो विश्व एधते प्र प्रजाभिर्जायते धर्मणस्परि**[४]**'** इति। व्याख्यातश्च मन्त्रोऽयं सायणाचार्येण—'हे देवाः, विश्वः=सर्वः, म ः स मनुष्यः अरिष्टः एधते' इति। मोनियरविलियम्समहोदयस्तु विश्वशब्दस्योत्पत्तिं √विश [=प्रवेशने] इति धातोः स्वीकरोति[५]। स वक्ति यद् 'विष्णु' इति शब्देऽपि 'विश्वः' इति व्यापकार्थस्य शब्दस्योपश्लेषः स्वीकार्यः।

**(४०) सचा [=सङ्गीभावे]।**

'सचा' इति वैदिको निपातः सहायार्थे, सङ्गीभावे च प्रयुक्तो दृश्यते। तथा हि ऋक्—**'ये ते विप्र ब्रह्मकृतः सुते सचा वसूनां च वसुनश्च दावने**[६]**'** इति।

---

१. भागवतम्—५।१।२३।
२. ऋ०सं०—१।२५।१५—स्कन्दभाष्यम्।
३. तदेव—४।४३।१०—सायणभाष्यम्।
४. तदेव—१०।६३।१३।
५. संस्कृत-इंग्लिश-डिक्श०—पृ० ९९२।
६. ऋ० सं०—१०।५०।७—सायणभाष्यम्।

उपश्लोकयामास च मन्त्रममुं सायणाचार्यः—'सचा=सङ्गीभूताः' इति। सहायार्थे चाप्यस्य प्रयोगोऽवलोक्यते। व्याख्यातवान् सायणाचार्यः—**'सचा=सहायः, प्रमे=लोकान् प्रमातुं अवतिष्ठते**[1]' इति। 'सचा' इति निपातस्य सहायार्थं पुरस्करोति दुर्गाचार्योऽपि—**'सचा इत्यप्रतीतार्थो निपातः सहेत्यर्थप्रतीतिः**[2]' इति।

निपातस्यास्य व्यवहारो√भू [=सत्तायाम्] इति धातुना सहोपसर्गवदपि दृश्यते। तथा हि मन्त्रः—**'आ शर्म पर्वतानां वृणीमहे नदीनाम्। आ विष्णोः सचा भुवः**[3]' इति। मन्त्रेऽस्मिन् √भू इति धातुनोपसर्गत्वेनास्य व्यवहारो दृश्यत एव।

बहुत्र ऋक्संहितायामयं नामधातुवदपि व्यवहृतः। तद्यथा—**'एहि वां विमुचो नपादाघृणे सचावहै**[4]' इति। व्याख्याति स्म च मन्त्रममुं सायणाचार्यः—**'सचावहै=संगच्छावहै'** इति।

इत्थं वैदिकसाहित्ये बहुपुरस्कृतोऽयं निपातः क्रमशः प्रयोगकार्पण्यमवाप।

**(४१) सदम्** [=सर्वदाशब्दार्थे]।

'सदम्' इति विभक्तिप्रतिरूपको निपातो वैदिकसाहित्ये सदाशब्दार्थे प्रयुक्तोऽवलोक्यते। तथा च श्रुतिः—**'त्वेषासो अग्नेरमवन्तो····सदमिद्यातुमावतो**[5]' इति। सुस्पष्टयति च मन्त्रममुं स्कन्दस्वामी—**'सदंशब्दः सदाशब्दपर्यायः'** इति। सायणाचार्यस्याप्ययमेवाग्रहः[6]।

वस्तुतस्तु 'सदम्-सदा' इत्युभावपि निपातौ द्वितीया-तृतीयाविभक्तिप्रतिरूपकौ। वैदिकवाङ्मय उभयोः परामर्शः पक्षपातरहितोऽवलोक्यते, लौकिके तु 'सदा' इत्यस्यैव परामर्शो जातः।

**(४२) सा** [=प्रसिद्ध्यर्थे]।

'सा' इति प्रसिद्ध्यर्थको निपातः सर्वनामप्रतिरूपकः। आनुसन्धानिकदृष्ट्या त्वयं सर्वनामप्रतिरूपकः प्रतिभाति। आचार्यैरुक्तं यत्—विभक्ति-स्वर-उपसर्ग-प्रतिरूपकाश्च निपाता भवन्तीति, किन्तु ऋचां निरीक्षणादेतद् वक्तुं प्रभवामो यद् नाम-सर्वनाम-आख्यात-प्रतिरूपकाश्चापि निपाता ऊरीकर्तव्याः। प्रमाणयति च श्रुतिः—**'सो चिन्नु मराति न वयं मरामरे**[7]' इति। व्याख्यायते च मन्त्रोऽयं सायणेन—**'सा उ इति निपातद्वयसमुदाय एकं पदम्'** इति।

---

१. ऋ० सं०—९।७०।४—सायणभाष्यम्।
२. निरुक्तम्—५।६—दुर्गव्याख्या।
३. ऋ० सं०—८।३१।१०—सायणभाष्यम्।
४. तदेव—६।५५।१।
५. तदेव—१।३६।२०—स्कन्दभाष्यम्।
६. तदेव—४।४।१३—सायणभाष्यम्।
७. तदेव—१।१९१।११।

**(४३) साम् [ = शोभनार्थे ]।**

'साम्' इति निपातो लोकवेदसाधारणः। 'साम्राज्यम्' इति पदे 'साम्' इति निपातोऽवयवभूतः। यद्यपि किलाचार्या वदन्ति यत् 'साम्राज्यम्' इत्यस्मिन् पदे 'सम्' इत्युपसर्ग एव वृद्धिमापन्नः, किन्तु तैत्तिरीयप्रातिशाख्ये तु पृथक् पृथक् 'सम्-साम्' इत्यनयोः परिसंख्यानं दृश्यते। तथा हि सूत्रम्—**'न संसामिति रात्परः'**[1] इति। सूत्रमिदं व्याचक्षाणेनोक्तं सायणाचार्येण—**'सम्-साम्—इत्येतयोर्ग्रहणयोर्मकारो न लुप्यते। यथा—प्र सम्राजम्, साम्राज्याय सुक्रतुः'** इति। तैत्तिरीयसंहिताव्याख्यातुर्भट्टभास्करस्याप्ययमेव निश्चयः[2]।

आभ्यां सन्दर्भाभ्यामनयोर्भेदः संसूच्यत एव।

**(४४) सामि [ = अर्धशब्दार्थे ]।**

'सामि' इति निपातो सप्तमीविभक्तिप्रतिरूपकः। अस्य प्रसरभूमिस्तु विशेषतो वैदिकी भाषैव। क्वाचित्को व्यवहारोऽस्य लौकिक्यामपि दृश्यते। वैदिकसाहित्येऽस्य द्वावर्थावुपलभ्येते—क्वचिदर्धशब्दार्थे, क्वचिच्च मध्यार्थे चापि।

अर्धशब्दार्थे यथा—**'उत यो मानुषेष्वा यशश्चक्रे असाम्या'**[3] इति। व्याख्यातश्च मन्त्रोऽयं स्कन्दस्वामिना—**'असामि सामि निपातोऽर्धवचनः। असामि=अनर्धम्, सकलं प्रभूतमित्यर्थः'** इति।

मध्यार्थे यथा—**'सामि हास्मै स ग्लायति स यथा'**[4] इति। स्फोटयामास च मन्त्रममुं सायणाचार्यः—**'सामि = मध्ये। सामिशब्दो निपातः'** इति।

एवं वैदिकवाङ्मये द्व्यर्थकोऽयं लौकिके एकार्थकश्चोपपन्नः। प्रयुनक्ति च महाकविकालिदासः—

**पश्य पार्वति! नवेन्दुरश्मिभिः**
**सामिभिन्नतिमिरं नभस्तलम्।**
**लक्ष्यते द्विरदभोगदूषितं**
**सम्प्रसीददिव मानसं सरः**[5]॥ इति।

श्लोकेऽस्मिन् प्रयुक्तं सामीति निपातमर्धार्थ एव व्याख्यातवान् नारायणः।

**(४५) सुमत् [ =स्वयंशब्दार्थे ]।**

'सुमत्' इति वैदिको निपातः प्रायेण स्वयंशब्दार्थे प्रयुक्तो दृश्यते। तद्यथा—**'क्षेत्रादपश्यं सनुतश्चरन्तं सुमद्यूथं न पुरु शोभमानम्'**[6] इति। उपबृंहयति च मन्त्रममुं

---

१. तैत्तिरीयप्रातिशाख्यम्–१३।४–त्रिभाष्यरत्नव्याख्या।
२. तै० सं०–१।८।१६–भट्टभास्करभाष्यम्।
३. ऋ० सं०–१।२५।१५–स्कन्दभाष्यम्।
४. शतपथब्रा०–१।३।१।२०,२।३।३।४–सायणभाष्यम्।
५. कुमारसम्भवम्–८।६४।
६. ऋ० सं०–५।२।४–सायणभाष्यम्।

सायणाचार्यः—'**सुमत्=स्वयमेव, पुरु=बहु शोभमानम्**' इति। निरुक्तकर्तुरप्ययमेवाभिप्रायः—'**सुमत्=स्वयमित्यर्थः**'[1] इति।

क्वचिदयं निपातः कल्याणार्थे, क्वचिच्च शोभनार्थे[2] चापि व्यवहृतो दृश्यते। तथा हि श्रुतिः—'**जाया पतिं वहति वग्नुना सुमत्पुंस इद्भद्रो वहतुः परिष्कृतः**'[3] इति। संश्लोकयति च मन्त्रममुं सायणाचार्यः—'**जाया पत्नी पतिम्=यजमानम्, सुमत्=कल्याणेन वग्नुना=वाग्रूपेण शब्देन वहति**' इति। परवर्तिसाहित्येऽस्य व्यवहारः सर्वथाऽवरुद्धः सञ्जातः।

**(४६) स्यात्** [=सज्जेदित्यर्थे]।

'स्यात्' इति तिङन्तप्रतिरूपको निपातो विविधेष्वर्थेषु विनियोजितोऽवलोक्यते। वैदिकसाहित्ये निपातस्यास्य व्यवहारो निपातत्वेन नावलोक्यते। निपातत्वेनास्य विकासोऽर्वाक्कालिकः। सज्जेदित्यर्थेऽस्य परामर्शो दृश्यते महाभारते—'**यशो न नश्येज्ज्ञातिभेदश्च न स्याद्धर्मो न स्यान्नैव चैवं कृते त्वाम्**'[4] इति। व्याख्यातश्च श्लोकोऽयं नीलकण्ठभट्टेन—'**स्यादिति निपातः सज्जेदित्यर्थे**' इति।

धनञ्जयस्तु किलानेकेष्वर्थेषु पठति निपातममुम्। तद्यथा—'**अनेकान्ते च विद्यादौ स्यान्निपातः श्रुते क्वचित्**'[5] इति।

व्याख्यायि कोषश्लोकोऽयम् अमरकीर्तिना—'स्यात् इत्याकारको निपात एतेष्वर्थेषु भवेत्' इति। दक्षिणावर्तनाथेन तु निपातोऽयं यद्यर्थे परामृष्टः—'**स्याद् इत्याख्यातप्रतिरूपको निपातो यद्यर्थे वर्तते**'[6] इति।

उत्तरोत्तरं 'स्यात्' इति निपातो लौकिकसंस्कृतसाहित्ये व्यवहारदृष्ट्या प्रायिकः सञ्जातः।

**(४७) स्वाम्** [=स्वीकरणार्थे]।

'स्वाम्' इति निपातो वैदिकः स्वीकरणार्थेऽङ्गीकरणार्थे वा प्रयुक्तः। विभक्तिप्रतिरूपकोऽयं निपातः। 'स्वः' इति निपातस्तु विदितचर एव। तस्यैव द्वितीयाविभक्त्यन्तोऽयम्। तथा हि तैत्तिरीये—'**स्वांकृतोऽसि मधुमतीर्न इषस्कृधि**'[7] इति। व्याख्यातवान् चामुं मन्त्रं भट्टभास्करः—'**स्वांकृतोऽसि=स्वीकृतोऽसीत्यर्थः। अस्वः स्वो भवतीति स्वाम्। आंभावश्छान्दसः। स्वाम् इति निपातः**' इति। मन्त्रेऽस्मिन् किलायमुपसर्गवद् व्यवहृतः।

---

१. निरुक्तम्—६।२२।
२. ऋ० सं०—८।८७।४—सायणभाष्यम्।
३. तदेव—१०।३२।३—सायणभाष्यम्।
४. महाभारतम्—वनप० ४।८—नीलकण्ठव्याख्या।
५. अनेकार्थनाममाला—४४—अमरकीर्तिभाष्ययुता।
६. मेघसंदेशः—२।१५—दक्षिणावर्तनाथव्याख्या।
७. तै० सं०—१।४।२—भट्टभास्करभाष्यम्।

**(४८) हये** [=आमन्त्रणार्थे]।

'हये' इति वैदिको निपात आमन्त्रणे व्यवहृतो दृश्यते। स्कन्दस्वामिना तु 'हेयः' इति शब्दार्थेऽयं व्याख्यातः—**'हये इति निपातो हेयशब्दपर्यायः'**[1] इति। तत्रैव माधवेनायम् आमन्त्रणार्थे व्याकृतः। शतपथब्राह्मणे सायणाचार्येण साध्वी व्याख्या 'हये' इत्यस्याकारि—**'अभिमुखीकरणार्थं 'हे' शब्दं प्रयुञ्जानो हये इति विपर्ययं प्रयुक्तवान्'**[2] इति। एतादृशानि व्यवहारस्थलानि स्मारं स्मारमेवोक्तम्—**'वर्णागमो वर्णविपर्ययश्च'** इत्यादि।

ऋग्वेदेऽपि सायणाचार्येणास्मिन् निपाते वर्णोपजन ऊरीकृतः—**'हये देवाः। छान्दसो वर्णोपजनः। हये देवाः=हे देवाः'**[3] इति। औत्तरकालिके संस्कृतवाङ्मये 'हये' इति निपातस्य व्यवहारः सर्वथाऽवरुद्धः।

**(४९) हिरुक्** [=विनार्थे]।

'हिरुक्' इति वैदिको निपातो विनार्थे व्यवहृतो दृश्यते। प्रमाणयति च श्रुतिः—'य ईं चकार न सो अस्य वेद, य ईं ददर्श हिरुगिन्नुतमात्'[4] इति। व्याख्यातश्च मन्त्रोऽयं स्कन्दस्वामिना—**'हिरुगित्यन्तर्हितनाम'** इति। हरदत्तमिश्रेणाप्ययं विनार्थ एव व्याख्यातः—**'हिरुक्-पृथक्शब्दौ विनार्थे'**[5] इति। परवर्तिसाहित्येऽस्य भाषिक उपयोगः प्रायेणावरुद्धः।

**(५०) हुरुक्** [=कुटिलार्थे]।

'हुरुक्' इति वैदिको निपातः कुटिलार्थे प्रयुक्तोऽवलोक्यते। तद्यथा—**'महां अदब्धो वरुणो हुरुग्यते'**[6] इति। उपबृंहितवान् च मन्त्रममुं सायणाचार्यः—**'हुरुक्=कुटिलं यते=गच्छते'** इति। अस्योपयोगस्त्वत्रोपसर्गवद् उपपन्नः—हुरुक्+√यत् [=प्रयत्ने] > हुरुग्यते इति।

**(५१) हंहो** [=आश्चर्ये]।

'हंहो' इति निपात आश्चर्यार्थकः। मन्ये यत् निपातद्वय—हम्+हो>हंहो—समाहारभूतोऽयम्। वैदिकसाहित्येऽस्य व्यवहारोऽदृष्टचरः। लौकिकेऽयमाश्चर्ये प्रयुक्तो दृश्यते। तथा हि महाभारते—**'हंहो वेदा यदि मता धर्माः केनापरे मताः'**[7] इति। उपश्लोकयामास मन्त्रममुं नीलकण्ठाचार्यः—**'हंहो इति विस्मये'** इति।

---

१. ऋ० सं०—५।५७।८—स्कन्दभाष्यम्।
२. शतपथब्रा०—११।५।५।१—सायणभाष्यम्।
३. ऋ० सं०—२।२९।४—सायणभाष्यम्।
४. तदेव—१।१६४।३२—स्कन्दभाष्यम्।
५. पदमञ्जरी—३।४।६२।
६. ऋ० सं०—९।७७।५—सायणभाष्यम्।
७. महाभारतम्—शान्तिप० २६८।९।

विष्णुविलासेऽप्ययं निपात आश्चर्यार्थ एव दृश्यते—**'हंहो स एष खलु विष्णुरघिष्णुरस्मत्'**[1] इति। विष्णुविलासस्य स्वोपज्ञवृत्तौ श्रीरामपाणिवादेनोक्तम्—**'हंहो=आश्चर्यमिदम्। आश्चर्येऽयं निपातः'** इति।

एवमत्र पुरस्तात् केचनैतादृशा निपाता अन्विष्टा विमृष्टाश्च येषामुपलब्धिर्वाङ्मयनिरीक्षणाधीनैव। न हीमे चादिपाठेषु द्रष्टुं शक्याः। अत एव स्थिरदेवविदुषोक्तं यद् गणपाठास्त्वनियता एव[2]। मन्ये यदन्येऽप्येवंविधा निपाता भवेयुर्गैर्वाण्याम्, येषां लब्धिः किल ऋचां निरीक्षणाधीना स्यात्। अत्राधस्ताद् माधवभट्टस्य श्लोकममुं स्मारं स्मारं विरमामः—

**ग्रन्थेऽस्ति पदसंख्येति यत्नो न भवतोस्ततः।**
**पदसंख्या च भवतोर्वाच्या ग्रन्थं निरीक्ष्य तम्**[3]॥ इति।

**अनुकरणप्रतिरूपका निपाताः**

प्रकरणेऽस्मिन् किलानुकरणप्रतिरूपकाणां निपातानां सैद्धान्तिकी प्रायोगिकी च गवेषणा विधास्यते। यथा पुरस्तादसकृद् व्याख्यातं यत्—उपसर्ग-विभक्ति-स्वर-सर्वनामप्रतिरूपकाश्च निपाता भवन्तीति। तथैव अनुकरणप्रतिरूपका अपि निपाता ऊरीकर्तव्याः। अनुकरणं हि नाम प्रकृतिक्रोडे सङ्क्रम्यमानानां तासां तासां ध्वनिमूलिकानां क्रियाणां क्रियते। वैविध्यपूर्णायां प्रकृतौ तत्तन्निमित्तवशात् चित्रा ध्वनयो हठात् समुद्भवन्ति, लीयन्ते च। चित्रात्मकान् तान् ध्वनिग्रामान् तथैव मानवमनोभावोऽनुकरोति। यतो हि तान् प्राकृतिकान् भावान् अभिव्यङ्क्तुं वर्णात्मिकाऽक्षरात्मिका वा भाषा न प्रभवति। स्वर-वर्णात्मिकाया वाचः प्रसरस्तु सङ्कल्पाधीनः। प्रथमं तावद् वक्ता मनसा ध्यायति, सङ्कल्पयति वा, तदनु वाचा वदति। अर्थात् मनसा सुचिन्तितो ह्यर्थो वाचाऽभिव्यज्यते। श्रुतिरपि सभाजयति सिद्धान्तममुम्—**'प्रजानां रेतो हृदयम्, हृदयस्य रेतो मनो मनसो रेतो वाग्वाचो रेतः कर्म'**[4] इति। अन्यत्रापि श्रुत्या समर्थ्यते सिद्धान्तोऽयम्—**'यद्धि मनसा ध्यायति तद्वाचा वदति'** इति। एवमक्षरात्मकैः पदैः सुचिन्तिताः सङ्कल्पिता वा ह्यर्था अभिव्यज्यन्ते, अनुकरणात्मकैस्तु सांयोगिकाः। एकस्य पितृभूमिर्मनः, अपरस्य तु प्रकृतिः। अत एवानुकरणमूलकाः शब्दा इतरशब्दनिर्व्यपेक्षा भवन्ति—अर्थात् सम्पूर्णो वाक्यार्थ एकेनैवानुकरणशब्देन स्फोट्यते। न हि तत्र कर्ता-कर्म-क्रिया-विशेषण-सर्वनाम-प्रभृतिपदानामपेक्षा क्रियते। यथा देवदत्तस्य एक एव पुत्रः, स एव ज्येष्ठः, स एव कनिष्ठः, स एव मध्यमश्च, तथैव एक एवानुकृतः शब्दः कर्ता, कर्म, क्रिया च भवति।

---

१. विष्णुविलासः—४।५०—श्रीरामपाणिवादकृतः।
२. मेघसन्देशः—३६—स्थिरदेवव्याख्या।
३. ऋग्वेदानुक्रमणी—८।४।१४।
४. ऐतरेयारण्यकम्—२।१।३।

अत्रावस्तादेवंविधानामेवानुकरणमूलकानां निपातानां परामर्शो विधास्यते। दृश्यन्ते ह्येवंविधान्यप्युदाहरणानि गैर्वाण्यां यत्रानुकरणमूलका एव शब्दास्तत्तद्ध्वन्युच्चारयितॄणां संज्ञात्वेन परामृष्टाः। सभाजयति च तत्रभवान् यास्काचार्यः—**'दुन्दुभिरिति शब्दानुकरणं द्रुमो भिन्न इति वा दुन्दुभ्यतेर्वा स्याच्छब्दकर्मणस्तस्यैषा भवति'**[1] इति। प्रसङ्गेऽस्मिन्नाचार्यस्यायमेवाशयो यद् अभिहन्यमानो दुन्दुभिः—'दुम्-दुम्' इति यथा शब्दं करोति तद्ध्वनिग्राम एव तस्य संज्ञात्वमापन्नः। प्रमाणितञ्च दुर्गाचार्येणापि—**'दुन्दुभिः—अस्य योऽभिधेयः, तस्य शब्दानुकरणम्=आत्मनो नामधेयप्रतिलम्भनिमित्तम्। तथैवासावभिहन्यमानः शब्दं करोति दुन्दुभिरिति, तदेव तस्य नाम'** इति।

अन्यत्रापि सुस्पष्टमभिहितमाचार्ययास्केन यत् तत्तद्ध्वन्युच्चारयितॄणां शकुनीनां ते ते ध्वनय एव तेषां संज्ञाप्रवृत्तिनिमित्तभूताः। तद्यथा—**'कुत्सायां काक इति शब्दानुकृतिस्तदिदं शकुनिषु बहुलम्'**[2] इति। काकस्तु का! का! इत्येवंविधमुच्चारणं करोत्येव। कोकिलोऽप्येवमेव—कु-कु-इत्यव्यक्तमुच्चारणं करोति। व्याख्याति च दुर्गाचार्यः—**'काकोऽयमुच्यते—का कादिशब्दान् उदाहरणप्रसक्तान् निर्ब्रवीति—काक इति शब्दानुकृतिः। अनुकरणमनुकृतिः शब्दस्यानुकृतिः। यादृशमेवासौ शब्दं करोति, तथैवानुकृता तस्य नामापि भवति शब्दस्यानुकृतिः। स हि काकु इति वोच्यते, तस्मात् स काक इत्युच्यते'** इति।

एवमेव—डमत् + डमत् > डमरुः, ढक्का < ढक् + ढक् > ढक्का—प्रभृतयोऽपि संज्ञाशब्दा अनुकरणमूलका एव। अनुकरणपरायणेन सिंहेनापि 'हुम्' इति शब्दः क्रियत एव। व्याख्याति च भारविः—'अनुहुँकुरुते घनध्वनिं न हि गोमायुरुतानि केसरी'[3] इति।

इत्थं प्रसङ्गोपात्ताः संस्कृतवाङ्मये लब्धप्रसराः केचनानुकरणमूलका निपाता अत्र विमृश्यन्ते।

**(१) अक्खली** [ = मण्डूकानामव्यक्तशब्दार्थे ]।

'अक्खली' इति अनुकरणप्रतिरूपो निपातो मण्डूकध्वनिमनुकरोति। तथा हि ऋग्वेदे—**'अक्खलीकृत्या पितरं न पुत्रो अन्यो अन्यमुपवदन्तमेति'**[4] इति। व्याख्याति च मन्त्रममुं सायणाचार्यः—**'अक्खल इति शब्दानुकरणम्। अक्खलशब्दं कृत्वा पुत्रः पितरमिव अन्यो मण्डूको वदन्तम्=शब्दयन्तम् अन्यं मण्डूकम् उप एति=प्राप्नोति'** इति। अनुकरणमूलकस्यास्य निपातस्य प्रयोगोऽत्रोपसर्गवत् कृतो वर्तते—अक्खली+√कृ [=करणे] > अक्खलीकृत्य। प्रायेणानुकरणमूलकानां निपातानामुपयोग उपसर्गवदेव दृश्यते।

---

१. निरुक्तम्—९।१२।
२. तदेव—३।४।
३. किरातार्जुनीयम्।
४. ऋ० सं०—७।१०।३३—सायणभाष्यम्।

**(२) अलला** [ =नदीप्रपतनजन्यशब्दानुकरणार्थे] ।

'अलला' इति निपातो नदीवीचिसंक्षोभजन्यशब्दानुकरणार्थे प्रयुक्तो दृश्यत ऋग्वेदे । तथा हि मन्त्रः—**'एता अर्षन्त्यलला भवन्तीर्ऋतावरीरिव संक्रोशमानाः'**[1] इति ।

व्याख्यातवान् च मन्त्रममुं सायणाचार्यः—**'अलला भवन्तीः=अललेत्येवंरूपं शब्दं कुर्वत्यः ऋतावरीरिव उदकवत्य इव एता नद्यः संक्रोशमानाः अर्षन्ति=गच्छन्ति'** इति । माधवभट्टेन तु 'अलला' इति निपातो धेनूनां शब्दानुकरणार्थे व्याख्यातः । 'अलला' इत्यस्यापि भूधातुनोपसर्गवद् व्यवहारोऽवलोक्यते ।

**(३) आष्** [ = मार्जारशब्दानुकरणार्थे] ।

'आष्' इति अनुकरणप्रतिरूपको निपातो मार्जारस्य शब्दानुकृतौ दृश्यते । तथा हि श्रुतिः—**'काण्वो वा एतत्सामर्ते निधनमपश्यत् सन् प्रत्यतिष्ठत् स वृषदंशस्याषिति क्षुवत उपाशृणोत्'**[2] इति । व्याक्रियते च मन्त्रोऽयं सायणाचार्येण—**'आष् इति करणम्=उच्चारणम् आष्कारः'** इति । अयमपि √कृ-धातुना सहोपसर्गवद् व्यवहृतोऽत्र ।

**(४) कट्** [ = क्रौर्ये] ।

'कट्' इति शब्दानुकरणमूलको निपातो वाचः क्रौर्यार्थे प्रयुक्तोऽवलोक्यते । तथा हि सत्याषाढश्रौतसूत्रे—**'वाचः क्रूराण्यारण्यकश्रुत्या प्रदर्शितानि—खट्, फट्, कट्—इति वाचः क्रूराणि'**[3] इति । 'कट्' इत्यनुकरणमूलकनिपातस्येव 'खट्', 'फट्' इत्यनयोरपि स्थितिरवगन्तव्या ।

**(५) किकिरा** [ = जर्जरीभूतपावकध्वन्यनुकृतौ] ।

'किकिरा' इति किलानुकरणमूलको निपातो जर्जरीभूतपावकध्वन्यनुकृतौ व्यवहृतोऽवलोक्यते । तथा हि श्रुतिः—**'आ रिख किकिरा कृणु पणीनां हृदया कवे'**[4] इति । विशदीकृतश्च मन्त्रोऽयं स्कन्दस्वामिना—**'किकिरा कृणु—किकिरशब्दः खर्परस्य वा वाचको जर्जरीभूतस्य पावकतो वा । श्लक्ष्णानां वा विशरणवतां यः शब्दः तदनुकरणम् । खर्पराणि, जर्जराणि विशरणवन्ति वा कुर्वित्यर्थः'** इति । सायणाचार्येण तु विकीर्णार्थे, शिथिलार्थे वा व्याख्यातोऽयं शब्दः । मन्ये यद् हिन्दीभाषायां प्रयुज्यमानः 'किरकिरा' इति शब्दः 'किकिरा' इत्यस्माद् विकसितः । अस्य व्युत्पत्तिस्तु—किर् + किर् + √कृ [ = करणे] > किकिरा—इति सिद्ध्यति ।

---

१. ऋ० सं०—४।१८।६ । २. तां० ब्रा०—८।२।२—सायणभाष्यम् ।
३. सत्याषाढश्रौतसूत्रम्—१०।७।२२—गोपीनाथभट्टव्याख्या ।
४. ऋ० सं०—६।५३।७—स्कन्दभाष्यम् ।

**(६) चिश्चा** [ =इषुध्वन्यनुकरणार्थे] ।

'चिश्चा' इति शब्दानुकरणप्रतिरूपो निपात इषुपुङ्खघर्षणशब्दानुकाररूपः । तथा हि श्रुतौ—**'बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य'**[१] इति ।

व्याख्यातवान् मन्त्रममुं सायणाचार्यः—**'चिश्चा कृणोति—चिश्चेति शब्दानुकृतिः । इषुषु ऊद्ध्रियमाणेषु इषुधिश्चिश्चा शब्दं करोति'** इति ।

निरुक्तव्याख्यात्रा दुर्गाचार्येणाप्युरीकृतं सायणमतम्—**'चिश्चा इति शब्दानुकरणम् । चिश्चिदित्येवं शब्दं करोति'**[२] इति । मन्ये यद् भोजपुरीभाषायां प्रयुज्यमानस्य—'चेउं-चेउं' इति ध्वनिग्रामस्य विकासस्तत एव जातः ।

**(७) जञ्झना** [ = ज्वालाजन्यध्वन्यनुकृतौ] ।

'जञ्झना' इत्यनुकरणरूपो निपातो ज्वालाजन्यध्वन्यनुकृतौ व्यवहृतोऽवलोक्यते । तथा हि मन्त्रः—**'जिह्वाभिरह नन्नमदर्चिषा जञ्जणाभवन्'**[३] इति । संश्लोकयामास मन्त्रममुं सायणाचार्यः—**'अर्चिषा = तेजसा जञ्जणाभवन् ज्वलन् । जञ्जणाभवन्, मन्मलाभवन् इति ज्वलतिकर्मसु पाठात्'** इति । अत्र √भू धातुना सहास्योपसर्गता दृश्यते ।

**(८) फूत्** [=तीव्रवायुशब्दानुकृतौ] ।

'फूत्' इति निपातस्तीव्रवायुशब्दानुकृतौ दृश्यते । तथा हि भागवते—**'ववौ वायुः सुदुःस्पर्शः फूत्कारानीरयन्मुहुः'**[४] इति । व्याख्यातश्च श्लोकोऽयं श्रीधराचार्येण—**'फूत्कारानिति तीव्रवायुशब्दानुकरणम् । फूदिति निपातः'** इति । √कृ धातुना सहास्योपसर्गवद् व्यवहारो दृश्यते ।

**(९) मस्मसा** [=भक्षणजन्यशब्दानुकृतौ] ।

'मस्मसा' इति शब्दानुकरणमूलको निपातो भक्षणजन्यध्वन्यनुकृतौ विनियोजितो दृश्यते । तथा हि शतपथे—**'सर्वं च मस्मसा कुर्व्विति'**[५] इति । उपबृंहितवान् मन्त्रममुं सायणाचार्यः—**'मस्मसा—अनुकरणशब्दोऽयम् । यथा भक्षणसमये—मस्मसा शब्दं कुर्वन्ति—तथा कुर्वित्यर्थः'** इति । काठकसंहितायामयं मूर्द्धन्यान्तो दृश्यते—**'मष्मषा करम्'**[६] इति । मैत्रायणिसंहितायां तु—**'मृस्मृसा'**[७] इति रूपमुपलभ्यते । पैप्पलादे तु **'मृष्मृषा'**[८] इत्येवंरूपेणास्य व्यवहारो दृष्टचरः । सर्वत्रायं √कृ—धातुनोपश्लिष्टोऽवलोक्यते उपसर्गवत् ।

---

१. ऋ० सं०—१।७५।५—सायणभाष्यम् ।
२. निरुक्तम्—९।२—दुर्गवृत्तिः ।
३. ऋ० सं०—८।४३।८—सायणभाष्यम् ।
४. भागवतम्—३।१७।५—श्रीधरव्याख्या ।
५. शतपथब्रा०—६।६।३।१०—सायणभाष्यम् ।
६. काठकसं०—१६।७ ।
७. मै० सं०—२।७।७ ।
८. पै० सं०—१।२९।३ ।

(१०) मुट्मुट् [=अव्यक्तशब्दानुकृतौ]।

'मुट्-मुट्' इत्यभ्यस्तोऽनुकरणप्रतिरूपो निपातोऽव्यक्तशब्दानुकरणे व्यवहृतो दृश्यते। तथा चाथर्वणे—**'ये च मुटमुटाः कुम्भमुष्का अयाशवः'**[1] इति। व्याख्याति स्म च मन्त्रमिमं सायणाचार्यः—**'मुट्मुटाः=मुट्मुट् इति शब्दं कुर्वन्तः। मुट्मुट् इत्यव्यक्तशब्दानुकरणार्थे'** इति।

(११) वव [=रक्तक्षरणध्वनौ]।

'वव' इति निपातो रक्तक्षरणध्वन्यनुकृतौ प्रयुक्तोऽवलोक्यते। तथा च सप्तशत्याम्—**'ववाह रक्तं पुरुषास्ततो जाताः सहस्रशः'**[2] इति। व्याख्यायते च श्लोकोऽयं शन्तनुना—**ववेति निपातो रक्तनिःसरणजनितध्वनिमाह। वव इत्येवं शब्दमाहुः। उवाहेत्यर्थे वव इति शब्दानुकरणम्। आहेति च विभक्तिप्रतिरूपककालसामान्यवाची निपातः। निपातानामर्था अनिर्धारणीयाः। तदुक्तम्—**

**पाठा व्याख्या निपातानां दृश्यन्ते चैव स्वैरिणः।**
**प्रयोग एव भगवांस्तानवस्थापयत्यपि** ॥ इति।

(१२) शू [=अव्यक्तशब्दानुकृतौ]।

'शू' इति अनुकरणप्रतिरूपको निपातोऽव्यक्तानुकरणार्थे प्रयुक्तो दृश्यते। तथा हि ऋक्संहितायाम्—

**'यत्ते सादे महसा शूकृतस्य'**[3] इति। व्याख्यातश्च मन्त्रोऽयं सायणाचार्येण—**'शूकृतस्य—शब्दानुकरणमेतत्। शूत्कारं कुर्वतः'** इति। 'शू' इत्यव्यक्तानुकरणप्रतिरूपकस्यापि निपातस्य √कृ धातुना सहोपसर्गत्वमवलोक्यते।

(१३) सीत् [=कन्दर्पभोगप्रस्तावे]।

'सीत्' इत्यव्यक्तानुकरणप्रतिरूपको निपातः। कन्दर्पभोगप्रस्तावेऽस्य विनियोगो दृश्यते। सभाजयति च अमरकीर्तिः—**'कन्दर्पभोगप्रस्तावशब्दे सीत्कृतमित्यव्यक्तानुकरणं भणितम्'**[4] इति। सहजकीर्तिना तु चतुर्विधमस्योच्चारणमुक्तम्—मन्द्रध्वनौ, मध्यध्वनौ, तारध्वनौ, सप्रणादध्वनौ च। तद्यथा—

**मन्द्रा मध्यास्तथा ताराः सप्रणादस्तु सीत्कृतम्।**
**जातो गुणानुरागाभ्यां शब्दो नृणां स एव च**[5] ॥ इति।

(१४) हिङ् [=गवामाह्वाने]।

'हिङ्' इति गवामाह्वानानुकरणप्रतिरूपको निपातः। व्यवहृतश्च ऋक्संहितायाम्—**'मूर्धानं हिङ्कृणोन्मातवा उ'**[6] इति। व्याख्यातश्च मन्त्रोऽयं सायणाचार्येण—

---

१. अथर्ववेदः—८।६।१५—सायणभाष्यम्। २. दुर्गासप्तशती—८।४५—शान्तनवीव्याख्या।
३. ऋ० सं०—१।१६२।१७—सायणभाष्यम्।
४. धनञ्जयनाममाला—१०६—अमरकीर्तिव्याख्या।
५. सिद्धशब्दार्णवः—२५४—५५। ६. ऋ० सं०—१।१६४।२८—सायणभाष्यम्।

'हिङ्कृणोत् = हिङ्कारमकरोत्' इति । माधवभट्टेनायं निपातो गवामाह्वानानुकरणार्थे व्याख्यातः ।

(१५) हूम् [ = क्रोधे] ।

'हूम्' इति शब्दानुकरणप्रतिरूपो निपातः प्राधान्येन क्रोधार्थे प्रयुक्तः । तथा हि महाभारते—

हूं-हूं-हूंकारपाराय हूंहूंकारप्रियाय च ।
नमः शमशमे नित्यं गिरिवृक्षालयाय च[1] ॥ इति ।

उपश्लोकयामास मन्त्रममुं नीलकण्ठभट्टः—'हूंकारः क्रोधवर्णस्तस्य परोऽन्तः शमः । हूंकारो याज्ञिकप्रसिद्धः'—'हूं इति हिंकृत्य भूर्भुवः स्वरोमिति जपत्येषोऽभिहिंकार इति । हूं-हकार आकाशः, उकारः षष्ठी शिवमूर्तिः सूर्यस्ताभ्यां नामरूपात्मकः प्रपञ्चो लक्ष्यते । मकारस्तस्य कारणमीश्वरः' इति ।

अमरकीर्तिना[2] तु चतुर्ष्वर्थेष्वयं पठितः—मन्त्रे, भटे, कुत्सने, अनिच्छायां च । अस्यापि विनियोगः √कृ-धातुना सहावलोक्यत उपसर्गवत् ।

एवमत्र पुरस्तात् केचनानुकरणप्रतिरूपका निपाता विमर्शं नीताः । एवमेव—'फल्'[3], 'बब्रव'[4], 'बाल'[5], 'विविवा'[6], 'भर्भरा'[7], 'शल्'[8]—प्रभृतयोऽनुकरणप्रतिरूपा निपाता अङ्गीकर्तव्याः ।

संदर्भेऽस्मिन्नत्रैतदप्यवधारणीयमस्ति यद्यथा निपातानां संख्याप्रसङ्गेऽसकृदुद्घोषितं वर्तते संस्कृतवाङ्मये—

इयन्त इति संख्यानं निपातानां न विद्यते ।
प्रयोजनवशा ह्येते निपात्यन्ते पदे पदे[9] ॥ इति ।

तथैवानुकरणप्रतिरूपकाणां निपातानामपि परिसंख्यानं कर्तुं न शक्यते । यतो हि किलानुकरणप्रतिरूपका निपाताश्चित्रात्मके प्रकृतिक्रोडे संघट्यमानैः सांयोगिकैर्घातप्रतिघातैरुद्भवन्ति । अतो यथा प्रकृतिसङ्घाता गणनातीतास्तथैव तदनुकृतयोऽपीति शम् ।

•

---

१. महाभारतम्—मोक्षधर्मप० २८४।१०५ ।
२. धनञ्जयनाममाला-१०६-अमरकीर्तिभाष्यम् ।
३. अथर्ववेदः—५।१८।१—सायणभाष्यम् ।
४. तै० सं०—७।१।१०—भट्टभास्करभाष्यम् ।
५. तदेव—३।३।१० ।
६. मै० सं०—१।६।५ ।
७. तदेव—२।२।१ ।
८. शां० श्रौ० सू०—१२।२३।२ ।
९. बृहद्देवता—२।९५ ।

# प्रथमं परिशिष्टम्

## (प्रसङ्गादागतानां श्रुति-स्मृति-सूत्रवचनानामकारादिक्रमेणोपन्यासः)


| वाक्यानि | सन्दर्भाः | पृष्ठानि |
|---|---|---|
| **अ** | | |
| अकर्मका अपि धातवः | (अष्टा १।३।३८६–प्रदीपः) | १६२ |
| अक्खलीकृत्या पितरं न पुत्रः | (ऋ० सं० ७।१०।३३) | २६२ |
| अग्न आज्यस्य व्यन्तु | (श० ब्रा० २।२।३।१७) | ३४ |
| अचक्रया यत्स्वधया | (ऋ० सं० ४।२६।४) | ४१ |
| अच्छ श्रदन्तरित्येतान् | (बृहद्देव० २।९७) | १९१ |
| अङ् गार्ग्यगालवयोः | (अष्टा० ७।३।९९) | ३० |
| अडादीनां व्यवस्थार्थं | (वा० प० १।१८०) | १५८ |
| अतिरतिक्रमणे च | (अष्टा० १।४।९५) | ७१ |
| अतेरर्थोऽतिक्रमणं | (ऋग्वेदानु० ७।१५) | ७७ |
| अथ मा विश्वाः पृतना | (ऋ० सं० ८।९६।७) | १९२ |
| अथ ये ब्राह्मणानां | (ऋग्वेदानु० ८।१०) | ८२ |
| अथ विंशतिरुपसर्गाः | (शु० य० प्रस्तावना) | ११७ |
| अथ हैनं शैब्यः | (प्रश्नोप० ५।१) | २४ |
| अथाद्येति समानार्थौ | (ऋग्वेदानु० ३।६।१) | २४४ |
| अथाप्याद्यन्तविपर्ययो | (निरु०२।२९) | ९२ |
| अद्या देवा उदिता | (ऋ० सं० १।११५।६) | २४३ |
| अधः स्विदासीदुपरि | (ऋ० सं० १०।१२९।५) | २३८ |
| अधा शयीत निर्ऋतेः | (ऋ० सं० १०।९५।१५) | १२९ |
| अधिकव्ययोऽव्ययः | (महाभार० ४।२८।२६–टी०) | ५२ |
| अधिपरी अनर्थकौ | (अष्टा० १।३।९३) | ७१ |
| अधिरीश्वरे | (अष्टा० १।४।९७) | १२७ |
| अधेः प्रहसने | (अष्टा० १।३।३३) | ७१ |
| अनन्ताः खल्वनन्तार्थाः | (प्र० सर्व० ५) | ६ |
| अनयोरेव नामाख्यातयोः | (वा० प० ३।१।१–टी०) | ७५ |
| अनवर्णे इमे भूमी | (तै० आ० १।८।२८) | ३१ |
| अनाघ्रातं पुष्पं | (अभि० २।१०) | २५ |
| अनामयित्नुभ्यां त्वा | (ऋ० सं० १०।१३८।७) | २१४ |

